चतुष्पञ्चाशतो राज्ञाममात्याद्याः पृथक् पृथक् ।
सचतुर्विंशतीदं हि मण्डलं त्रिशतं मतम् ॥ २९ ॥
सप्तप्रकृतिकं यत्तु विजिगीषोररेश्च तत् ।
चतुर्दशकमेवेह मण्डलं परिचक्षते ॥ ३० ॥
मण्डलं त्रिकमित्याहुर्विजिगीष्वरिमध्यमाः ।
मित्रयुक्ताः पृथक् चैते षट्कमित्यपरे जगुः ॥ ३१ ॥
अमात्याद्याः प्रकृतयः एकैकस्यैव भूपतेः ।
मण्डलं मण्डलाविदः षट्त्रिंशत्कं प्रचक्षते ॥ ३२ ॥

---

सचतुर्विंशतित्रिशतं मण्डलमिति । मौलाश्चतुष्पञ्चाशद्राजानः द्रव्यप्रकृतयश्च सप्ततिशतद्वयमित्यर्थः ॥ २९ ॥

विजिगीषोररेश्च सप्तप्रकृतिकमित्येवम् । ततश्चतुर्दशकं भवति । तावति कार्यस्य चिन्त्यमानत्वात् ॥ ३० ॥

तथा त्रिकेऽपि मण्डले मित्रयुक्ता इति । यदा तन्मित्राण्यपेक्ष्य चिन्ता, तदा षट्कं परं भवति ॥ ३१ ॥

षट्त्रिंशत्कमिति । अनन्तरोक्ताः षड् राजप्रकृतयः त्रिंशच्च द्रव्यप्रकृतयः ॥ ३२ ॥

---

( चतुरिति । ) अनन्तरोक्तानां चतुःपञ्चाशतां राज्ञां अमात्याद्याः पृथक् पृथक् सचतुर्विंशति मण्डलं त्रिशतं; चतुर्विंशत्यधिकशतत्रयं अपरं मण्डलं कल्पयन्तीत्यर्थः । समूहवाचित्वान्मण्डलशब्दस्य ॥ २९ ॥

( सप्तप्रकृतीति । ) विजिगीषोररेश्च तत् सप्तप्रकृतिकं राज्यं चतुर्दशभेदभिन्नं मण्डलं समूहं परिचक्षते । षाड्गुण्यप्रयोगेऽस्य सन्निहितत्वात् ॥ ३० ॥

( मण्डलमिति । ) मण्डलं त्रयमित्याहुः त्र्यवयवं त्रिविधं मण्डलं विजिगीष्वरिमध्यमाः । मित्रयुक्ताः पृथक् पृथङ्मित्रेण षट्कमित्यपरे जगुराचार्या इति ॥ ३१ ॥

( अमात्याद्या इति । ) अमात्याद्याः प्रकृतय एकैकस्यानन्तरोक्तभूपतिषट्कस्य मण्डलविदः षट्त्रिंशत्कं मण्डलं प्रचक्षते परे गुरवः ॥ ३२ ॥

सप्तप्रकृतिकाः सर्वे विजिगीष्वरिमध्यमाः।
एकविंशतिरित्याहुरपरे परिवादिनः॥ ३३॥
चत्वारः पार्थिवा मौलाः पृथङ्मित्रैः सहाष्टकम्।
अमात्यादिभिरेते च जगत्यक्षरसंमिताः॥ ३४॥
विजिगीषोः पुरस्ताच्च ये च पश्चात्प्रकीर्तिताः।
दशकं मण्डलमिदं मण्डलज्ञाः प्रचक्षते॥ ३५॥
दशानां भूमिपालानाममात्याद्याः पृथक् पृथक्।
मण्डलं मण्डलविदः षष्टिसंख्यं प्रचक्षते॥ ३६॥
प्राग्यौ द्वौ विजिगीषुश्च पश्चिमौ चेति पञ्चकम्।
अमात्याद्याः पृथक् चैषां त्रिंशत्कं हि प्रचक्षते॥३७॥

---

सप्तप्रकृतिकाः सर्वे, आत्मप्रक्षेपात्॥ ३३॥

चत्वारो मौलाः अरिविजिगीषुमध्यमोदासीनाः। एते चेति, अष्टौ राजानः। जगत्यक्षरसाम्मिता इति। जगती नाम छन्दोवृत्तिरष्टाचत्वारिंशदक्षरा, तत्संख्यं मण्डलं भवतीत्यर्थः॥ ३४॥

दशकं मण्डलं मध्यमोदासीनावपास्य योज्यम्॥ ३५॥

षष्टिसंख्यमिति। दश राजप्रकृतयः, पञ्चाशद्द्रव्यप्रकृतयः॥ ३६॥

पञ्चकमिति। विजिगीषुः शत्रुमित्रे, पार्ष्णिग्राहाक्रन्दो चेत्यर्थः। त्रिंशत्कमिति। पञ्च राजप्रकृतयः, पञ्चविंशतिर्द्रव्यप्रकृतयः॥ ३[illegible]॥

---

(सप्तेति।) इति प्रतीतम्॥ ३३॥

(चत्वार इति।) चत्वारो मौला विजिगीष्वरिमध्यमोदासीनाः पृथङ्मित्रैः सहाष्टकं मण्डलमिति शेषः। अमात्यादिभिः पञ्चभिः प्रकृतिभिरेते च पार्थिवा जगत्यक्षरसम्मितामिति जगतीच्छन्दः—पादचतुष्टयेऽष्टाचत्वारिंशदक्षराणि भवन्तीति अष्टाचत्वारिंशत्कं मण्डलमिति॥ ३४॥

(विजिगीषोरिति।) इति व्याख्यातपूर्वम्॥ ३५॥

(दशानामिति।) श्लोकव्याख्यानं प्रतीतम्॥ ३६॥

(अरीति।) अरिमित्रे नेतुर्विजिगीषोः पुरोऽग्रतो भूम्यनन्तर भूम्येकान्तरौ पश्चिमौ च तथैव भूम्यनन्तरभूम्येकान्तरौ विजिगीषुणा सह पञ्चकम्। तथा अमात्याद्याः पृथक् चैषां त्रिंशत्कं परिचक्षते॥ ३७॥

अरेरप्येवमेवेति दृष्टं दृष्टिमतां वरैः ।
पञ्चकं मण्डलं न्याय्यं त्रितयं च मनीषिणः ॥ ३८ ॥
द्वे एव प्रकृती न्याय्ये इत्युवाच पराशरः ।
अभियोक्तृप्रधानत्वात् तथान्यो योऽभियुज्यते ॥ ३९ ॥
परस्पराभियोगेन विजिगीषोररेस्तथा ।
अरित्वविजिगीषुत्वे एका प्रकृतिरित्यतः ॥ ४० ॥
इतिप्रकारं बहुधा मण्डलं परिचक्षते ।

---

अरेरप्येवमेवेत्यतिदेशः । सोऽपि विजिगीषुवन्मण्डलं चिन्तयतीति, तस्या-प्ययं यथोक्तभेदो द्रष्टव्यः । एषां कतमन्न्याय्यमिति परमतेनाह—पञ्चकमि-त्यादि । आक्रन्देन पार्ष्णिग्राहं निवर्त्य शुद्धपृष्ठस्य मित्रेण चोत्पादितकोपं अरिं पश्चादभियुञ्जानस्य विजिगीषोः कार्यसंसिद्धिरिति पञ्चकं न्याय्यम् । त्रितयं चेति । अरिमभियुञ्जानस्य मध्यमेनैवैकेन शत्रुसिद्धिरिति तन्न्याय्यम् ॥ ३८ ॥

द्वे एव प्रकृती इति । अरिविजिगीषू । तत्राभियोक्तृत्वाद्विजिगीषुः प्रधानम् । इतरश्चाप्रधानमभियोज्यत्वात् । शेषाश्च स्वस्वमण्डलान्तर्गतत्वाद-भियोक्त्रभियोज्ययोरेवानुप्रविष्टाः ॥ ३९ ॥

यथा विजिगीषुरभियुङ्क्ते, तथा शत्रुरपि प्रत्यभियुङ्क्ते इति परस्पराभि-योगित्वम् । ततश्च तस्यामवस्थायां द्वयोरप्येकरूपत्वादेका प्रकृतिरिति पराशरः । एकसंख्यं मण्डलमिति यावत् ॥ ४० ॥

इतिप्रकारमिति, एवंभेदम् । इदानीं सर्वमण्डलसंग्राहिमण्डलमाह—स्फुटं

---

( अरेरिति । ) यथा विजिगीषोस्तथा शत्रोरनन्तरोक्तन्यायेन पञ्चकं त्रिं-शत्कं चेति सर्वं योज्यम् ॥ ३८ ॥

( द्वे इति । ) न्याय्ये न्यायोपपन्ने । इत्युवाच पराशरो मुनिः । अभि-योक्त्री विजिगीषु( प्रकृतिः तथान्या या अभियुज्यते यातव्याख्या ॥ ३९ ॥

( परस्परेति । ) परस्पराभियोगेन यथा विजिगीषुणा अरिः । एवमरि-णापि विजिगीषुरभियुज्यते । एवमेव विजिगीषुरभियोक्ता तथा शत्रुरपि अरि-रपि । एवं च स एवारिः स एव विजिगीषुरित्यतः कारणात् एकैव प्रकृतिरित्येक-प्रकृतिकमिदं मण्डलमित्यन्ये ॥ ४० ॥

उपसंहरन्नाह—( इतीति । ) इतिप्रकारं बहुधा मण्डलं परिचक्षते पूर्वा-

सर्वलोकप्रतीतं हि स्फुटं द्वादशराजकम् ॥ ४१ ॥
अष्टशाखं चतुर्मूलं षष्टिपत्रं द्वये स्थितम् ।

---

द्वादशराजकमिति । स्फुटं युज्यमानकं, कस्मादिति चेत्सर्वलोकप्रतीतत्वात् । तथा हि—तद्व्यतिरेकेणान्यस्य सर्वस्याप्यप्रसिद्धत्वादिहैव संग्रहः । यथा—येऽपि महर्षिप्रोक्ते षट्त्रिंशत्के मण्डलेऽभ्यधिका "अरिमित्रे पृथक् पृथक्" इति ( सर्गः ८—२३ ) गुरुप्रोक्ते चाष्टादशके "संयुक्तस्त्वरिमित्राभ्यामुभयारिस्तथा सुहृत्" इति। [ ८—२६ ] तथा विशालाक्षभाषिते चतुष्पञ्चाशत्के " मित्रशत्रू पृथक् पृथक् " इति [ ८—२८ ] तेऽप्ययर्यादीनामेव समन्ततो मण्डलीभूय तथावस्थितत्वादिति द्वादशराजकादव्यतिभिन्नाः, अमात्यादयोऽपि द्रव्यप्रकृतित्वात्तदवयवभूता इति द्वादशराजकमेव सर्वथा प्रतिपद्यते ॥ ४१ ॥

तथा चौशनसम्-अष्टशाखं चतुर्मूलं षष्टिपत्रं द्वये स्थितम् । षट्पुष्पं त्रिफलं वृक्षं यो जानाति स नीतिवित् ॥ इति । तत्र मित्रादिभिश्चतुर्भिः पार्ष्णिग्राहादिभिश्चतुर्भिश्चाष्टशाखम् । अरिविजिगीषुमध्यमोदासीनैश्चतुर्मूलम् । द्रव्यप्रकृतिभिर्मूलशाखाश्रिताभिः षष्टिपत्रम् । दैवे मानुषे च कर्मणि स्थितम् । षड्गुणाः पुष्पाण्यस्येति षट्पुष्पम् । क्षयस्थानवृद्धयस्तिस्रः फलान्यस्येति त्रिफ-

---

चार्याः । कामन्दकिना बहुश्रुतत्वख्यापनार्थमयं ग्रन्थविस्तरदोषोऽपि न गणित इति । सर्वलोकप्रतीतं तु स्फुटं द्वादशराजकमिति ॥ ४१ ॥

तदेव समर्थयन्नाह—( अष्टशाखमिति । ) मण्डलं वृक्षत्वेन रूप्यते—चतुर्मूलमिति विजिगीष्वरिमध्यमोदासीना इति चत्वार्यपि मण्डलानि मूलानि यस्य । अष्टशाखमिति विजिगीष्वादीनां चतुर्णां मूलभूतानामरिमित्रे प्रत्येकमष्टौ राजानोऽष्टौ शाखा यस्य । षष्टिपत्रमिति विजिगीष्वादिद्वादशनृपाणां प्रत्येकममात्याद्याः पञ्च पञ्च प्रकृतय इति याः षष्टिस्ता एव पत्राणि यस्य । द्वये स्थितमिति दैवं पुरुषकार इति यदेव द्वयमाधारभूतं तत्र क्षेत्रभूते स्थितम् । षट्पुष्पमिति सन्धिविग्रहासनयानसंश्रयद्वैधीभावाः षडपि गुणाः षट् पुष्पाणि यस्य । त्रिफलमिति क्षयः स्थानं वृद्धिरित्यादयो ये षाड्गुण्यस्य फलभूता उत्तममध्यमावरलाभास्तान्येव फलानि यस्य । एवंभूतं मण्डलवृक्षं यो जानाति स नीतिवि-

षट्पुष्पं त्रिफलं वृक्षं यो जानाति स नीतिवित् ॥ ४२॥
इति मण्डलयोनिर्नाम द्वादशं प्रकरणम् ।

—·—

१३ अथ मण्डलशोधन ( चरित ) प्रकरणम् ।

पार्ष्णिग्राहस्तदासारः शत्रुमित्रे प्रकीर्त्तिते ।
आक्रन्दोऽथ तदासारो विजिगीषोरुदाहृते ॥ ४३ ॥
पुरो यायाद् विगृह्यैव मित्राभ्यां पश्चिमावरी ।

लम् । यो जानाति स नीतिवित् । एतन्मात्रत्वान्नयशरीरस्येति ॥ ४२ ॥
इति मण्डलयोनिर्नाम द्वादशं प्रकरणम् ।

—·—

१३ अथ मण्डलशोधन( चरित )प्रकरणम् ।

तस्मिन्मण्डले तद्विशुद्धचर्थं कथं वर्तेतेति षाड्गुण्यव्यापाररूपं मण्डल-चरितमुच्यते, तत्र पार्ष्णिग्राहादीनां शत्रुमित्रतायां प्रागविशेषस्यानुक्तत्वात् । यदाह–पार्ष्णिग्राह इत्यादि । शत्रुमित्रे इति । शत्रोर्मित्रे इत्यर्थः । विजिगीषोरुदाहृते मित्रे इत्येव ॥ ४३ ॥

तत्र द्वादशराजके शत्रुमण्डलमधिकृत्य वृत्तिमेकादशभिः श्लोकैराह–पुरो

दिति ॥ ४२ ॥

इति द्वादशं मण्डलयोनिप्रकरणम् ।

—·—

१३ अथ मण्डलशोधन चरित )प्रकरणम् ।

मण्डले षाड्गुण्यप्रयोगमभिधातुमाह–( पार्ष्णिग्राह इति । ) विजिगीषो-र्यातव्यं प्रति गच्छतः पार्ष्णिग्रहणेन विघ्नविधायी पृष्ठतो भूम्यनन्तरः । तदासार इति पार्ष्णिग्राहस्यैव भूम्येकान्तरं मित्रम् । द्वावपि शत्रुमित्रे प्रकीर्तिते शत्रोर्या-तव्यस्य मित्रे । आक्रन्द इति पार्ष्णिग्राहस्य भूम्यनन्तरः विजिगीषुणा पार्ष्णि-ग्राहनिग्रहणार्थं आक्रन्द्यते आहूयत इति । तदासार इति आक्रन्दस्य भूम्येका-न्तरो राजा आपदि त्राणार्थमासरतीति । द्वौ तावपि विजिगीषोरुदाहृते विजिगी-षोर्यातव्यं प्रति( गच्छतः )उदाहृते । मित्रे इत्यनुवर्तत इत्यर्थः ॥ ४३ ॥

( पुर इति । ) पुरोऽग्रतो यातव्यं प्रति यायात् । विगृह्यैवेति विग्रहं

पाश्चिमाविव पूर्वाभ्यामरिं तन्मित्रमेव च ॥४४॥
अरिमित्रस्य मित्रन्तु कृतकृत्येन भूयसा।
संस्तभ्योभयमित्रेण पश्चाद् गच्छेन्नरेश्वरः॥ ४५॥
आक्रन्देनात्मना चैव पार्ष्णिग्राहं प्रपीडयेत्।

---

यायादित्यादि। विगृह्यैवेति, अन्तर्भावितण्यर्थत्वाद्विग्राह्यैवेत्यर्थः। मित्राभ्यां पश्चिमावरी इति। पार्ष्णिग्राहमाक्रन्देन, आक्रन्दासारेण पार्ष्णिग्राहासारमिति यावत्। पश्चिमाविव पूर्वाभ्यां मित्राभ्यां पूर्वावरी विगृह्येति संबन्धः। कौ तावित्याह–अरिं तन्मित्रमेव चेति मित्रेण शत्रुं मित्रमित्रेण चारिमित्रमित्यर्थः ॥ ४४॥

अरिमित्रस्य मित्रमिति। अरिमित्रमित्रम् उभयमित्रेण संस्तभ्येति संबन्धः। तस्य विशेषणं कृतकृत्येन भूयसेति। अन्यथा ह्यसमापितस्वकार्यस्य स्वल्पतन्त्रस्य वा कथमुभयतो व्यापारः स्यात्। उभयमित्रेणेति विजिगीषोर्मित्रस्य चोभयोर्मित्रत्वात् मित्रमित्रेणेत्यर्थः। यस्तूभयसुहृत्प्रागुक्तः सोऽरिविजिगीष्वपेक्षया। पश्चाद्गच्छेद् यातव्यमित्यर्थात्सिद्धम् ॥ ४५॥

एवं तावदेकपार्श्वतो विधिरुक्तः। इदानीमुभयत्राप्याह–आक्रन्देनेत्यादि। आत्मनेति विजिगीषुमाह। आक्रन्देन तदासारमिति–पार्ष्णिग्राहासारम। आक्र-

---

कारयित्वा। मित्राभ्यामाक्रन्दतदासाराभ्याम्। पश्चिमौ पृष्ठस्थावरी पार्ष्णिग्राह-तन्मित्रे। पश्चिमाविव पूर्वाभ्यां मित्र–मित्रमित्राभ्याम्। अरिमिति यातव्यम्। तन्मित्रामीति यातव्यमित्रम्। विग्रहं कारयित्वेत्यनुवर्तते॥ ४४॥

(अरिमित्रस्येति। अरेर्मित्रस्य यातव्यमित्रस्य पुरतो यन्मित्रं तच्च कृतकृत्येन महोपकारेण भूयसोपचितशक्तिना संस्तभ्य निरुद्धविरुद्धचेष्टं कृत्वा गन्तव्यामित्रामित्रं स्तम्भितं कृत्वा उभयमित्रेण उदासीनेन। विशेषेण किमित्यसौ स्तम्भयति इति चेत् विजिगीषुणा कृतकृत्यः कृत इति। एवं कृत्वा पश्चात् गच्छेन्नरेश्वरो नान्यथेति॥ ४५॥

एतदेव समर्थयन्नाह–(आक्रन्देनेति।) आक्रन्देनात्मना (च) मध्यस्थं पार्ष्णिग्राहं प्रपीडयेत्। आक्रन्देन, तदासारमिति पार्ष्णिग्राहासारम्। आक्रन्दौ-

आक्रन्देन तदासारमाक्रन्दासारभागिना ॥ ४६ ॥
मित्रेण चात्मना चैव कुर्वीतोद्धरणं रिपोः ।
मित्रेण हि समित्रेण रिपुमित्रं प्रपीडयेत् ॥ ४७ ॥
अरिमित्रस्य मित्रस्य पीडनं पृथिवीपतिः ।
कुर्वीतोभयमित्रेण मित्रमित्रेण चैव हि ॥ ४८ ॥
अनेन क्रमयोगेन विजिगीषुः सदोत्थितः ।
पीडयेदहितं शत्रुं मित्राणामन्तरान्तरा ॥ ४९ ॥
पीड्यमानो ह्युभयतः सदोद्युक्तैर्मनीषिभिः ।
रिपुरुच्छेदमायाति तद्वशे वावतिष्ठते ॥ ५० ॥

---

न्दासारभागिनेति आक्रन्दविशेषणं, आक्रन्दासारसहितेनेति यावत् ॥ ४६ ॥

समित्रेणेति । मित्रेण मित्रमित्रेण चेत्यर्थः ॥ ४७ ॥

अरिमित्रस्य मित्रस्येति । अरिमित्रमित्रस्येति यावत् । उभयमित्रेणेत्यस्य स्फुटीकरणार्थमाह—मित्रमित्रेण चैव हीति ॥ ४८ ॥

उत्थितः उद्युक्तः । अहितं प्रातिकूल्येनावस्थितम् । अन्तरान्तरा मित्रयोर्मध्ये मध्ये ॥ ४९ ॥

एवं सति किं भवतीत्याह——पीड्यमान इत्यादि । मनीषिभिर्मित्रैरिति शेषः ॥ ५० ॥

---

सारं भजति य आक्रन्दस्तेन पीडयेदित्यनुवर्तते ॥ ४६ ॥

पुरस्ताद्विधेयमभिधातुमाह—( स्वमित्रेणेति । ) मित्रेण पुरस्तादवस्थितेनात्मना चैव कुर्वीतोद्धरणम् उच्छेदनं यातव्याख्यरिपोः । मित्रेण सस्वमित्रेण रिपुमित्रं यातव्यमित्रं प्रपीडयेत् ॥ ४७ ॥

( अरिमित्रस्येति । ) अरिर्यातव्यस्तस्य यन्मित्रं तस्यापि यन्मित्रं तस्य पीडनं पृथिवीपतिः कुर्वीत उभयमित्रेण पूर्वोक्तेन मित्रमित्रेण विजिगीषुमित्रामित्रेण चैव हीति प्रतीतम् ॥ ४८ ॥

( अनेनेति । ) अनन्तरोक्तक्रमयोगेन विजिगीषुः सदोत्थितः सर्वदा अपकारिणं शत्रुं भूम्यनन्तरम् । मित्राणां अन्तरास्थितं संदंशन्यायेन ॥ ४९ ॥

( पीड्यमान इति । ) पीड्यमानो हि उभयतः एकतो विजिगीषुणान्यतो विजिगीषुमित्रैः क्रमोत्क्रमं व्यवस्थितैः सदोद्युक्तैर्मनीषिभिः प्राज्ञैः रिपुरुच्छेदमायाति तद्वशे विजिगीषुवशे वावतिष्ठते इति ॥ ५० ॥

सर्वोपायेन कुर्वीत सामान्यं मित्रमात्मसात्।
भवन्ति मित्रादुच्छिन्नाः सुखोच्छेद्या हि विद्विषः ॥५१॥
कारणेनैव जायन्ते मित्राणि रिपवस्तथा।
रिपवो येन जायेरन् कारणं तत् परित्यजेत् ॥ ५२ ॥
प्राधान्येन हि सर्वत्र सर्वाः संवर्जयेत् प्रजाः।

---

एवं तावदसाधारणमित्रापेक्षया क्रम उक्तः। इदानीं साधारणमित्रापेक्षया क्रममाह—सर्वोपायेनेति। शत्रौ विजिगीषौ च वर्तमानं सामान्यं मित्रं बहुभिरुपायैरात्मसात्कृत्यानेन शत्रुं पीडयेत्। यदाह—मित्रादुच्छिन्ना इति। स्वीकृतान्मित्राद्वियोजिता हि सूच्छेदा भवन्ति। मित्रापेक्षाभावात् ॥ ५१ ॥

ननु च यो यस्य मित्रं स तस्मात् कस्मात् वियुज्यत इति चेत्, शत्रुमित्रव्यवहारस्यानिसर्गसिद्धत्वात्। यदाह—कारणेनैवेत्यादि ॥ ५२ ॥

शत्रोर्मित्रस्य च मण्डले सर्वाः प्रजाः सर्वजनं, महान्तं मध्यममवरञ्चानुग्रहादिभिः स्वराष्ट्रे संश्लेषं नयेत्। तासां संवर्जनादिति। स्वराष्ट्रे( प्रजानां ) निवेशनात्। सर्वाङ्गीं, कोशदण्डाभ्युपेतत्वात्। उक्तञ्च "कोशो दण्डः कुप्यं

---

उभयमित्रस्यात्मसात्करणार्थमाह—( सर्वोपायैरिति। ) सर्वोपायैः सामप्रदानादिभिः। सामान्यं शत्रोरात्मनः साधारणम्। तदात्मसादात्मन एवासाधारणं कुर्यात्। कस्मादित्याह—भवन्ति मित्रादुच्छिन्ना विश्लेषिताः सुखोच्छेद्याः निःसहायत्वात् यस्माच्छत्रव इति ॥ ५१ ॥

अरेरपि मित्रापादनार्थमभिधातुमाह—( कारणैरिति। ) कारणैर्हेतुभिरेव जायन्ते मित्राणि रिपवस्तथा। उपकाराख्यकारणैर्मित्राणि जायन्ते। अपकाराख्यकारणैः शत्रवो जायन्ते। उपकारापकारौ हि लक्ष्यं लक्षणमेतयोरिति वचनात्। रिपवो येन जायेरन् कारणं तत् त्यजेदिति ॥ ५२ ॥

विजिगीषुर्न केवलं मुख्यान् जगति मित्रत्वेन स्थापयेत् ( किन्तु ) क्षुद्रकानपीति दर्शयन्नाह—( प्राधान्येनेति। ) प्राधान्येन मुख्यतया सर्वत्र स्थानीयद्रोणमुख—कर्वट( सङ्ग्रहण ) पत्तनादिदशग्राम्यादिषु स्वजनपदे यथायोगं परजनपदेऽपि वर्णाश्रमलक्षणाः प्रजाः सामादिभिरानुरूप्येण संसर्जयेत्। अनुरञ्जयेत्। अनुरागो हि सार्वगुण्यमिति वचनात्। सर्वसंसर्जनादशेषजनानुरञ्जनाद्राजा सर्वाङ्गीं श्रियमश्नुते। श्रियो हेतुत्वादुपचारात्पृथिवी श्रीरुपचर्यते। तस्याश्चाङ्गानि

तासां संवर्जनाद् राजा सर्वाङ्गीं श्रियमश्नुते ॥ ५३ ॥
दूरेचरान्माण्डलिकांस्तथान्यान् दुर्गवासिनः ।
मित्रीकुर्वीत तत्प्राणाः साधयन्तीह मण्डलम् ॥ ५४ ॥
चलेच्चेदूर्जितबलो मध्यमो विजिगीषया ।
एकीभूयारिणा तिष्ठेदशक्तः सन्धिना नमेत् ॥ ५५ ॥

---

विष्टिर्वाहनं निचयाश्च जनपदादुत्तिष्ठन्त " इति । (कौ० अ० ८–१–१२७) ॥ ५३ ॥

दूरेचरानिति । विजिगीषुमण्डलाद्बहिर्वर्तमानान् । माण्डलिकान् स्वमण्डलाधिपतीन् राज्ञः । दुर्गवासिनः अनुच्छेद्यान् । तत्प्राणाः तत्कृतावष्टम्भा विजिगीषवः । इह मण्डलमिति—विजिगीषुभूमावर्यादिमण्डलं व्युत्तिष्ठमानं नियमयति ॥ ५४ ॥

मध्यमोदासीनावधिकृत्य वृत्तिमाह—चलेदित्यादिना श्लोकत्रयेण । ऊर्जितबलः उद्यतसैन्यः । सम्भूयारिणा तिष्ठेद्विजिगीषुरित्यर्थात् । अरिविजिगीष्वोः संहतयोर्निग्रहे मध्यमस्यासमर्थत्वात् । अशक्त विजिगीष्व्यतिरिक्तोऽपीति भावः । सन्धिना नमेत्, यदा न शत्रुणा संहतः । संहतयोर्निग्रहे मध्यमस्याशक्तत्वम् ॥ ५५ ॥

---

चतुःसमुद्रावसानवर्तिनो विषया एवं भूतानि सर्वाण्यप्यङ्गानि यस्यास्तां श्रियमश्नुते । व्याप्नोति चक्रवर्तित्वेनाधिपतिर्भवतीत्यर्थः ॥ ५३ ॥

एतदेव समर्थयन्नाह—( दूर इति । ) दूरेचरानतिव्यवहितान् दूरदेशस्थितान् मण्डलिनो द्वादशराजकाद्बहिर्भूतान् तथा अन्यान् दुर्गवासिन आटविकान् मित्रीकुर्वीत अरिमित्राण्यपि मित्रीकुर्वीतेत्यर्थः । कस्मादित्याह—तत्प्राणास्तदवष्टम्भा राजानः साधयन्ति इह मण्डलमिति । जातावेकवचनं परमण्डलानि साधयन्तीत्यर्थः ॥ ५४ ॥

सङ्घधर्ममभिधातुमाह—( चलेदिति । ) ऊर्जितबलः शक्तित्रयसम्पन्नो मध्यमो विजिगीषया चलेदभियायाद्विजिगीषुं तदा एकीभूयारिणा यातव्येन सह कृतसन्धिस्तिष्ठेत् । अशक्तश्चेत् सन्धिना हेतुभूतेन कोशादिभिरुपनमेत् ॥ ५५ ॥

उदासीने विचलति सर्वे मण्डलिनः सह ।
सङ्घधर्मेण तिष्ठेयुः सन्नमेयुरशक्तयः ॥ ५६ ॥
समुत्पन्नेषु कृच्छ्रेषु सम्भूय स्वार्थसिद्धये ।
आपत्प्रतरणं सम्यक् सङ्घधर्म इति स्थितिः ॥ ५७ ॥
सहजः कार्यजश्चैव द्विविधः शत्रुरिष्यते ।
सहजः स्वकुलोत्पन्न इतरः कार्यजः स्मृतः ॥ ५८ ॥
उच्छेदनं चापचयः पीडनं कर्शनं तथा ।
इति विद्याविदः प्राहुः शत्रौ वृत्तं चतुर्विधम् ॥ ५९ ॥

---

उदासीने विचलति—सतीति योज्यम् । सर्वे मण्डलिनः-अरिविजिगीषु-मध्यमाः । सङ्घधर्मेण—एकीभावेन, तेषां हि संहतानां निग्रहे उदासीनस्यासमर्थत्वात् । सन्नमेयुरशक्तयः, यदा परस्परविश्लिष्टाः ॥ ५६ ॥

सङ्घधर्मस्वरूपमाह—समुत्पन्नेष्वित्यादि । कृच्छ्रेषु बलवत्पराभियोगादिषु । प्रतरणं निर्वहणम् ॥ ५७ ॥

पुन शत्रुमण्डलमधिकृत्य वैशेषिकीं वृत्तिं त्रयोदशभिः श्लोकैराह—सहज इत्यादि । तृतीयस्तु शत्रु प्रकृत्यमित्रः, स च भूम्यनन्तरत्वात्प्रागुक्तः । स्वकुलोत्पन्नः—एकामिषत्वाद्रावणस्येव विभीषणो दूरस्थस्तद्देशस्थो वा सहजः शत्रुः । इतर इति । न भूम्यनन्तरः स्वकुल्यो वा, किन्त्वपराधकारणात्, यो रामस्येव रावणः । स कार्यजः कृत्रिम इत्यर्थः ॥ ५८ ॥

( उच्छेदनं चेत्यादि ॥ ) ॥ ५९ ॥

---

( उदासीन इति । ) उदासीने विजिगीषया विचलति सर्वे मण्डलिनः विजिगीष्वरिमध्यमाः सह मिलित्वा सङ्घधर्मेण तिष्ठेयुः । आत्मरक्षार्थं सन्नमेयुरशक्तयः ॥ ५६ ॥

उक्तक्रमेण सङ्घधर्मं व्याख्यातमाह—( समुत्पन्नेष्विति । ) कृच्छ्रेषु महाव्यसनेषु संभूय एकीभावमुपेत्य स्वार्थसिद्धये आपत्प्रतरण सम्यक् कुर्वीत इति यत्नादीति वाक्यशेषः । तत्सङ्घवृत्तमिति स्मृतम् ॥ ५७ ॥

अरिविशेषांस्तेषु च विजिगीषोर्वृत्तमभिधातुमाह—( सहज इति । ) सहजः स्वकुलोत्पन्नो दायादादिः । इतरः कार्यजः एकार्थाभिनिवेशित्वात्कार्येण जायत इति द्विविधः शत्रुरुच्यते इति ॥ ५८ ॥

( उच्छेदापचयाविति । ) उच्छेदः स्वभूमेः परित्याजनं, अपचयः श-

उच्छेदनं तु विज्ञेयं सर्वप्रकृतिनाशनम् ।
नाशो युग्यनरादीनां बुधैरपचयः स्मृतः ॥ ६० ॥
रेचनं कोशदण्डाभ्यां महामात्रवधस्तथा ।
एतत् कर्शनमित्याहुराचार्याः पीडनं परम् ॥ ६१ ॥
समाश्रयविहीनो वा दुर्बलं वा समाश्रितः ।
शक्योऽरिसम्पदा युक्त उच्छेत्तुं भूम्यनन्तरः ॥ ६२ ॥

---

उच्छेदनं स्थानप्रच्यावनम् । अपचयो युग्यपुरुषादीनां क्षयः ॥ ६० ॥

पीडनकर्शनयोर्लक्षणमाह—रेचनमित्यादि । महामात्रवधः—प्रधाननायकव्यापादनम् । पीडनं परमिति । कर्शनात्परं पीडनं मूलवर्जदेशविलोपनम् ॥ ६१ ॥

एतच्चतुर्विधं कदाऽनुष्ठातव्यमित्याह—समाश्रयविहीन इत्यादि । भूम्यनन्तरः शत्रुः, यदाऽनपाश्रयो वा शक्यो वा समुच्छेत्तुं, अरिसंपद्युक्तत्वाँत्तदोच्छेदनीयः ॥ ६२ ॥

---

क्तिभिर्वियोजनं, पीडनकर्शने स्वयमेव वक्ष्यति । काले अनुकूले । इति विद्याविदो दण्डनीतिज्ञाः, शत्रौ विषयभूते वृत्तं चतुर्विधं विजिगीषोः प्राहुः ॥ ५९ ॥

( सू०—उच्छेदनं तु विज्ञेयमित्यादिः स्मृत इत्यन्तः मूलश्लोक उपाध्यायनिरपेक्षाया मते नास्तीति भाति । यतः—पीडनकर्शने स्वयमेव वक्ष्यतीत्याह अत्र तद्व्याख्यानं परिगणनं वा नोपलभ्यते । यद्येवं सत्यं तदा एतदनुसारेण इतः परं श्लोकसङ्ख्या एकेन न्यूना मन्तव्या । ) ॥ ६० ॥

( रेचनमित्यादि । )......................तन्मण्डले दाहविलोपादिकरणमिति ॥ ६१ ॥

उच्छेद्यमभिधातुमाह—( समाश्रयेति। ) समाश्रयो दुर्गं बलीयस्तद्विहीनस्तद्रहितः । दुर्बलं वा समाश्रितः शक्योऽरिसम्पदा युक्तः ( उच्छेत्तुम ) ॥६२॥

[ सुखोच्छेद्यो यैर्धर्मैर्भवति तानाह—( लुब्ध इति ) एवंभूतयारिसम्पदा युक्तः सुखोच्छेद्यो रिपुः सदेति । ( सू०—अयं "लुब्ध" (८—१५) इत्यादिरुपाध्यायनिरपेक्षायामिह पुनः पठितः श्लोकः । अतः सङ्ख्यापूर्तेरितः परं समा गणना ज्ञेया ] ।

कर्शनं पीडनं काले कुर्वीताश्रयमानिनः।
समाश्रयं दुर्गमाहुर्मित्रं वा साधुसम्मतम् ॥ ६३ ॥
विभीषणस्य सोदर्यस्तथा सूर्यसुतस्य च।
सर्वतन्त्रापहारित्वात् तथोच्छेद्यो निजो रिपुः ॥ ६४ ॥
छिद्रं मर्म च वीर्यञ्च स जानाति निजो रिपुः।

---

आश्रयमानिन इति। सापाश्रयस्य पीडनं बलवदपाश्रयस्य वा कर्शनमिति पूर्वोक्तविपर्ययेणाश्रयमानिनो योजनीयम्। योऽरिसम्पद्युक्तविपर्ययो विजिगीषुगुणान्वितस्तस्याशक्यत्वादपचयं कुर्यादित्यर्थापन्नम्। कः पुनः समाश्रय इत्याह—समाश्रयमिति। साधुसम्मतं तद्धि समाश्रयणीयं भवति ॥ ६३ ॥

यथा भूम्यनन्तरः प्रकृत्यमित्र उच्छेद्यस्तथा सहजोऽपीत्याह—विभीषणस्येत्यादि। सोदर्यो भ्राता रावणो विभीषणस्य, वाली सूर्यसुतस्य, तौ हि सर्वं राज्यमपहृत्य लङ्काकिष्किन्धानिवासिनौ स्थितावाभ्यां रामसमाश्रयादुच्छिन्नावित्यपि प्रतीतमेतत् ॥ ६४ ॥

अनुच्छिन्नश्चेच्छिद्रादिकं प्राप्य हन्तीत्याह—छिद्रमित्यादि। छिद्रं रक्षाशैथिल्यं, मर्म—दुश्चेष्टितं यद्विनाशकरम्। वीर्यं सारम्। अन्तर्गतः प्रत्यासन्नः। दहति हन्ति। कार्यजोऽपि यदि महापराधी स्याद्रामस्येव रावणः

---

कर्शनपीडनयोर्विषयमभिधातुमाह (कर्शनमिति।) कर्शनं तनूकरणम्। पीडनं कर्शनादप्यधिकदुःखोत्पादनम्। महामात्रवधादिकम्। काले देशकालाद्यनुकूलसमये। कुर्वीत विजिगीषुः। आश्रयमानिन इति समाश्रयाभिमानवतः। समाश्रयं दुर्गमाहुर्मित्रं वा साधुसम्मतमिति ॥ ६३ ॥

सहजो रिपुः सर्वथोच्छेद्य एव इति दर्शयन्नाह-(विभीषणस्येति।) विभीषणस्य सोदर्यो रावणो यथोच्छेद्यः, सूर्यसुतस्य सुग्रीवस्य सोदर्यो वाली सहजो रिपुः (यथोच्छेद्यः)। सर्वतन्त्रापहारित्वात् तन्त्रमत्र राज्यं तत्सर्वमपहर्तुं शीलमिति तस्माद्धेतोः निजो रिपुः (तथा) उच्छेद्य एवेति ॥ ६४ ॥

सोदर्यः कस्मात्समुच्छेद्य इत्यत आह—(छिद्रमिति।) छिद्रं रक्षाशैथिल्यादि। मर्म (यत्र) युक्त्या अभियुक्तमात्रो म्रियते। तथा वीर्यं बलवत्तां च विजानाति निजो रिपुः सोदर्यादिः। असावन्तःस्थितो दहति शुष्कं वृक्षमिवानलः

दहत्यन्तर्गतश्चैव शुष्कं वृक्षमिवानलः ॥ ६५ ॥
बलिना विगृहीतस्य जिगीषुः कृच्छ्रवर्तिनः ।
कुर्वीतोपचयं शत्रोरात्मोच्छित्तिविशङ्कया ॥ ६६ ॥
यस्मिन्नुच्छिद्यमाने तु रिपुरन्यः प्रवर्तते ।
न तस्योच्छित्तिमातिष्ठेत् कुर्वीतैनं स्वगोचरम् ॥६७॥
वंशं गतो रिपुर्यश्च विचलेद् दुरुपग्रहः ।
तस्य संयमनायाशु तत्कुलीनं समुन्नयेत् ॥ ६८ ॥

---

सोऽपि उच्छेद्य इति बोध्यम्, अन्यथा कर्शनीयः पीडनीयो वेति ॥ ६५ ॥

उच्छेदापवादमाह—बलिनेत्यादि । विगृहीतस्य शत्रोरिति संबन्धः कृच्छ्रवर्तिनः सर्वतो निष्पन्दीकृतस्य । उपचयमनुबलाधानम् । आत्मोच्छित्तिविशङ्कया, न तमुच्छिद्यमानमप्युच्छिन्द्यात् बलवत्त्वादिति ॥ ६६ ॥

यस्मिन्नुच्छिद्यमाने विजिगीषुणा रिपुरन्यः प्रवर्तते, तदानीं भूम्यनन्तरात् रतो राज्ञः । स्वगोचरमात्माधीनम् ॥ ६७ ॥

यद्यात्मीयः कुतोऽपि दुरुपग्रहाद्विकुरुते, तदा विधिमाह—वशं गत इत्यादि । संयमनाय नियमनाय, तत्कुलीनं समुन्नयेत्– उपगृह्योत्थापयेदित्यर्थः ॥ ६८ ॥

---

इति तस्मादुच्छेद्य एव ॥ ६५ ॥

कार्यवशादरेरप्युपचयो विधेय इति दर्शयन्नाह—( बलिनेति । ) बलिना आत्मोच्छित्तिविशंकया भूम्यनन्तरे अरावुच्छिन्ने बली भूम्यनन्तरो भवतीति । ( सः ) बलवत्त्वाद्विजिगीषुमप्युच्छिन्द्यादिति शङ्कया भूम्यनन्तरारेरप्युपचयः कार्य एवेति ॥ ६६ ॥

एतदेव समर्थयन्नाह—( यस्मिन्निति । ) यस्मिन्भूम्यनन्तरारौ उच्छिद्यमाने रिपुरन्यः प्रवर्तते, न तस्योच्छित्तिमातिष्ठेत् । कुर्वीतैनं स्वशत्रुं स्वगोचरं भृत्यभावे स्थापयेदिति ॥ ६७ ॥

( वंशागत इति । ) वंशानुगतः स्वकीयकुलप्रभवो रिपुरेकार्याभिनिवेशी विचलेत् व्यभिचरति, दुरुपग्रहः कथमपि आत्मसात्कर्तुं न याति, तस्य संयमनाय उपसंशमनायाशु शीघ्रं तत्कुलीनं तद्दायादं समुन्नयेदुत्थापयेत् । अयमेव तत्प्रती- कार इति ॥ ६८ ॥

विषं विषेण व्यथते वज्रं वज्रेण भिद्यते।
गजेन्द्रो दृष्टसारेण गजेन्द्रेणैव बध्यते॥ ६९॥
मत्स्यो मत्स्यमुपादत्ते ज्ञातिर्ज्ञातिमसंशयम्।
रावणोच्छित्तये रामो विभीषणमपूजयत्॥ ७०॥
यस्मिन् मण्डलसंक्षोभः कृते भवति कर्मणि।
न तत्कुर्वीत मेधावी प्रकृतीरनुरञ्जयेत्॥ ७१॥
साम्ना दानेन मानेन प्रकृतीरनुरञ्जयेत्।

---

तदेव दृष्टान्तेन स्फुटयन्नाह—विषमित्यादि। सारः सामर्थ्यम्॥ ६९॥

विभीषणमपूजयदिति। रावणेन खलीकृत्य निर्वासितं विभीषणं समुद्रस्योत्तरे तीरे रामो लङ्काराज्येऽभिषिक्तवानिति प्रसिद्धमेतत्॥ ७०॥

संक्षेपेणापवादमाह—यस्मिन्नित्यादि। उच्छेदादिकर्मणामन्यतमे क्वचित् क्वचित्कृते सति। प्रकृतीरनुरञ्जयेत्, अन्यथा तत्क्षोभकरं कर्मानुतिष्ठन् कथममात्यादिप्रकृतिष्वनुरागं जनयेत्॥ ७१॥

स्वपरप्रकृतीरधिकृत्य श्लोकद्वयेन वृत्तिमाह—साम्नेत्यादि। मानेन पूजया। प्रकृतीरात्मीया इति सम्बन्धः, मित्रतन्मित्रप्रकृतीरित्यर्थः। परकीया।

---

(विषमिति।) विषं स्थावरविषेण व्यथते नैर्विष्यं क्रियते नान्येन; वज्रं वज्रेणैव भिद्यते नान्येन। गजेन्द्रो दृष्टसारेण गजेन्द्रेणैव बध्यते नान्येन॥ ६९॥

(मत्स्य इति।) [विभीषणमिति] तत्सूचितमर्मप्रहारैः रावणः उच्छिन्नः। शेषं प्रतीतम्॥ ७०॥

द्वादशमण्डलाराधनायाह—(यस्मिन्निति।) यस्मिन् कर्मणि कृते मण्डलस्य द्वादशराजकस्य संक्षोभो अमर्षादक्षम भवति तन्न कुर्वीत मेधावी विजिगीषुः। प्रकृतीरेकादशापि राजप्रकृतीः तदीयामात्यादिकाश्च प्रकृतीरनुरञ्जयेत्। एवं सकलमण्डलेष्टो भवति नेता॥ ७१॥

स्वपरविभागेन प्रकृतिषूपायप्रयोगमाह—(साम्नेति।) आत्मीयाः प्रकृतीर्मित्रादिकाः साम्ना दानेन च यथोचितपूजया सर्वा एवानुरञ्जयेत्। परकीयास्तु

आत्मीया भेददण्डाभ्यां परकीयास्तु भेदयेत् ॥ ७२ ॥
आकीर्णं मण्डलं सर्वं मित्रैररिभिरेव च ।
सर्वः स्वार्थपरो लोकः कुतो मध्यस्थता क्वचित् ॥७३॥
भोगप्राप्तं विकुर्वाणं मित्रमप्येवपीडयेत् ।

---

शत्रुतन्मित्रप्रकृतीः ॥ ७२ ॥

कस्मात्पुनरेवं द्विधा समाचरेदिति चेद् रिमित्रमण्डलस्य व्याप्तत्वात् । यदाह-आकीर्णमित्यादि । मण्डलं द्वादशराजकम् । सर्व स्वार्थपरो लोको यो मण्डले समवेतः । योऽपि परस्यारिणा विगृहीतस्यानुबलाधानेनार्थं साधयति, सोऽपि मा भून्ममाप्युच्छेद इति स्वार्थपर एव प्रवर्तते । स्वार्थश्च परस्मात्सिषाधयिषुर्मैत्र्या वैरेण वा साधयेत्, उपायान्तराभावात् । तस्मात्परतः स्वार्थसाधनाय मण्डले समवेतस्यानियतोऽरिमित्रभाव इति कुतो मध्यस्थता । मध्यमोदासीनावपि राजानावरिमित्रविशेषत्वात्तद० तिभिन्नावेव । यत्तूच्यते—"मुनेरपि वनस्थस्य स्वानि कर्माणि कुर्वतः ॥ उत्पद्यन्ते त्रयः पक्षा मित्रोदासीनशत्रवः" ॥ इति । तत्र विजिगीषोरवस्थामाश्रित्य यो नापकरोत्युपकरोति वा, स उदासीनः । स यदा परस्मादर्थमसमीहमानः स्वभूमावेव स्वकीयकर्मानुष्ठानपर आस्ते, तदा निरीहत्वान्नैव मण्डलेऽन्तर्भाव्यते । यदा कार्यसम्भववशात्तस्यापि स्वार्थसाधनाय सामादयः प्रयुज्यन्ते तदास्य साध्यमानस्यारिमित्रभावयोरन्यतररूपेणावस्थानात्कुतो माध्यस्थ्यमिति द्वाभ्यामेव मण्डलं व्याप्तम् ॥ ७३ ॥

इदानीं मित्रमण्डलमधिकृत्य साध्ये चतुर्दशाभिः श्लोकैर्वृत्तिमाह—भोगप्राप्त-

---

शत्रु—तन्मित्रादिका भेददण्डाभ्यां दारयेत् वध्यादित्यर्थः ॥ २ ॥

मित्रादीनामप्यात्मीयत्वं कादाचित्कमित्येतद्दर्शयन्नाह—( आकीर्णमिति । ) मण्डलं चक्रवर्तिक्षेत्रं सर्वं निरवशेषमाकीर्णं मित्रैरारिभिरेव च भूम्यनन्तरभूम्येकान्तरतया । तत्र मण्डले सर्वो निरवशेषो लोकः स्वार्थपर एव । तथा चोक्तम्—

स नास्ति पुरुषो लोके यः श्रियं नाभिवाञ्छति ।
अशक्तिभग्नमानास्तु नरेन्द्रं पर्युपासते ॥

एवं च कस्यचिदपि मित्रत्वं न विद्यते । एकार्थाभिनिवेशित्वादारित्वमेव संभाव्यत इति सर्वोऽपि लोकः स्वार्थपर इति कुतो मध्यस्थता क्वचिदपि ॥७३॥

एतदेव समर्थयन्नाह—( भोगप्राप्तमिति । ) भोगो भोगहेतुत्वात्कोशः ।

अत्यन्तविकृतं हन्यात् स पापीयान् रिपुर्मतः ॥ ७४ ॥
वर्तते पक्षपातेन मित्रं चेदुभयात्मकम् ।
वज्रीव हि त्रिशिरसं तदुच्छिन्द्यात् कृतत्वरः ॥ ७५ ॥
अमित्रानपि कुर्वीत मित्राण्युपचयावहान् ।
अहिते वर्तमानानि मित्राण्यपि परित्यजेत् ॥ ७६ ॥

---

मित्रं।दि । विकुर्वाणमतिवृद्धिप्राप्तत्वादुत्तिष्ठमानम् । अवपीडयेन्नियमयेदित्यर्थः अत्यन्तविकृतं हन्यात्—अत्युपचरितस्य ह्यरिलक्षणं प्राप्तस्योच्छेदेऽपि नाधर्मः पापीयस्त्वात् ॥ ७४ ॥

उभयात्मकमिति । शत्रोर्विजिगीषोश्च यन्मित्रं तच्चेच्छत्रावेव पक्षपातेन वर्तते । उच्छिन्द्याद्वज्रीव त्रिशिरसमिति । त्वष्टुः प्रजापतेरपत्यमसुरो ब्राह्मणस्त्रिशिरा नाम । सो त्यन्तमुग्रतपा देवासुरयोरुभयोरपि मैत्र्यां वर्तमानोऽप्यसुरेषु पक्षपातेन प्रवृत्त इत्युपलभ्य शक्रेणासुरास्तावद्दुर्जया एवानेन चापरेणोग्रतपसा कृतावष्टम्भाः सुतरां दुर्जया इति जातशङ्केन सहसैव वज्रेणाहतोऽसौ मूर्च्छितः पपात ततो यज्ञभागस्ते देय इति शक्रप्रलोभितस्तक्षा समुच्छ्वसत एवास्य शिरांसि चिच्छेद ॥ ७५ ॥

उपचयावहानरीनपि मित्रीकुर्वीत, मित्रलक्षणप्राप्तत्वात् । अहिते वर्तमानानि त्यजेत्, शत्रुलक्षणप्राप्तत्वात् ॥ ७६ ॥

---

तेन प्राप्तं कोशेन सम्बद्धमित्यर्थः । विकुर्वाणं विकारं गच्छन्तं मित्रमप्युपपीडयेत् । अत्यन्तविकृतं विजिगीषोररित्वप्रवृत्तं हन्यात् यस्मात् साविश्वासत्वात् प्रवृत्तः (स) पापियान् निकृष्टतरो रिपुः स्मृतः इति ॥ ७४ ॥

न केवलं शत्रुविशेष एवोच्छेद्य । मित्रविशेषोच्छेद्यतामपि दर्शयन्नाह—(वर्त्तत इति ।) यदरिविजिगीष्वोर्मित्रमुभयात्मकं भूत्वा अरौ पक्षपातेन वर्तते विश्वस्ते विजिगीषावपकरोमीति कृताध्यवसायं तदुच्छिन्द्याद्वज्रीव इन्द्र इव त्रिशिरसं कृतत्वरः शीघ्रतरमित्यर्थः । त्रिशिरा देवविशेष एव दानवारीन्द्रस्य मित्रं स दानवाधिपतौ सुतरां स्निग्ध इत्यवेत्य वज्रिणा निहत इति ॥ ७५ ॥

(अमित्रानिति ।) यानि मित्राणि प्राक् न संभवन्ति तान्यपि मित्राणि कुर्वीत उपचयावहानि । अहिते वर्तमानानि मित्राण्यपि परित्यजेदिति प्रतीतम् । ७६ ॥

स बन्धुर्योऽनुबध्नाति हितेष्वत्याहितादरः ।
अनुरक्तं विरक्तञ्च तन्मित्रमुपकारि यत् ॥ ७७ ॥
मित्रं विचार्य बहुशो ज्ञातदोषं परित्यजेत् ।
त्यजन्नभूतदोषं हि धर्मार्थावुपहन्ति सः ॥ ७८ ॥
स्वयं दोषगुणान्वेषी भवेत् सर्वत्र सर्वदा ।
स्वयं ज्ञातेषु दोषेषु शस्यं स्याद्दण्डपातनम् ॥ ७९ ॥
न ह्यविज्ञाय तत्त्वेन दोषं कुप्येत् कथञ्चन ।
भुजङ्गमिव मन्यन्ते निर्दोषक्रोधिनं जनाः ॥ ८० ॥

---

तदेव स्फुटयन्नाह—स बन्धुरित्यादि । बन्धुमप्यहिते वर्तमानं अमित्रवत्त्यजेदिति दर्शनार्थं प्रासङ्गिकं तद्वचनम् । अनुरक्तं विरक्तं चेति—मित्रव्यवहारे नुरागविरागौ नाद्रियेते, किन्तूपकार इत्यर्थः । उक्तञ्च—" यावदुपकरोति तावन्मित्रं भवति । उपकारलक्षणं हि मित्रं, न मित्रं मित्रभावादुत्क्रान्तम् " ॥ इति । ( कौ० ७–८–११६ ) ॥ ७७ ॥

मित्रत्यागोऽपि नाविचार्येत्याह—मित्रमिति । धर्मार्थावुपहन्ति स इति अदुष्टदूषणाद्धर्मं हन्ति, तत्परित्यागाच्चार्थम् ॥ ७८ ॥

भूतमपि दोषमन्यत श्रुत्वा स्वयमेव निरूपयेदित्याह—स्वयमित्यादि । सर्वत्र—भृत्यमित्रबन्धुषु । दण्डपातनं—वधपरिक्लेशादि ॥ ७९ ॥

आस्तामज्ञातदोषेषु दण्डपातनं, आत्मनः कोपमपि न दर्शयेदित्याह—नहीत्यादि ॥ ८० ॥

---

( बन्धुरिति । ) बन्धुरपि सोदर्योऽपि अहिते यः स शत्रुः तं परिवर्जयेत् अनुरक्तं विरक्तं वा तन्मित्रमुपकारि यादिति प्रतीतम् ॥ ७७ ॥

( मित्रमिति । ) "मित्रं दोषवदिति सूचितम्, बहुशो विचार्य प्रमाणत्रयेण ज्ञातदोषं सुविदितदोषं परित्यजेन्नान्यथा । त्यजन्नभूतदोषं हि धर्मार्थावुपहन्ति सः विजिगीषुरभूतदोषपरित्यागे धर्मार्थावुपहन्ति मित्रसाध्यश्चार्थस्तत्त्यागे स उपहन्यत एव ॥ ७८ ॥

( स्वयमिति । ) विजिगीषुः स्वयमेव दोषगुणान्वेषी भवेत्सर्वत्र सर्वदा । शेषं प्रतीतम् ॥ ७९ ॥

( नेति । ) अत्र व्याख्यानं सुगमम् ॥ ८० ॥

× प्रयोग : प्रयोजनं प्रयोजकं यस्य तत् ।



मित्राणामन्तरं विद्यात् समज्यायःकनीयसाम् ।
मध्यज्यायःकनीयांसि कर्माणि च पृथक् पृथक् ॥८१॥
नहि मिथ्याभियुञ्जीत शृणुयाच्चापि तद्विधम् ।
मित्रभेदं च ये कुर्युस्तान् समस्तान् परित्यजेत् ॥ ८२ ॥
× प्रायोगिकं मात्सरिकं माध्यस्थं पाक्षपातिकम् ।

---

अन्तरं विद्यात्- मध्यमोत्तमहीनकर्मसु नियोगार्थम् ॥ ८१ ॥

नहि मिथ्याभियुञ्जीत--मम त्वयाऽपचरितमिति । तद्विधमिति मिथ्या, इदन्तु मित्रेण तवापचरितमिति । समस्तान् परित्यजेद्, अन्यथा हि मित्राद्वियोजितस्तैरेवोच्छिद्येत ॥ ८२ ॥

तेषां मित्राणां वचः वाक्यतात्पर्यं लक्षयेत्, यदाह- प्रायोगिकमित्यादि । तत्र परप्रयुक्तस्य प्रायोगिकम् । सम्पदसहिष्णोर्मात्सरिकम्, उभयपक्षावनाश्रितस्य माध्यस्थम्, एकपक्षमाश्रितस्य पाक्षपातिकम्, अर्थलिप्सोः सोपन्यासम्, प्रत्यय-

---

( मित्राणामिति । ) ज्यायोमध्यकनीयसां मित्राणाम् अन्तरं विद्यात् जानीयात् । केन ? एषां कर्मणा उपकारेणेत्यर्थः । मध्यज्यायःकनीयांसि कर्माण्यपि पृथक् पृथक् । ज्यायःकर्मोपकारलक्षणं यत्करोति तत् ज्यायो मित्रम् । मध्यमोपकारलक्षणं यत्करोति तन्मध्यमं मित्रम् । कनीयःकर्मयोगात्कनीय इति ॥ ८१ ॥

( नेति । ) पिशुनवचनान्मिथ्या । शेषं सुगमम् ॥ ८२ ॥

विजिगीषुणा मित्राणां विषये परप्रयुक्तानि वचनानि परीक्षणीयानीति दर्शयन्नाह—( प्रायोगिकमिति । ) प्रयोगो भेदाद्युपायस्तत्र भवं प्रायोगिकम् । यथा मुद्राराक्षसे चाणक्यचन्द्रगुप्तयोः कृतककलहयोः भेदं कर्तुं राक्षसप्रयुक्तो वैतालिकः पठति—" भूषणाद्युपभोगेन प्रभुर्भवति न प्रभुः । परैरपरिभूताज्ञस्त्वमिव प्रभुरुच्यते ॥ " इत्यादि प्रायोगिकं वचनम् । मात्सरिकमिति मत्सरभवं यथा तत्रैव चाणक्यः—" कथय क एष मयि स्थिते चन्द्रगुप्तमभिभवितुमिच्छति । " माध्यस्थमिति इच्छाद्वेषरहितम् यथा तत्रैव चाणक्यः—( चरवचनमाकर्ण्य ) "नूनं सुहृत्तमः । नह्यनाप्तसदृशेषु राक्षसः कलत्रं न्यासीकरिष्यति " इति । पाक्षपातिकमिति पक्षपातेन प्रयुक्तं तथा तत्रैव चरेण समर्पितां राक्षसेन अङ्कितां मुद्रां अङ्गुल्यां निवेश्य चाणक्येन मनस्येवोक्तं—"ननु वक्तव्यं राक्षस एवास्माकमङ्गुली-

सोपन्यासं च जानीयाद् वचः सानुशयं तथा ॥८३॥
प्रकाशपक्षग्रहणं न कुर्यात् सुहृदां स्वयम् ।
अन्योन्यमत्सरं चैषां स्वयमेवाशु वारयेत् ॥ ८४ ॥

---

चिकीर्षोश्च सानुशयमिति ॥ ८३ ॥

प्रकाशपक्षग्रहणं न कुर्यादन्यथा हीतरस्येर्ष्यया वैमुख्यं स्यात्, अप्रकाशं तु कार्यवशात्कुर्यादेवेत्यर्थोक्तम् । अन्योन्यमत्सरं परस्परसम्पदसहिष्णुताम् । वारयेत्—मा भूदेषामन्योन्यक्षय इति ॥ ८ ॥

---

प्रणयी संवृत्तः " इति राक्षसपक्षपातवचनामिदमिति । सोपन्यासमिति यस्मिन्वचसि स्थितस्यार्थस्य उप समीपे सादृश्यादन्यो न्यस्यते स उपन्यासः । यथा तत्रैव चाणक्यः—" भोः श्रेष्ठिन्, स्वागतमिदमासनमास्यताम् । चन्दनदासः—( प्रणम्य ) किं ण आणासि अज्जो जह अणुचिदो उवआरो हिअ स्स परिवहादोवि दुःखमुप्पादेदि । ता इह ज्जेव उचिदाए भूमिए उवविसामि । चाणक्यः—भोः श्रेष्ठिन्, मा मैवम् । संभावितमेवेदमस्माद्विधैः भवतः । तदुपविश्यतामासन एव । चन्दनदासः—( स्वगतम् ) उवक्खित्तमणेण दुट्ठेन किंवि । " एवंविध उपक्षेप उपन्यास उच्यते । सानुशयं तथेति अनुशयः पश्चात्तापः । यथा तत्रैव राक्षसः—( शस्त्रमाकृष्य )

' प्राकारं परितः शरासनधरैः क्षिप्रं परिक्षिप्यतां
द्वारेषु द्विरदैः प्रतिद्विपघटाभेदक्षमैः स्थीयताम् ।
मुक्त्वा मृत्युभयं प्रहर्तुमनसः शत्रोर्बले दुर्बले
ते निर्यान्तु मया सहैकमनसो येषामभीष्टं यशः ॥

विराधगुप्तः—अमात्य, वृत्तमिदं वर्ण्यते । राक्षसः—( सलज्जं ) कष्टम् ! वृत्तमिदम् ? " एतत्सानुशयं वचनमिति । एतत्सर्वं जानीयात् विजिगीषुरिति ॥ ८३ ॥

विजिगीषोर्मित्रविषये वृत्तमभिधातुमाह—( प्रकाशपक्षग्रहणमिति । ) सुहृदां मित्राणां मध्ये कस्यचिदपि मित्रविशेषस्य प्रकाशपक्षग्रहणं न कुर्यात् विजिगीषुः स्वयमन्योन्यमत्सरं चैषां स्वयमेवाशु धारयेदिति पतीतम् ॥ ८४ ॥

कार्यस्य हि गरीयस्त्वान्नीचानामपि कालवित् ।
सतोऽपि दोषान् प्रच्छाद्य गुणानप्यसतो वदेत् ॥ ८५ ॥
प्रायो मित्राणि कुर्वीत सर्वावस्थानि भूपतिः ।
बहुमित्रो हि शक्नोति वशे स्थापयितुं रिपून् ॥ ८६ ॥
न तत्र तिष्ठति भ्राता न तथान्योऽपि वा जनः ।
पुंसामापत्प्रतीकारे सन्मित्रं यत्र तिष्ठति ॥ ८७ ॥
अमित्रान्सर्वतो मित्रैर्निगृह्णीयाद् दृढव्रतैः ।
इति मण्डलवृत्तं तन् मण्डलज्ञाः प्रचक्षते ॥ ८८ ॥
मित्रोदासीनरिपव एतन्मात्रं तु मण्डलम् ।

---

नीचानाम् निकृष्टानाम् । सतो विद्यमानानपि । असतः अविद्यमानानपि ॥ ८५ ॥

ननु चासत्यमुक्त्वा किमर्थं नीचान् मित्रीकुर्यादित्याह—प्राय इत्यादि। सर्वावस्थानि मध्यमोत्कृष्टनिकृष्टानि ॥ ८६ ॥

सन्मित्रं मित्रलक्षणप्राप्तम् ॥ ८७ ॥

अमित्रान् मित्रैर्निगृह्णीयादिति मित्रोपग्रहफलं दर्शयति—सर्वतः समन्ततः । दृढव्रतैः स्थिरप्रकृतिभिः । इति मण्डलवृत्तमित्युपसंहारः । तद्यथोक्तं विजिगीषोर्मण्डलचरितम् ॥ ८८ ॥

तच्च मण्डलं संक्षेपेणाह—मित्रोदासीनरिपव इति । उदासीनस्योपादानं वि-

---

( कार्यस्येति । ) कार्यं पृथिवीपालनं तस्यैव गरीयस्त्वात् नीचानामपि मित्रविशेषाणां कालवित् यस्मिन् काले मित्रसाध्यं कार्यमुपस्थितं भवति तत्र सतोऽपि दोषान् प्रच्छाद्य गुणानप्यसत एव वदेत् मित्राणामिति वाक्यशेषः ॥ ८५ ॥

( प्राय इति । ) प्रायो बाहुल्येन मित्राणि सर्वावस्थान्यपि मध्यमान्यवराण्यपि म्लेच्छाटविकशबरपुलिन्दपतीनपि कुर्वीत भूपतिः । शेषं प्रतीतम् ॥ ८६ ॥

मित्रप्रशंसामाह—( नेति । ) इति प्रतीतम् ॥ ८७ ॥

( अमित्रानिति । ) अस्य व्याख्या सुगमा ॥ ८८ ॥



( संक्षेपेण ) मण्डलवृत्ति( त्त ? )मभिधातुमाह—(मित्रोदासीनरिपव इति । )

सम्यक् साधनमेतेषामिति मण्डलशोधनम् ॥ ८९ ॥

इति स्म राजा नयवर्त्मना व्रजन्
समुद्यमी मण्डलशुद्धिमाचरेत् ।
विराजते साधु विशुद्धमण्डलः
शरच्छशीव प्रतिरञ्जयन् प्रजाः ॥ ९० ॥

इति मण्डलशोधनं( चरितं ) नाम त्रयोदशं प्रकरणम् ।

इति कामन्दकीये नीतिसारे मण्डलयोनिमण्डलशोधने नामाष्टमः सर्ग

----

---

जिगीषावस्थामाश्रित्य, यथोक्तं प्राक् । सम्यक् साधनं यथोक्तं चरितम् । तदेवं मण्डलस्य शोधनम् ॥ ८९ ॥

प्रकरणार्थानुष्ठानफलमाह–इतीत्यादिना । एवमुक्तेन तथान्येन च नयमार्गेण मण्डले चरन् । राजा विजिगीषावस्थावस्थितः । समुद्यमीति–उत्साहः प्रधानमिति दर्शयति । मण्डलशुद्धिमाचरेद्यथा तन्न कुप्येत्, कुपितं वा शाम्येत् । प्रतिरञ्जयन् प्रजा इति मण्डलशुद्धिफलमेतत् ॥ ९ ॥

इति मण्डलचरितं नाम त्रयोदशं प्रकरणम् ।

इति शङ्करार्यकृतायां कामन्दकीयनीतिसारपञ्जिकायां जयमङ्गलायां मण्डलयोनिमण्डलचरिते नामाष्टमः सर्गः ।

----

---

व्याख्या सुगमा ॥ ८९ ॥

उपसंहरन्नाह–( इतीति । ) इति सुगममस्य व्याख्यानम् ॥ ९० ॥

[ इति मण्डलशोधन( चरित )प्रकरणम् ॥ ]

इति कामन्दकीयनीतिसारटीकायामुपाध्यायनिरपेक्षायां मण्डलयोनि-मण्डलशोधने नामाष्टमः सर्गः ॥

----

## अथ नवमः सर्गः।

### १४ सन्धिविकल्पप्रकरणम्।

बलिना विगृहीतः सन् नृपोऽनन्यप्रतिक्रियः।
आपन्नः सन्धिमन्विच्छेत् कुर्वाणः कालयापनम् ॥१॥
कपाल उपहारश्च सन्तानः सङ्गतस्तथा।
उपन्यासः प्रतीकारः संयोगः पुरुषान्तरः ॥ २ ॥
अदृष्टनर आदिष्ट आत्मामिष उपग्रहः।
परिक्रयस्तथोच्छिन्नस्तथा च परदूषणः ॥ ३ ॥
स्कन्धोपनेयः सन्धिश्च षोडशः परिकीर्तितः।

---

## अथ नवमः सर्गः।

### १४ सन्धिविकल्पप्रकरणम्।

षाड्गुण्यस्य कारणं मण्डलं व्यापाररूपश्च तच्चरितमुक्तम्। इदानीं षाड्गुण्यमेव स्वरूपतः सर्गत्रयेणोच्यते। तत्र षडेव गुणाः षाड्गुण्यं, चातुर्वर्ण्यवत्। ते च सन्धिविग्रहयानासनद्वैधीभावसमाश्रयाः। तत्र सन्धिविग्रहयोः प्रधानत्वात्तद्विकल्पः सर्गद्वयेनोच्यते। तत्र सन्धिमधिकृत्याह—आपन्न इत्यादि। आपन्न आपद्गतः बलीयसाऽभिभूयमानत्वात्। सन्धिं पणबन्धम्। कुर्वाणः कालयापनं स्वशक्तिपूरणार्थम् ॥ १ ॥

सन्धिविकल्पानाह कपाल इत्यादिना। अत्र सन्धेयो द्विविधः—अनभि-

---

## अथ नवमः सर्गः।

### १४ अथ सन्धिविकल्पप्रकरणम्।

अनन्तरोक्तक्रमेण विशुद्धमण्डलो विजिगीषुः षाड्गुण्यप्रयोगयोग्यो भवति। तत्र पूर्वपठितस्य सन्धेः प्रयोगं दर्शयन् सन्धिकर्मणोऽवस्थामेव तावदाह—( बलवदिति। ) बलवता शत्रुणा समुचि( च्छ्रि )तशक्तित्रयेण विगृहीतः सन् नृपो विजिगीषुः अनन्यप्रतिक्रियो दुर्गमित्रादिप्रतिक्रियारहितो हीयमान इत्यर्थः। अत एवापन्नः सन्धिमन्विच्छेत् कुर्वाणः कालयापनम्। कुर्वाण इति वाङ्मात्रेणैव सन्धिमन्विच्छेत् कर्मणा तु कालयापनं कुर्वाणः। कदाचित् कालयापनादभियोक्तुर्व्यसने सति विग्रहस्यावसरः स्यादित्यभिप्रायः ॥ १ ॥

इति षोडशकं प्राहुः सन्धिं सन्धिविचक्षणाः ॥ ४ ॥
( तथान्तर्भेदरूपेण भवत्येकोऽप्यनेकधा । )
कपालसन्धिर्विज्ञेयः केवलं समसन्धिकः ॥ ५ ॥
सम्प्रदानाद् भवति य उपहारः स उच्यते ।
सन्तानसन्धिर्विज्ञेयो दारिकादानपूर्वकः ॥ ६ ॥
सद्भिः सङ्गतसन्धिस्तु मैत्रीपूर्व उदाहृतः ।

---

योक्ता अभियोक्ता च । तत्रोपन्यासप्रतीकारसंयोगास्त्रयः सन्धयोऽनभियोक्तर्यं द्रष्टव्याः । शेषास्त्रयोदशाभियोक्तरि द्रष्टव्याः ॥ २—३—४ ॥

उद्दिष्टानां निर्देशमाह—सार्धैश्चतुर्दशभिः श्लोकैः कपालसन्धिर्विज्ञेय इत्यादि। केवलं समसन्धिक इति । इदमुक्तं भवति—यथा कपालपुटयोस्तुल्यायामपि प्रत्यासत्तौ नैकीभावो दृष्टः सन्धेः, एवमनयोरविश्वासान्नैकात्म्यं, सन्धानमेव केवलं तुल्यमिति ॥ ५ ॥

सम्प्रदानादिति । स्वेच्छया द्रव्यस्यादावेव तावदुपह्रियमाणत्वादुपहारः। दारिकादानपूर्वक इति, कन्यां दत्वा यः क्रियते, ( सः ) सन्तानहेतुत्वात्सन्तानसन्धिः ॥ ६ ॥

मैत्रीपूर्वः सम्प्रदाने सत्यसति वा । यावदायुः प्रमाणं यावज्जीवम् । समा-

---

षोडशविधसन्धिमुपदेष्टुमाह—( कपाल इत्यादि । ) । २, ३, ४ ॥

( तथेति । ) ( कपालसन्धिरिति ) घटकपालयोरिव विशिष्टयोरारिविजिगीष्वोः शक्तिसाम्ये कोशदण्डाद्युपनतिं विनैव केवलं समसन्धिरित्युच्यते । यथा—घटकपालभङ्गप्रदेशे द्वितीये कपाले श्लेषिते बहिरभिन्न एव घटो दृश्यते। न च निरन्तरं संश्लेषः । तथा सत्यशपथादिसन्धिकर्मरहितत्वात् वाङ्मात्रेण यः क्रियते स कपालसन्धिरुच्यते यथेष्टं व्यभिचारात् ॥ ५ ॥

( सम्प्रदानादिति । ) तथा सम्प्रदानात् कोशदण्डादीनां भवति यः सन्धिः स उपहार उच्यते । ( सन्तानेत्यादि प्रतीतम् ) ॥ ६ ॥

( सद्भिरिति । ) सङ्गतं मैत्री । यावदायुःप्रमाणमरिविजिगीष्वोरायुषः प्रमाणं यावत् । द्वयोरपि समान एवार्थः कोशस्त्वदीयो मदीय इति विभक्तिर्नास्ति। प्रयोजनानि धर्मार्थकामविषयाणि तान्यपि समानानि प्रयोजनविषये विभक्तिर्ना-

यावदायुःप्रमाणन्तु समानार्थप्रयोजनः ॥ ७ ॥
सङ्गतः सन्धिरेवेह प्रकृष्टत्वात् सुवर्णवत् ।
अपरैः सन्धिकुशलैः काञ्चनः स उदाहृतः ॥ ८ ॥
सम्पत्तौ च विपत्तौ च कारणैर्यो न भिद्यते ।
सङ्गतः सन्धिरेवेह काञ्चनः समुदाहृतः ॥ ९ ॥
भव्यामेकार्थसिद्धिं तु समुद्दिश्य क्रियेत यः ।
स उपन्यासकुशलैरुपन्यास उदाहृतः ॥ १० ॥

---

नार्थप्रयोजन इति, विश्वासादेकीभावगतत्वात्तुल्यरूपं प्रयोजनं यत्र सः ॥ ७ ॥

सख्यहेतुत्वात्सङ्गतसन्धिः । प्रकृष्टत्वात्सख्यस्य । सुवर्णवदिति । एकभूतयोः सुवर्णसन्धिः । अथवा सङ्गतसन्धिरेव सुवर्णवदिति सर्वलोहेभ्यः सर्वसन्धिभ्यः उत्कृष्टत्वात्काञ्चनसन्धिरिति कैश्चिद्व्यवह्रियते । एते चत्वारः सन्धयोऽभियोकारि सन्धेये द्रष्टव्याः ॥ ८–९ ॥

भव्यामिति–कल्याणोदयाम् । अयं शत्रुरुभयापकारी मयाऽस्मिन्नुच्छिन्ने भवतोऽप्यर्थसिद्धिरित्युपन्यस्य यः सन्धीयमाने क्रियते स उपन्यासः ॥ १० ॥

---

स्तीत्यर्थः ॥ ७ ॥

( सङ्गतसन्धिर्विशिष्टः काञ्चनसन्धिरिति दर्शयन्नाह–) ( सङ्गत इति । ) सङ्गत एव सन्धिरुक्तविशेषणविशिष्टः प्रकृष्टत्वात् अत्युत्तमत्वात् सुवर्णवत् यथा सुवर्णे कृतसन्धानं विश्लिष्टं न भवति यावदायुः सुवर्णाभरणादे( स्थितेः ) स्तद्वदयमपि सन्धिरिति ॥ ८ ॥

( सम्पत्ताविति । ) सम्पत्तौ वृध्यादिकारणैश्चित्तविकारे यो न भिद्यते इति । विपत्तौ च व्यसने । स सङ्गत एव सन्धिः सम्यग् विशेषेण उदाहृतः प्रदिष्ट ( काञ्चनः ) इति शेषं प्रतीतम् ॥ ९ ॥

( भव्यामिति । ) शुभामेकार्थसिद्धिं च एकस्य ( यो ) भूम्याद्यर्थस्तस्य या सिद्धिः, त्वं यातव्यं गत्वा तद्भूमिं गृहाण, अहमपि स्वयं यातव्यं गत्वा तद्भूमिं ग्रहीष्यामि एवेति उपन्यस्य च यः सन्धिः क्रियते स उपन्यास उच्यते ॥ १० ॥

मयास्योपकृतं पूर्वमयं प्रतिकरिष्यति ।
इति यः क्रियते सन्धिः प्रतीकारः स उच्यते ॥ ११ ॥
उपकारं करोम्यस्य ममाप्येष करिष्यति ।
अयं चापि प्रतीकारो रामसुग्रीवयोरिव ॥ १२ ॥
एकार्थां सम्यगुद्दिश्य यात्रां यत्र हि गच्छतः ।
य संहितप्रयाणस्तु सन्धिः संयोग उच्यते ॥ १३ ॥
आवयोर्योधमुख्याभ्यां मदर्थः साध्यतामिति ।

---

अयं प्रतिकरिष्यति, ममापन्नस्ये( ति म ? ) त्युपकारः । अयं प्रतीकारहेतुत्वात् प्रतीकारसन्धिः ॥ ११ ॥

रामसुग्रीवयोरिवेति । तयोः समानव्यसनयोः रामेण प्रत्युपकारकामेन सुग्रीवस्य वालिवधपूर्वकेण राज्यदानेन प्रथममुपकृतमिति प्रसिद्धमेतत् ॥ १२ ॥

एकार्थामिति । एकयातव्यविषयां गच्छतः वैरिविजिगीषू । तयोर्यत्र संहतयोः प्रयाणं स संयोगसन्धिः सम्भूयैकत्रगमनात् । एते त्रयः सन्धयोऽनभियोक्तारि द्रष्टव्याः ॥ १३ ॥

आवयोर्योधमुख्याभ्यामिति । त्वदीयेन मदीयेन च सेनापतिना मदर्थः साध्यः । अस्मद्भूमौ व्युत्थानादिकं प्रसाधयितव्यम् । अयं विजिगीषोः पुरुषान्त-

---

( मयास्येति । ) पूर्वमेव कोशादिभिरुपकृतं, अनन्तरं च मित्रादिकृतो विरोधः सम्पन्नः, ततश्च पुनः सन्धौ कृते ममापि प्रतीकारं करिष्यतीति यः क्रियते सन्धिः स प्रतीकारसन्धिरित्युच्यते ॥ ११ ॥

( उपकारमिति । ) अस्य साहाय्यार्थे उपकारं करोमि पश्चान्ममापि प्रत्युपकारं करिष्यति अयं चापि प्रतीकारो रामसुग्रीवयोरिव । रामेण वालिवधलक्षणः सुग्रीवस्योपकारः कृतः। सुग्रीवेणापि साहाय्यं कृत्वा रावणवधः सम्पादितः ॥ १२ ॥

( एकार्थामिति । ) एकमेवार्थं ( उद्दिश्य ) यात्रां यत्र हि गच्छतः संहितप्रयाणः परमविश्वाससंयुक्तः सन्धिः संयोग उच्यते ॥ १३ ॥

विजिगीषुर्दण्डोपनतं प्रत्याह—( आवयोरिति । ) आवयोर्योधमुख्याभ्यां स्वप्रतिबद्धसैन्यसहिताभ्यां मदर्थो भूमिलाभादिकः साध्यतामिति यस्मिन् पणः क्रियते स सन्धिः पुरुषान्तरः । " महीलाभो हि विशिष्टफलसमागमो राज्ञामि"ति

यस्मिन् पणः प्रक्रियते स सन्धिः पुरुषान्तरः ॥ १४ ॥
त्वयैकेन मदीयार्थः सम्प्रसाध्यस्त्वसाविति ।
यत्र शत्रुः पणं कुर्यात् सोऽदृष्टपुरुषः स्मृतः ॥ १५ ॥
यत्र भूम्येकदेशेन पणेन रिपुरूर्जितः ।
सन्धीयते सन्धिविद्भिरादिष्टः स उदाहृतः ॥ १६ ॥
स्वसैन्येन तु सन्धानमात्मामिष इति स्मृतः ।
क्रियते प्राणरक्षार्थं सर्वदानमुपग्रहः ॥ १७ ॥
कोशांशेनाथ कुप्येन सर्वकोशेन वा पुनः ।

---

रेण सन्धानात् पुरुषान्तरसन्धिः ॥ १४ ॥

त्वयैकेनेति । न मया दण्डेन वा, त्वयैवैकेन । अयं विजिगीषोरमित्रार्थ-मन्यत्र साधयत. परेणादृष्टत्वात् अदृष्टपुरुषः सन्धिः ॥ १५ ॥

भूम्येकदेशेनेति । अर्धेन त्रिभागेन वा पणेन शेषप्रकृतिरक्षार्थं सन्धीयते । अयं परस्य बलवतोऽभिप्रेतत्वादादिष्टसन्धिः ॥ १६ ॥

स्वसैन्येन तु सन्धानमिति । स्वसैन्येन सह स्वयं शत्रुसमीपमुपगम्य अय-मात्मानमामिषीकृत्य क्रियमाणत्वादात्मामिषसन्धिः । सर्वदानमिति । आत्मनैव सम्पादनीयाः पुनरपि विषयाः न तु प्राणा इति प्राणरक्षार्थं सर्वराज्यदानं यत्र स उपग्रहः । सर्वथा शत्रूपग्रहहेतुत्वात् । १७ ॥

कोशांशेनेति । त्रिभागेन चतुर्भागेन वा । कुप्येन वस्त्रकम्बलादिना । अयं

---

वचनात् । दण्डोपनतः स्वात्मीयपुरुषान्तरेण कार्यं साधयतीति ॥ १४ ॥

( त्वयेति । ) विजिगीषोः पुरुषः कश्चिन्न दृश्यत इति ॥ १५ ॥

( यत्रेति । ) ॥ १६ ॥

( स्वसैन्येनेति । ) यत्र संहितेन सैन्यस्य प्रेषणं सर्वत्र कर्तव्यमिति स-न्धानं यत् स आत्मामिषः सन्धिः । आत्मैवामिषकृत इति उदाहृतः । क्रियते प्राणरक्षार्थं सर्वदानात् सकलभूमिहिरण्यादिदानादुपग्रहः । सर्वदानेनैव जीवितमुप-गृहीतमिति ॥ १७ ॥

( कोशांशेनेति । ) कुप्येनोक्तलक्षणेन, तेनाशक्यत्वे कोशांशेन तृतीय-चतुर्थेन वा पुनः । शेषप्रकृतयः कोशवर्जास्तद्रक्षार्थं परिक्रय उदाहृतः । कोशेन

शेषप्रकृतिरक्षार्थं परिक्रय उदाहृतः ॥ १८ ॥
भुवां सारवतीनान्तु दानादुच्छिन्न उच्यते ।
सर्वभूम्युत्थितफलदानेन परदूषणः ॥ १९ ॥
परिच्छिन्नं फलं यत्र स्कन्धस्कन्धेन नीयते ।
स्कन्धोपनेयं तं प्राहुः सन्धिं सन्धिविदो जनाः ॥ २० ॥
परस्परोपकारश्च मैत्रः सम्बन्धजस्तथा ।

---

शेषप्रकृतीनामच्छिन्नानामिव परिक्रयणात्परिक्रयसन्धिः ॥ १८ ॥

सारवतीनां—कोशदण्डविष्टिजनिकानाम् । अयं सारभूम्युपहारादुच्छिन्नस्यैव सन्धिः उच्छिन्नसन्धिः । सर्वभूम्युत्थितफलदानेनेति । सर्वग्रहणमाधिक्यार्थम् । भूमिभ्यो यत्फलमुत्पद्यते तदतिरिक्तदानेनेत्यर्थः । अयं परस्य दूषणात्परदूषणः । तद्यथा—अपकर्तुकामो ह्यन्यमायादभ्यधिकमिच्छतीति ॥ १९ ॥

परिच्छिन्नं—त्वयैतावदुपनेतव्यमिति । स्कन्धस्कन्धेन—खण्डखण्डेन । एते नव सन्धयोऽभियोक्तरि द्रष्टव्याः ॥ २० ॥

श्लोकत्रयेण मतभेदमाह—परस्परेत्यादि । चत्वारः सन्धय इति केचिदाहुः । तत्र परस्परोपकारः प्रतीकारसन्धिः । तत्रोपन्यासंसंयोगयोरन्तर्भावः । तत्र ह्युभयोरपि राज्ञोरेकार्थासिद्ध्या परस्परोपकारात् । मैत्रः सङ्गतसन्धिः । सम्बन्धजः सन्तानसन्धिः । उपहारश्चतुर्थः सन्धिः । तत्र शेषा अन्तर्भूताः, कोशदण्डभूमीना-

---

शेषाः प्रकृतयः क्रीता इति ॥ १८ ॥

( भुवां सारवतीनां दानादुच्छिन्न इति । ) सारभूमिदानं तु उच्छेदहेतुरिति । सर्वभूम्युत्थितफलदानेन परदूषणो, न भवत्येवात्र फलं, त्वयोपद्रवः कृत इति परोऽत्र दूष्यत इति ॥ १९ ॥

( परिच्छिन्नमिति । ) तथा परिच्छिन्नं कृतसङ्ख्यं फलं हिरण्यादि यत्र स्कन्धस्कन्धेन दीयते, इयता कालेनैतत्सङ्ख्यं देयमिति यो निबन्धो व्यवस्थोच्यते, स्कन्धोपनेयं तं प्राहुः सन्धिं सन्धिविदो जनाः ॥ २० ॥

संभवतः सन्धिविशेषानभिधाय सुश्लिष्टसन्धिलक्षणं येषां तानभिधातुमाह— ( परस्परोपकार इति । ) परस्परोपकारो रामसुग्रीवयोरिव । मैत्र इति मित्रत्वेनैव निरुपचरितेन यो भवति सः । सम्बन्धजस्तथा दारिकादानपूर्वक इत्यर्थः । उपहारश्च यत्र कोशाद्याह्रियते । विज्ञेयाश्चत्वारश्चिरसन्धयो येषु विभेदाशंका न विद्यत

उपहारश्च विज्ञेयाश्चत्वारोऽन्ये तु सन्धयः ॥ २१ ॥
एक एवोपहारस्तु सन्धिरेतन्मतं हि नः ।
उपहारस्य भेदास्तु सर्वेऽन्ये मैत्रवर्जिताः ॥ २२ ॥
अभियोक्ता बली यस्मादलब्ध्वा न निवर्तते ।
उपहाराद्दते तस्मात् सन्धिरन्यो न विद्यते ॥ २३ ॥
बालो वृद्धो दीर्घरोगी तथा ज्ञातिबहिष्कृतः ।
भीरुको भीरुकजनो लुब्धो लुब्धजनस्तथा ॥ २४ ॥
विरक्तप्रकृतिश्चैव विषयेष्वतिसक्तिमान् ।
अनेकचित्तमन्त्रश्च देवब्राह्मणनिन्दकः ॥ २५ ॥
दैवोपहतकश्चैव दैवचिन्तक एव च ।
दुर्भिक्षव्यसनोपेतो बलव्यसनसङ्कुलः ॥ २६ ॥
अदेशस्थो बहुरिपुर्युक्तः कालेन यश्च सः ।
सत्यधर्मव्यपेतश्च विंशतिः पुरुषा अमी ॥ २७ ॥
एतैः सन्धिं न कुर्वीत विगृह्णीयात्तु केवलम् ।

---

मुपह्रियमाणत्वादिति । २१ ॥

स्वमतमाह—एक एवेति मैत्रवर्जिताः सङ्गतसन्धौ सम्प्रदानाभावात् । सोऽन्यकाले दुर्लभ इत्येक एवेत्यवधारयति ॥ २२ ॥

तदेव स्फुटयन्नाह—अभियोक्तेत्यादि । अलब्ध्वा न निवर्तते, बलोद्वृत्तत्वात् । अनभियोक्ताप्युपन्यासप्रतीकारसंयोगसन्धिष्वलब्धिवाङ् न घटते । तस्मादुपहाराद्दते सन्धिरन्यो नास्ति ॥ २३ ॥

इदानीमसन्धेयानभियोक्तॄन् निरूपयति विंशता श्लोकैः । तत्रासन्धेयानधि-

---

इत्यर्थः ॥ २१ ॥

( एक इति । ) उपहार एवैकः सन्धिरभिमतोऽस्माकं यस्मादुपहारभेदा एवान्ये । परस्परोपकारेऽपि वस्त्रालङ्कारादिकस्योपहरणमास्ति, सम्बन्धजे दारिकादेरुपहरणमास्त । केवलं मित्रं वर्जयित्वा शेषा उपहारभेदा एव ॥ २२ ॥

( अभियोक्तेति । ) अभियोक्ता विजिगीषुर्बली शक्त्यादिसंपूर्णः यस्मात् अलब्ध्वा न निवर्तते तेन प्रार्थितमुपहरणीयमेव तस्मादुपहाराद्दतेऽन्यः सन्धिरेव न विद्यते सन्धिलक्षणानामभावादिति ॥ २३ ॥

असन्धेयमभिधातुमेव व्याचष्टे—( बाल इत्यादि । ) ॥ २४, २५, २६

एते विगृह्यमाणा हि ध्रुवं यान्ति रिपोर्वशम् ॥ २८ ॥
बालस्यान्यप्रमाणत्वान्न लोको योद्धुमिच्छति ।
योद्धुं स्वयमशक्तः सन् परार्थे कोऽभियुज्यते ॥ २९ ॥
उत्साहशक्तिहीनत्वाद् वृद्धो दीर्घामयस्तथा ।
स्वैरेव परिभूयेते द्वावप्येतावसंशयम् ॥ ३० ॥
सुखोच्छेद्यो हि भवति सर्वज्ञातिबहिष्कृतः ।
त एवैनं विनिघ्नन्ति ज्ञातयस्त्वात्मसात्कृताः ॥ ३१ ॥
भीरुर्युद्धपरित्यागात् क्षिप्रमेव विनश्यति ।
वीरोऽप्यवीरपुरुषः सङ्ग्रामे तैर्विमुच्यते ॥ ३२ ॥
लुब्धस्यासंविभागित्वान्न युध्यन्तेऽनुजीविनः ।

---

कृत्याह–बाल इत्य दि ॥ २४–२५–२६ २७–२८ ॥

क मादेवं विगृह्यमाणा वशं यान्तीत्याह–बालस्येत्यादि । बालस्याप्राप्तव्यवहारस्याप्रभावत्वात्, अन्यप्रमाणः स्वयं प्रभुशक्त्यभावाद्योद्धुं चासावशक्तो विक्रमस्याभावात् ॥ २९ ॥

दीर्घामयः राजयक्ष्मादिपीडितः ॥ ३० ॥

सर्वज्ञातिबहिष्कृतो निराश्रयः । आत्मसात्कृताः विजिगीषुणा । स्वयमेवानुगच्छन्ति विजिगीषुमित्यर्थः ॥ ३१ ॥

भीरुः विभीतः । अवीरपुरुषो भीरुसैन्यः । तैर्विमुच्यते भीरुपुरुषैः ॥३२॥

असंविभागित्वादकल्पितभृत्यजीवितत्वात् । तैरेवेति–लुब्धैरनुजीविभिः ।

---

२७, २८ ॥

असन्धेयत्वे हेतूनभिधातुमाह–( बालस्येति । ) ॥ २९ ॥

( उत्साहशक्तिहीनत्वादिति । ) उत्साहोऽत्रोद्योगः । तच्छक्तिहीनत्वात् वृद्धो विग्रहासमर्थः । तस्मात् वृद्धसमानत्वेन दीर्घामयो दीर्घव्याधिरित्यत्र तथैवोपलक्षणमेतदुद्दिष्टत्वात् । शेषं प्रतीतम् ॥ ३० ॥

तथा ( सुखोच्छेद्य इति । ) सुखेनैवोच्छेद्यो हि सर्वैरेव ज्ञातिभिर्बहिष्कृतः । त एवैनं ज्ञातयः परित्यक्तं विनिघ्नन्ति विजिगीषुणैवात्मसात्कृता इत्ययमप्यसन्धेयः ॥ ३१ ॥

( भीरुरिति । ) अतो भीरुकजनोऽप्यसन्धेयः ॥ ३२ ॥



( लुब्धस्येति । ) लुब्धस्य संविभक्तेरभावात् लुब्धानुजीवी तैरेवानुजीवि-

लुब्धानुजीवी तैरेव दानभिन्नैर्निहन्यते ॥ ३३ ॥
सन्त्यज्यते प्रकृतिभिर्विरक्तप्रकृतिर्युधि ।
सुखाभियोगो भवति विषयेष्वतिसक्तिमान् ॥ ३४ ॥
अनेकचित्तमन्त्रश्च द्वेष्यो भवति मन्त्रिणाम् ।
अनवस्थितचित्तत्वात् कार्ये तैः समुपेक्ष्यते ॥ ३५ ॥
सदा धर्मबलीयस्त्वाद् देवब्राह्मणनिन्दकः ।
विशीर्यते स्वयं ह्येव दैवोपहतकस्तथा ॥ ३६ ॥
सम्पत्तौ च विपत्तौ च दैवमेव हि कारणम् ।
इति दैवपरो ध्यायन्नात्मना न विचेष्टते ॥ ३७ ॥

---

विजिगीषुणा दानेन भिन्नैः ॥ ३३ ॥

विरक्तप्रकृतिः—अदण्ड्यदण्डनाद्याचरणात् । विषयेषु स्त्रीपानादिषु ॥ ३४ ॥

द्वेष्यो भवति—यथोक्ताश्रवणात् । तैरिति मन्त्रिभिः ॥ ३५ ॥

दैवोपहतकः स्वयं कल्पमप्यारभमाणो यो न फलभाक् ॥ ३६ ॥

न विचेष्टते—न पौरुषमारभते ॥ ३७ ॥

---

भिर्विजिगीषुणा दानेन भिन्नैर्विहन्यते ॥ ३३ ॥

(सन्त्यज्यत इति ।) तथा सन्त्यज्यते प्रकृतिभिर्विरक्तप्रकृतिर्युधीति प्रतीतम् । सुखाभियोज्यो भवति विषयेषु स्त्रीमद्यपानादिषु अतिसक्तिमान् अनुरागवान् ॥ ३४ ॥

( अनेकचित्तमन्त्र इति । ) इति प्रतीतम् ॥ ३५ ॥

( सदेति । ) सदा विशीर्यते विनश्यति स्वयं ह्येव विजिगीषुणानभियुक्तोऽपि निन्दाप्रभवपापप्रभावात्; तथा दैवोपहतकोऽपि जन्मान्तरकृतपापादेव स्वयमेव विशीर्यते ॥ ३६ ॥

( सम्पत्ताविति । ) सम्पत्तौ विपत्तौ च न पुरुषकारः कारणम् इति दैवपरो ध्यायन् आत्मना न विचेष्टते; यथोपपन्नेऽपि भोजने दैवपरो विपद्यत एव ॥ ३७ ॥

दुर्भिक्षव्यसनी चैव स्वयमेवावसीदति ।
बलव्यसनयुक्तस्य योद्धुं शक्तिर्न विद्यते ॥ ३८ ॥
अदेशस्थो हि रिपुणा स्वल्पकेनापि हन्यते ।
ग्राहोऽल्पीयानपि जले गजेन्द्रमपि कर्षति ।
ग्राहश्चानीरदेशस्थः शुनापि परिभूयते ॥ ३९ ॥
बह्वमित्रस्तु सन्त्रस्तः श्येनमध्ये कपोतवत् ।
येनैव गच्छति पथा तेनैवाशु विनश्यति ॥ ४० ॥
अकालयुक्तसैन्यस्तु हन्यते कालयोधिना ।
कौशिकेन हतज्योतिर्निशीथ इव वायसः ॥ ४१ ॥
सत्यधर्मव्यपेतेन न सन्दध्यात् कथञ्चन ।
सुसंहितोऽप्यसाधुत्वादचिराद् याति विक्रियाम् ॥ ४२ ॥
सत्यार्यौ धार्मिकानार्यौ भ्रातृसङ्घातवान् बली ।
अनेकविजयी चेति सन्धेयाः सप्त कीर्तिताः ॥ ४३ ॥

---

बलव्यसनं—'उपरुद्धं परिक्षिप्त" मित्यादि वक्ष्यति ॥ (१४-६७) ॥ ३८ ॥

अदेशस्थः—स्वसैन्यव्यायामानामयोग्ये देशे स्थितः ॥ ३९ ॥

बह्वमित्रः प्रकोपितबहुमण्डलतया ॥ ४० ॥

अकालयुक्तसैन्यः—न युद्धयोग्ये काले नियुक्तं सैन्यं यस्येत्यर्थः। कौशिकः—उलूकः ॥ ४१ ॥

असाधुत्वादस्थिरप्रकृतित्वात् ॥ ४२ ॥

अथ सन्धेयानाह—सत्येत्यादिना ॥ ४३ ॥

---

( दुर्भिक्षव्यसनीति । ) तथा दुर्भिक्षं भोजनाभावः बलव्यसनानि अमानितविमानितादीनीति ॥ ३८ ॥

( अदेशस्थ इति । ) इति प्रतीतम् ॥ ३९ ॥

तथा ( बह्वमित्र इति । ) ॥ ४० ॥

( अकालेति । ) इति प्रतीतम् ॥ ४१ ॥

( सत्यधर्मेति । ) तथा एभिर्विंशतिसङ्ख्यैः शत्रुभिः सह सन्धिर्न कार्यो यस्मात्स्वयमेव विनश्वरा ह्येते ॥ ४२ ॥

आदेयात्सन्धेयानभिधातुमाह—( सत्यार्याविति । ) ॥ ४३ ॥

सत्योऽनुपालयन् सत्यं सन्धितो नैति विक्रियाम् ।
प्राणबाधेष्वपि व्यक्तमार्यो नायात्यनार्यताम् ॥४४॥
धार्मिकस्याभियुक्तस्य सर्व एव हि युध्यते ।
प्रजानुरागाद्धर्माच्च दुःखोच्छेद्यो हि धार्मिकः ॥४५॥
सन्धिः कार्यो ह्यनार्येण स प्रायः सादयन् द्विषः ।
रेणुकायाः सुत इव मूलेष्वपि न तिष्ठति ॥ ४६ ॥
सङ्घातवान् यथा वेणुर्निबिडः कण्टकैर्वृतः ।
न शक्यते समुच्छेत्तुं भ्रातृसङ्घातवांस्तथा ॥ ४७ ॥
समाक्रान्तस्य बलिना सर्वयत्नवतोऽपि हि ।

---

कस्मादेते सन्धेया इत्याह—सत्य इत्यादि । सत्ययुक्तः, प्राणबाधेष्वपि—म्रियमाणोऽपि, आर्यः युक्तकारी ॥ ४४ ॥

धार्मिकस्य न्यायेन पालयतः । सर्व एवेति, उदासीनः शत्रुश्च ॥ ४५ ॥

सन्धिः कार्यो ह्यनार्येण—अयुक्तकारिणा । यद्यसौ न सन्धीयते तदा शत्रून् प्राप्योत्सादयन् , मूलेष्वपि न तिष्ठति—निर्मूलं करोतीत्यर्थः । रेणुकायाः सुत इवेति । जमदग्नेर्महर्षेर्भार्या रेणुका नाम । तस्याः पुत्रः परशुरामः । स किलाश्रमपदादग्निहोत्रधेनुमपहृत्य गच्छता कार्तवीर्येण तन्मोचनार्थं जमदग्निं पितरं व्यायच्छमानं( न्तं ) व्यापादितं श्रुत्वा जातमन्युः परशुना कार्तवीर्यं बाहुसहस्रेण वियोज्य घातितवान् । ततस्तद्दोषादन्यदपि क्षत्रकुलमनपराद्धमुत्सादयितुं प्रवृत्तवानित्यर्थः । तस्मात्तथाविधेन सह सर्वात्मना सन्धानमेव युक्तम् ॥ ४६ ॥

निबिडः संहतत्वादेव हि दुःखप्रवेशो भवति ॥ ४७ ॥

---

( सत्य इति । ) ॥ ४४ ॥

( धार्मिकस्येति । ) ॥ ४५ ॥

( सन्धिरिति । ) परशुराम इव मूलेष्वपि क्षत्रियानुत्साद्य तद्बालवरेष्वपि न तिष्ठति । तानप्येकविंशतिवारान् उत्सादितवानित्यर्थः । अनार्यता पुनः शास्त्रेषु दुष्टस्यैव वधोऽभिहितः, तेन तु अदुष्टानां बहूनां वध इति ॥ ४६ ॥

( सङ्घातवानिति । ) तथा......इति प्रतीतम् ॥ ४७ ॥

( समाक्रान्तस्येति । ) अतो बलीयान् सन्धेय एव सर्वथेति प्रती-

हरिणस्येव सिंहेन शरणं नैव विद्यते ॥ ४८ ॥
ईषदायच्छमानोऽपि सिंहो मत्तानपि द्विपान् ।
निहन्ति बलवांस्तस्मात् सन्धेयः शिवमिच्छता ॥ ४९ ॥
बलिना सह योद्धव्यमिति नास्ति निदर्शनम् ।
प्रतिवातं नहि घनः कदाचिदपि सर्पति ॥ ५० ॥
बलीयसि प्रणमतां काले विक्रामतामपि ।
सम्पदो नापगच्छन्ति प्रतीपामिव निम्नगाः ॥ ५१ ॥
जमदग्नेः सुतस्येव सर्वः सर्वत्र सर्वदा ।
अनेकयुद्धजयिनः प्रतापादेव भिद्यते ॥ ५२ ॥
अनेकयुद्धविजयी सन्धानं यस्य गच्छति ।
तत्प्रतापेन तस्याशु वशं गच्छन्ति विद्विषः ॥ ५३ ॥

---

बलिना—शक्तित्रययुक्तेन ॥ ४८ ॥

आयमनं—उद्योगः ॥ ४९ ॥

निदर्शनम्—आगमः । प्रतिवातं वाताभिमुखम् ॥ ५० ॥

काले विक्रामतामपीति । अभ्युच्चयकाले विक्रममाणा अप्यनभ्युच्चिताश्चेत् प्रणमन्ति, तदैषां सम्पदो नापगच्छन्ति । बलीयसोऽनेकोदाहरणमावश्यकार्थम् ॥ ५१ ॥

(margin note: × अपप्रयोगः । उपपराभ्यामिति नियमात् आत्मनेपदं प्रसक्तं ।)

जमदग्नेः सुतस्येति । भिन्नाधिकरणा षष्ठी । अनेकयुद्धजयिन इति । स हि पितृवधामर्षितः कार्तवीर्यं निहत्य रोषादेकविंशतिं वारान् निःक्षत्त्रां पृथिवीं चकार । तस्य चाभियोक्तुः प्रतापादेव । सर्वो—ज्यायान् समो हीनः । सर्वत्र—दुर्गे चादुर्गे च । सर्वदाभियोक्ताभियोक्ष्यमाणश्च भज्यते ॥ ५२ ॥

सन्धानं यस्य गच्छतीति । न केवलं तत्सन्धाने विजिगीषोरात्मत्राणं, अन्येऽपि शत्रवोऽस्य विधेया भवन्ति ॥ ५३ ॥

---

तम् ॥ ४८ ॥

(ईषदिति ।) इति प्रतीतम् ॥ ४९ ॥

(बलिनेति ।) एवं दुर्बलोऽपि बलिनः सम्मुखं स्थातुमशक्त इत्यर्थः ॥ ५० ॥

( बलीयसीति । ) ... इति प्रतीतम् ॥ ५१ ॥

( जमदग्निसुतस्येति । ) इदमपि प्रतीतम् ॥ ५२ ॥

( अनेकयुद्धेति । ) ... इति प्रतीतम् ॥ ५३ ॥

न जातु गच्छेद् विश्वासं संहितोऽपि हि बुद्धिमान् ।
अद्रोहे समयं कृत्वा वृत्रमिन्द्रः पुरावधीत् ॥ ५४ ॥
विकारं याति पुत्रोऽपि राज्यालीढस्तथा पिता ।
तल्लोकवृत्तान्नृपतेरन्यद् वृत्तं प्रचक्षते ॥ ५५ ॥
अभियुक्तो बलवता तिष्ठन् दुर्गे प्रयत्नवान् ।
तद्बलीयस्तराह्वानं कुर्वीतात्मविमुक्तये ॥ ५६ ॥

स्वशक्त्युत्साहमुद्वीक्ष्य विगृह्णीयान्महत्तरम् ।

---

कृतसन्धौ श्लोकद्वयेन विधिमाह—न जात्वित्यादि । संहतोऽपि—समयेन कृतसन्धिरपि । वृत्रमिन्द्रः पुरावधीदिति । त्रिशिरसः पुत्रस्य वधामर्षितेन त्वष्ट्रा शक्रवधाय वृत्रो नाम बलीयानसुरः सृष्टः । तेन च शक्रोऽनेकधा युद्धे निराकृतः, तमेकदा न केनाचिद्विरोद्धव्यामिति शपथपूर्वकं सन्धाय जातविस्रम्भं स्ववज्रावध्यं दाधीचास्थिघटितेन वज्रेण हत्वा व्यापादितवान् ॥ ५४ ॥

तथाऽद्यत्वेऽप्ययं व्यवहारो दृश्यते इति दर्शयन्नाह विकारमित्यादि । लोकवृत्तात्—लोकव्यवहारात् ॥ ५५ ॥

इदानीमभियोक्त्रपेक्षया व्यापारं सप्तभिः श्लोकैराह—अभियुक्त इत्यादि । अभियोक्तारस्त्रयो ज्यायान् समो हीनश्च । तत्र मन्त्रोत्साहप्रभावशक्तिभिरभ्युच्चितो ज्यायान् । अपचितो हीनः । तुल्यशक्तिः समः । तत्र ज्यायांश्चेन्न सन्धिमिच्छेत् दुर्गं समाश्रयेत् । यदाह—तिष्ठन् दुर्गे इति । प्रयत्नवान्—दुर्गसंरक्षणपरः । तद्वत् बलीयस्तराह्वानमिति । अभियोक्तुर्विशिष्टबलं सामन्तमाहूयात्मानमुपरुद्धं मोचयेत् ॥ ५६ ॥

“ यदि दुर्गं क्षीयमाणनिचयं मन्येत ” तद्विशिष्टबलाभावे निचयक्षये च

---

( न जात्विति । ) ... इति प्रतीतम् ॥ ५४ ॥

( विकारमिति । ) ( राज्यालीढः ) राज्यलक्ष्म्यालङ्कृतः । तस्माल्लोकवृत्तान्नृपतेरन्यद्वृत्तं प्रचक्षते । इति स्मृतिकाराः ॥ ५५ ॥

बलवान् यत्र सन्धिं नेच्छेत् तत्र विधेयमाह—( अभियुक्त इति । ) ( तिष्ठन् दुर्गे प्रयत्नवान् ) कृतरक्षातिशयः । तस्मादपि यो बलीयस्तरस्तस्याह्वानं कुर्वीतात्मविमुक्तये दुर्गोपरोधविमुक्त्यर्थमिति ॥ ५६ ॥



... ( स्वशक्त्युत्साहमिति । ) स्वकं- बलीयस्तराभावे विधेयमभिधातुमाह—

केसरीव द्विपामिति भरद्वाजः प्रभाषते ॥ ५७ ॥
एकोऽपि सिंहः साहस्रं यूथं मथ्नाति दन्तिनाम् ।
तस्मात् सिंहमिवोदारमात्मानं वीक्ष्य सम्पतेत् ॥ ५८ ॥
ज्यायांसमल्पसैन्यस्य बलाद् विक्रम्य निघ्नतः ।
प्रतापसिद्धाः सर्वत्र भवन्ति रिपवो वशे ॥ ५९ ॥
सन्धिमिच्छेत् समेनापि सन्दिग्धो विजयो युधि ।

---

किं कुर्यादित्याह—स्वशक्तीति । आत्मनो विक्रमबलं ज्ञात्वा दुर्गमुन्मुच्य विगृह्णीयात् । महत्तरं ज्यायांसम् । विक्रमशक्त्यभावे तु विधानान्तरं वक्ष्यति । ननु सन्धिः प्रस्तुतः । सत्यं, तस्यैवापवादः, सन्ध्युपायो वा, यस्मान्नातप्तं लोहं लोहेन सन्धत्त इति ॥ ५७ ॥

उक्तमेवार्थं स्फुटीकुर्वन् निगमयति—एकोऽपीत्यादिना । उदारं विक्रमाधिकम् ॥ ५८ ।

अल्पसैन्यस्य विजिगीषोः । बलादुत्साहशक्त्या । प्रतापसिद्धा भवन्तीति फलान्तरं दर्शयति ॥ ५९ ॥

---

याः शक्तयः प्रभुमन्त्रोत्साहलक्षणाः । उत्साहः शक्तित्वेन पठितोऽपि पुनरुपादीयते शौर्यस्याधिकारप्रदर्शनार्थम् । तम् उद्वीक्ष्यात्मनो, विगृह्णीयात् महत्तरं ज्यायांसं, केसरीव द्विपं, केसरी द्विपापेक्षया महत्तरो न भवति किन्तु शक्त्युत्साहयुक्तः । केसरिसमानमात्मानमुद्वीक्ष्य महत्तरमपि ( द्विपं विगृह्णाति तथा ) विगृह्णीयादिति भारद्वाजो महर्षिः प्रभाषते । मतान्तरदर्शनं च गत्यन्तराभावे ज्यायसा विग्रहो नान्यथेति ॥ ५७ ॥

एतदेव द्रढयितुमाह—( एक इति । ) एकोऽपि सिंहः साहस्रं यूथं दन्तिनां पक्षे सहस्रलक्षणक्षत्रियाणां मथ्नाति विनाशयति । तस्मात् सिंहमिवात्मानमुदारं वीक्ष्य ज्यायांसं प्रति सम्पतेत् । नान्यथेति ॥ ५८ ॥

अत्र गुणं दर्शयन्नाह—( ज्यायांसमिति । ) ज्यायांसं प्रभुशक्त्याधिकं, अल्पसैन्यस्योत्साहशक्त्यैवाधिकस्य, बलाद्विक्रम्य निघ्नतो व्यापादयतः, प्रतापेनैव सिद्धा भवन्ति रिपवोऽपरे; विग्रहं विनैवेत्यर्थः ॥ ५९ ॥

अगतिकगतिपक्षे विग्रहमभिधाय प्रस्तुतसन्धिमेवाभिधातुमाह—( सन्धिमिति । ) न केवलं ज्यायसा, समेनापि समशक्तिनापि सन्धिमिच्छेत् । कुत इत्याह—यतः

नहि संशयितं कुर्यादित्युवाच बृहस्पतिः ॥ ६० ॥

आसम्प्रवृद्धेरभिवृद्धिकामः समेन सन्धानमिवोपगच्छेत् ।
अपक्वयोर्वा घटयोरवश्यमन्योन्यभेदी समसन्निपातः ॥ ६१ ॥

युद्धे विनाशो नियतः कदाचिदुभयोरपि ।
सुन्दोपसुन्दावन्योन्यं समवीर्यौ हतौ न किम् ? ॥ ६२ ॥

विहीनोऽपि हि सन्धेयो व्यसने रिपुरागतः ।
पतन् दुनोति हिमवत्तोयबिन्दुरिव क्षते ॥ ६३ ॥

---

समसन्धिमधिकृत्याह—सन्धिमिच्छदित्यादिना ॥ ६० ॥

समेनेति—अभियोक्त्रेति शेषः ॥ ६१ ॥

सुन्दोपसुन्दाविति । तौ सोदर्यावसुरौ परस्परामेद्यौ विन्ध्ये तपसा ब्रह्माणमाराध्य वरप्रदानात्परस्यावध्यतां प्राप्य सर्वं लोकं अभिबभूवतुः । ततो देवास्तद्वधार्थं ब्रह्माणमुपगम्य तदनुज्ञातेन प्रजापतिना रूपयौवनवतीं तिलोत्तमामप्सरसमुत्पाद्य तदाश्रमं प्रेषयामासुः । तौ च तां दृष्ट्वा जातरागावेकद्रव्याभिनिवेशाद्युध्यमानौ तुल्यबलत्वादन्योन्यमेव क्षयं जग्मतुः ॥ ६२ ॥

हीनमधिकृत्याह । विहीनोऽपीति । व्यसने विजिगीषोर्ज्यायसो दैवे मानुषे वा समुत्पन्ने अभियोक्तुमागतः । हिमवत्तोयबिन्दुरल्पीयान् दुनोति—दुःखयति ॥ ६३ ॥

---

सन्दिग्धो विजयो युधि यतो हीनैरपि ज्यायांसो जिता दृश्यन्ते, इति सांशयिकं कार्यं विवेकी न कुर्यादिति बृहस्पतिरुवाच । निःसन्दिग्धे प्रवृत्तिर्नीतिविदामिष्यत इति ॥ ६० ॥

तथा—( आसम्प्रवृद्धेरिति । ) सम्यक् प्रकृष्टा वृद्धिः सा भवति यावत् अभिवृद्धिकामो विजिगीषुः समेन सन्धानं इह शास्त्रे स्थित उपगच्छेत् । अपक्वयोरिव घटयोः समसन्निपातोऽन्योन्यभेदी भवति ॥ ६१ ॥

एतदेव दर्शयन्नाह—( युद्धेन नाशो भवतीति । ) तथा च सुन्दोपसुन्दाख्यौ दानवावन्योन्यवध्यौ तिलोत्तमाभिलाषात् जातविरोधौ सोदर्यौ समवीर्यौ हतौ युधीति ॥ ६२ ॥



न केवलं समो, हीनोऽपि सन्धेय इति दर्शयन्नाह—( विहीन इति । ) हि

न सन्धिमिच्छेद्धीनश्चेत् तत्र हेतुरसंशयः ।
तस्य विस्रम्भमालक्ष्य प्रहरेत् तत्र निःस्पृहः ॥ ६४ ॥
बलीयसाभिसन्धाय तं प्रविश्य प्रयत्नवान् ।
तथासावुपगन्तव्यो यथा विस्रम्भमाप्नुयात् ॥ ६५ ॥
विस्रम्भे नित्यमुद्युक्तो निगूढाकारचेष्टितः ।
प्रियाण्येवाभिभाषेत यत् कार्यं कार्यमेव तत् ॥ ६६ ॥

---

तत्र हेतुरसंशयः । कोऽसावित्याह—तस्य विस्रम्भमिति । अभियोगस्थैर्यमालक्ष्य निस्संशयं प्रहरेत् । कदाचित् स्थिराभियोगी दुःखसाध्योऽपि स्यात् । तत्रेति—सन्धौ निःस्पृहः ॥ ६४ ॥

इदानीं कृतसन्धौ ज्यायस्यतिसन्धानविधिं श्लोकत्रयेणाह—बलीयसेत्यादि । प्रविश्य—प्रियहितद्वारेण । प्रयत्नवान् यथा हि प्रविष्टो नेता नातिसन्धीयते । विस्रम्भमासाद्य प्रहरेदित्येव ॥ ६५ ॥

स्वकार्ये निगूढाकारचेष्टितः । कार्यसंवरणार्थं प्रियाण्येवाभिभाषेत । जावविस्रम्भेऽपि यत्कार्यं हृदि स्थितं तत्प्रच्छन्नं कर्तव्यमेव, तदर्थत्वादन्यस्येति ॥ ६६ ॥

---

यस्मात् मनो दुनोति क्षते तोयबिन्दुरिव (पतन्) एवं व्यसने रिपुर्हीनोऽपि तस्मात्सन्धेयस्तथा ॥ ६३ ॥

(नेति ।) यदि हीनोऽपि सन्धिं नेच्छेत् तत्रालक्षितः कश्चिद्धेतुः कारणमसंशयं विद्यत इत्यनुमीयते इति शेषः । तत्र सामादिभिस्तथा विधेयं यथा विस्रम्भो भवति । विस्रम्भं चालक्ष्य प्रहरेदिति निष्ठुरं, यथा समूलो नश्यतीति ॥ ६४ ॥

संशयवृत्तेर्हीनतरसन्धिमभिधातुमाह—(बलीयसेति ।) ज्यायसा दण्डादिभिरुपनतः सन्धिं कृत्वा तमनुप्रविश्य अनुजीविवृत्त्यादिना प्रयत्नवानतिसन्धेयो भूत्वा तथासावाश्रितोऽनुगन्तव्यः सेवनीयो यथा विस्रम्भमाप्नुयादिति ॥ ६५ ॥

(विस्रब्ध इति ।) लब्धविस्रम्भो नित्यमुद्युक्तः सावधानो निगूढाकारचेष्टितः कृतेङ्गिताकारविपर्यासः "आचरन् हि प्राज्ञो धृतिम्" इति वचनात् । प्रियाण्येवाभिभाषेत जयजीवेत्यादिकानि, यच्च कार्यं विनाशादिकं तत्कार्यमवश्यं कर्तव्यमेव ॥ ६६ ॥

विस्रम्भात् प्रियतामेति विस्रम्भात् कार्यमृच्छति।
विस्रम्भेण हि देवेन्द्रो दितेर्गर्भमपातयत् ॥ ६७॥
युवराजेन सन्धाय प्रधानपुरुषेण वा।
अन्तःप्रकोपं जनयेदभियोक्तुः स्थिरात्मनः ॥ ६८ ॥
अर्थोत्सर्गेण महता लेखैश्चाप्यर्थसंहितैः।

---

देवेन्द्रो दितेर्गर्भमपातयत्। देवासुराणां विरोधे व्यापादितानेकपुत्रत्वाद्दितिः शोकसन्तप्ता भर्तारं काश्यपमाराध्य—शक्रस्य हन्ता मे पुत्रोऽस्त्विति वरं वव्रे। सोऽपि यदि वर्षशतमनाशौचा गर्भं धारयसि तदा यथासमीहितस्ते पुत्रो भवेदित्युक्तवान्। तस्याश्च तथेत्यङ्गीकृतवचनायां गर्भमादधे। ततस्तां गर्भसंरक्षणाय व्रतचारिणीं बटुव्यञ्जनो भूत्वा शक्रः स्खलितान्वीक्षणपरः परिचरन्नेकदा तस्याः पादशौचमकृत्वा शयनमारुह्य सुप्तायाः योगबलात् कुक्षिं प्रविश्य वज्रेण गर्भं सप्तधा कृत्वा पुनरेकैकं सप्तखण्डानकरोत्। तेनैकोनपञ्चाशन्मरुतोऽभवन् ॥ ६७ ॥

यद्यभियोक्ता न सन्धिमिच्छेत्, आत्मनश्च न विक्रमशक्तिं पश्येत्तदा विधानान्तरमेकादशभिः श्लोकैराह—युवराजेनेत्यादि। अन्तःकोपे हि जनितेऽभियोक्ता शिथिलाभियोगः स्यात् ॥ ६८ ॥

स्थिरात्मनो दीर्घाभियोगे अन्तःप्रकोपजननमाह—अर्थोत्सर्गेणेति। यथा अभियोक्ता जानाति तथार्थमुत्सृजेल्लेखश्च प्रेषयेदित्यर्थः। अर्थसंहितैरिति। अर्था-

---

(विस्रम्भादिति।) विस्रम्भाद्विश्वासात् प्रियतां वल्लभत्वमेति, विस्रम्भात्कार्यं तद्वधादिकं (ऋच्छति) गच्छति। विस्रम्भेण देवेन्द्रो दितेर्गर्भं दैत्यजनन्या गर्भम् अपातयत्। प्रतिबलो दैत्यो भविष्यतीति ॥ ६७ ॥

भूयोऽपि ज्यायस्यभियोक्तरि विधेयमाह—(युवराजेनेति)। अभियोक्तुः युवराजेन प्रधानपुरुषेण वा मन्त्रिपुरोहितसेनापत्यादिना सन्धाय गूढतरं सन्धिं कृत्वा अन्त प्रकोपं जनयेत्। परस्परविरोधं कुर्यादभियोक्तुः स्थिरात्मनोऽपि तथा ॥ ६८ ॥

(अर्थोत्सर्गेणेति।) अर्थस्य हिरण्यादेरुत्सर्गेण दानेन महता प्रचुरेण, लेखैश्चाप्यर्थसंहितैः मुद्राराक्षसोक्तन्यायेन भेदप्रतिपादकार्थसंहितैः प्रधानपुरुषस्य

प्रधानपुरुषस्येह प्रकुर्वीतार्थदूषणम् ॥ ६९ ॥
दूषिते हि महामात्रे रिपुरुग्रोऽपि धीमता ।
स्वपक्षे यात्यविश्वासमित्थम्भूतश्च निष्क्रियः ॥ ७० ॥
अरेरमात्यान् सन्धाय तदारम्भं शमं नयेत् ।
भिषग्भेदेन वा शत्रुं रसदानेन शातयेत् ॥ ७१ ॥
अरेः सर्वप्रयत्नेन पश्चात् कोपं प्रकल्पयेत् ।
पश्चात्कोपमथानिष्टमनुसृत्य प्रधर्षयेत् ॥ ७२ ॥

---

वगाढैः, ये पठितमात्रा एव शङ्कां जनयन्ति। प्रधानपुरुषस्येत्युपलक्षणार्थं युवराजस्यापि ॥ ६९ ॥

दूषिते विजिगीषुणा धीमतेति सम्बन्धः । स्वपक्षे यात्यविश्वासं यथायं महामात्रो विजिगीषुकार्ये स्थितः, तथायमपि कथं न भवेदिति । एवम्भूतश्चाविश्वासी निष्क्रियः संहृताभियोगो भवति । उग्रोऽपि बलवानपि इत्यर्थः ॥७०॥

अमात्यानिति–बुद्धिसचिवान् कर्मसचिवांश्च । तदारम्भं अभियोक्तुरमात्यानां वाभियोगव्यापारम् । भिषग्भेदेन वेति–शत्रुवैद्यं वा भेदयित्वा तेनैव रसं दापयित्वा शत्रुं साधयेत् ॥ ७१ ॥

पश्चात्कोपं प्रकल्पयेद् मित्रेण । अनुसृत्य प्रधर्षयेदुभयतः सम्पीडनेन ॥ ७२ ॥

---

सेनापत्यादेर्दूषणं कुर्यात् ॥ ६९ ॥

दूषणफलमभिधातुमाह–( दूषित इति । ) दूषिते सम्पादितदोषे महामात्ये सेनापत्यादिके रिपुरुग्रोऽपि बलवत्तरोऽपि क्रूरोऽपि धीमता विजिगीषुणा; स्वपक्षे यात्यविश्वासं, इत्थम्भूतश्च निष्क्रियः अभियोगक्रियारहितो भवतीत्यर्थः ॥ ७० ॥

( अरेरिति । ) तथा शत्रुमभियोक्तारं रसदानेन विषप्रयोगेण साधयेत् हन्यात् ॥ ७१ ॥

( अरेरिति । ) तथा अरेरभियोक्तुः सर्वप्रयत्नेन अत्यादरेण पश्चात्कोपं स्थानीये विषये वा कोपं कलहं प्रकल्पयेत् निष्पादयेत् । पश्चात्कोपमथातिष्ठन् विजिगीषुमनुसृत्य प्रधर्षयेत् हन्यादिति ॥ ७२ ॥

तद्देशकृतसंवासैश्चारैर्नैमित्तिकैरपि ।
उपोढव्यसनादेशं कारयेत् सिद्धलक्षणैः ॥ ७३ ॥
क्षयव्ययायासवधादिदोषव्यपेक्षयान्वीक्षितसाधुकृत्यः ।
कामं तु पीडामपि काञ्चिदिच्छेन्न विग्रहं तत्प्रभवा हि
दोषाः ॥ ७४ ॥
कलत्रमात्मा सुहृदो धनानि वृथा भवन्तीह निमेषमात्रात् ।

---

चारैर्नैमित्तिकैरपीति । नूतननाक्षत्रिकशाकुनिकव्यञ्जनैश्चारैर्वा तद्देशनिवासिभिः । उपोढव्यसनादेशमिति । अभियास्यतः शत्रोः महाव्यसनं भवितेत्यादेशयेत्, यात्राविघ्नार्थम् । सिद्धलक्षणैः सिद्धादेशैः, उल्कारुधिरवृष्ट्यादिभिर्वा कृतकैः ॥ ७३ ॥

कस्मादेवं यथोक्तमाचरेत् । क्षयेत्यादि । क्षयव्ययौ वक्ष्यति "मनुष्ययुग्यापचयः क्षयो हि हिरण्यधान्यापचयो व्ययस्तु" इति । (१६—२३) आयासः—शरीरक्लेशः । आदिशब्दान्मित्रकलत्रादिवियोगः । एते दोषा विग्रहे भवन्ति । तस्मात्तद्व्यपेक्षया न विग्रहमिच्छेत् । अन्वीक्षितसाधुकृत्यः—इदमत्र प्राप्तकालमिति । काममित्यभ्युपगमे । काञ्चित्पीडामभियोगमात्रकृताम् । तत्प्रभवा दोषाः विग्रहप्रभवाः क्षयादयः ॥ ७४ ॥

तदेव स्फुटयति—कलत्रेत्यादि । आकुलितानि दुरवस्थानात् । नातिवि-

---

( तद्देशकृतसंवासैरिति । ) अरेर्यो देशः तद्देशकृतसंवासैः । ते हि प्रात्ययिका भवन्ति । चारैर्गूढपुरुषैस्तथा नैमित्तिकैर्ज्योतिषिकव्यञ्जनैररेरभियोक्तुरुत्पातसूचितं उपोढव्यसनादेशं महाभयक्षयपराजयंदं आदेशं कारयेत् ॥ ७३ ॥

अभियोगत्याजनार्थं भूयोऽपि निषेधं दर्शयन्नाह—( क्षयेति । ) वाहनपुरुषादिवधः क्षयः । धान्यहिरण्यादीनामुपक्षयो व्ययः । प्रयाणे शीतोष्णवर्षदुःखाद्याबाधा आयासः । वधो युद्धे शस्त्रादिना मरणम् । आदिशब्दादौपनिषदप्रयोगैरङ्ग( न्य )वैकल्यादि । एते दोषा विग्रहे भवन्तीति येषामपेक्षया वीक्षितसाधुकृत्यः वीक्षितं साधुकृत्यं निरुपद्रवोपायो येन विजिगीषुणा स तथा । कामं तु—अगतिकगतिपक्षे कामशब्दप्रयोगः—परम् । पीडामपि कोशादिकृतपीडामपि काञ्चिदिच्छेत् न विग्रहं, हि यस्मात् तत्प्रभवाः सर्वेऽपि क्षयादिदोषाः ॥ ७४ ॥

तदेव स्पष्टयन्नाह—( कलत्रमिति । ) कलत्रं प्राणवल्लभं स्रीजनः । आत्मा

मुहुर्मुहुश्चाकुलितानि तानि तस्मान्न विद्वानतिविग्रही स्यात् ॥ ७५ ॥
सुहृद्धनं तथा राज्यमात्मानं कीर्तिमेव च ।
इति सन्देहदोलास्थं को हि कुर्यादबालिशः ॥ ७६ ॥
साम्ना प्रदानेन विभेदनेन सँन्धापयेत् साध्वभियुज्यमानः।

---

ग्रही स्यात्, यावता तु परः सन्दध्यात्, तावन्मात्रकं कुर्यादेव, तेजसः सन्धानकारणत्वात् ॥ ७५ ॥

सन्देहदोलास्थं स्यान्नवेति ॥ ७६ ॥

तस्मादुपायत्रयं प्रयुञ्जीत । यदाह–साम्नेत्यादि । आयान्तं दूरादेव सन्धापयेत् । साधु शोभनं, येन स्वयमेव सन्धिं याचेत । समसैन्यचक्रं–समबलं न्यायात्सन्धानार्थं प्राप्तम् । सामन्तत्वाच्छत्रुम् । यद्येवमपि न सन्धिमिच्छेत्तदा

---

सकलशास्त्रसंस्कृतः स्वकायः । सुहृदो बान्धवाः मित्राणि च । धनानि रत्नादीनि चतुर्विधानि । वृथा भवन्ति निरर्थकानि जायन्ते । शस्त्रप्रहारैर्गतजीवितस्य तत्कार्यसम्पादनात् । निमेषमात्रादेव । मुहुर्मुहुश्च विग्रहे सति आकुलितानि विग्रहभयेन भवन्ति तानि कलत्रादीनि । तस्मात्कारणात् विद्वान् नीतिशास्त्रवित् अतिविग्रही विरोधकारी स्यान्न च । (अ)न्यायतः समायातविग्रहं परिहरेदित्यर्थः ॥ ७५ ॥

अन्यायेन सङ्ग्रामे दोषं दर्शयन्नाह–(सुहृदिति ।) इति प्रतीतम् ॥७६॥

समोऽप्यभियोक्ता सन्धेय एवेति दर्शयन्नाह—(साम्नेति ।) साम्ना सम्बन्धोपाख्यानादिपञ्चविधेन । तद्यथा सम्बन्धोपाख्यानम्, गुणकीर्तनम्, परस्परोपकारदर्शनम्, आयतिप्रदर्शनम्, आत्मोपनिधानमिति । तत्र अस्माकं पिता तव भ्राता भवतीत्यादि सम्बन्धोपाख्यानम् । तथा अभिजनशरीरकर्मप्रकृतिश्रुतद्रव्यादीनां श्लाघनं गुणकीर्तनम् । तथा भवद्भिरस्माकमस्माभिश्च भवता[ ङ्कृत ]मिति परस्परोपकारदर्शनम् । तथा अस्मिन्नेव कृते इदमावयोर्भविष्यतीत्याशाजननमायतिदर्शनम् । तथा यन्मम द्रव्यं तद् भवतः स्वकृत्येषु उपयोज्यमिति आत्मोपनिधानमित्येवं साम पञ्चविधम् । तथा प्रदानमर्थोपकारस्तदपि चतुर्विधं( पञ्चविध ? )मपूर्वदानं, गृहीतप्रतिदानं, गृहीतानुवर्तनं, ( स्वयं ? ) ग्राह( प्रवर्तनं, देय ? ) प्रमोक्ष इति । भेदनं द्विविधं शङ्काजननमभिभर्त्सनं च भेद इति कौटिल्यः । एवंविधोपायत्रयेण सन्धापयेदभियोक्तारं विगतामर्षं कृत्वा सन्धौ योजयेत् साधु सुश्लिष्टं यथा भवति । अभियुज्यमानो विजिगीषुः सन्धित्सुर्यदि

सन्धित्सुराराात् समसैन्यचक्रं सामन्तमायान्तमपेतसन्धिम् ॥७७॥
स्वगुप्तिमाधाय सुसंहतेन बलेन धीरो विचरन्नरातिम् ।
सन्तापयेद् येन सुसम्प्रतप्तस्तप्तेन सन्धानमुपैति तप्तः ॥ ७८ ॥
इति स्म सन्धिं खलु सन्धिवित्तमा बभाषिरे पूर्वतना महर्षयः ।
तदेतदेवं विनयेन्नरेश्वरः संवीक्ष्य कार्यं गुरु चेतरद् द्विधा ॥७९॥

---

तमपेतसन्धिं ( साध ? सन्ताप )येदिति वक्ष्यमाणश्लोकेनानुबन्धः ॥ ७७ ॥

स्वगुप्तिं स्वरक्षां कृत्वा, सुसंहतेन—परस्याभेद्येन, सन्तापयेद्, येन शत्रु सम्प्रतप्तः स्यात्, ततश्चोभयसन्तापात्सन्धानं—यदाह—" तप्तेन सन्धानमुपैति तप्तः " इति ॥ ७८ ॥

प्रकरणार्थमुपसंहरन्नाह—इतीत्यादि । तदेतदेवमिति । तस्मादेतद्यथोक्तम् । एवं विनयेदुक्तेन विधिना प्रयुञ्जीत । गुरु चेतरादिति, परात्मनोर्बलाबलं बुद्ध्वा चेत्यर्थः ॥ ७९ ॥

---

भवति आरात्सन्निहितं सामन्तं भूम्यनन्तरमित्यर्थः । आयान्तमागच्छन्तमपेतसन्धिं सन्धापयेदिति सम्बन्धः ॥ ७७ ॥

सन्धिमनिच्छत्यभियोक्तरि विधेयमाह—( स्वगुप्तिमिति । ) स्वगुप्तिमात्मनः सपरिच्छदस्य रक्षामाधाय कृत्वा सुसंहतेन अभेदेनैव एकीभूतेन ( बलेन ) चतुरङ्गेण सारतरेण धीरो धैर्यवान् विचरन् विविधं पश्चात्पुरतः सर्वतः चरन् वीवधासारप्र( साराप ? )चारं कुर्वन् अरातिं सन्धिमनिच्छन्तं सन्तापयेदुद्वेजयेत् येन स सुसम्प्रतप्तो भवतीति शेषः । कस्मात् ? यस्मात्तप्तं लोहं तप्तेनैव लोहेन सन्धानमुपैति नान्यथेति दर्शनार्थः । तथा च कौटिल्यः—"नातप्तं लोहं तप्तेन सन्धत्त " इति ॥ ७८ ॥

उपसंहरन्नाह—( इतीति । ) इत्येवमुक्तप्रकारेण सन्धिवित्तमा अतिशयेन सन्धिविदः सान्धिं बभाषिरे प्रोक्तवन्तः पूर्वतमाः शुक्रबृहस्पतिप्रभृतयो महर्षयः । बलादाक्रम्य तत्तस्मात्कारणादेतत्सान्धिमनिच्छत्यप्यरौ विनयेत् विशेषेण पापयेत् अरिः ( रिं ? ) कारयेदित्यर्थः । समीक्ष्य प्रज्ञया दृष्ट्वा कार्यं गुरु चेतरच्चैवं द्विधेति ॥ ७९ ॥

इति सन्धिविकल्पो नाम चतुर्दशं प्रकरणम् ।

इति श्रीकामन्दकीयनीतिसारे सन्धिविकल्पो नाम नवमः सर्गः ।

---

इति सन्धिविकल्पो नाम चतुर्दशं प्रकरणम् ।

इति शङ्करार्यकृतायां कामन्दकीयनीतिसारपञ्जिकायां जयमङ्गलायां सन्धिविकल्पो नाम नवमः सर्गः ॥

---

इति चतुर्दशं सन्धिविकल्पप्रकरणम् ॥

इति कामन्दकीयनीतिसारटीकायामुपाध्यायनिरपेक्षायां सन्धिविकल्पो नाम नवमः सर्गः ॥

## अथ दशमः सर्गः।

### १५ विग्रहविकल्पप्रकरणम्।

अमर्षोपगृहीतानां मन्युसन्तप्तचेतसाम्।
परस्परापकारेण पुंसां भवति विग्रहः॥ १॥
आत्मनोऽभ्युदयाकाङ्क्षी पीड्यमानः परेण वा।
देशकालबलोपेतः प्रारभेतैवं विग्रहम्॥ २॥

---

अथ दशमः सर्गः।

१५ विग्रहविकल्पप्रकरणम्।

सन्ध्युपायत्वाद्विग्रहस्य, तदनन्तरं विग्रहविकल्पा उच्यन्ते। तत्र लोकमतीत्या विग्रहोत्पत्तिं दर्शयन्नाह—अमर्षेत्यादि। अमर्षः परिभवासहिष्णुता। मन्युशब्दोऽत्र दुःखे वर्तते। परस्परापकारेणेति विग्रहस्य स्वरूपमाह। इदमुक्तं भवति—अमर्षात् शरीरद्रव्यपीडनादिदुःखाच्च लोके परस्परापकारलक्षणो विग्रहो भवतीति। तथाचोक्तम् "आरण्योऽग्निरिव हि दुःखामर्षजं तेजो विक्रमयतीति। (कौ० अ० ७–२–१०१)॥ १॥

वैशेषिकं विधिमाह—आत्मन इत्यादि। अजातदुःखामर्षोऽप्यात्मवृद्धिं वाञ्छन्, परेण वा राज्यापहारादिना पीड्यमानो जातदुःखामर्षो विगृह्णीयात्। देशकालबलोपेत इत्युभयत्रापि द्रष्टव्यम्। बलं शक्तिः, देशकालाद्यभ्युच्चित इत्यर्थः। प्रारभेतैवेत्यवधारणादयमेव पक्षो ज्यायानिति दर्शयति॥ २॥

---

अथ दशमः सर्गः।

१५ अथ विग्रहविकल्पप्रकरणम्।

सन्धिविकल्पादनन्तरं विग्रहविकल्पमभिधातुं विग्रहकारणान्येव तावदाह—(अमर्षोपगृहीतानामिति।) इति प्रतीतम्॥ १॥

(आत्मन इति।) न केवलममर्षादिकं विग्रहकारणं आत्मनोऽभ्युदयाकाङ्क्षीपि। सा विद्यते यस्य सः। पीड्यमानः परेण वा। गत्यन्तराभावे देशबलेन स्वसैन्यस्यैवानुकूल्येन तथैव कालबलेनोपेतः प्रारभेतेह विग्रहं नान्यथेत्यर्थः॥ २॥

राज्यस्त्रीस्थानदेशानां ज्ञानस्य च बलस्य च ।
अपहारो मदो मानः पीडा वैषयिकी तथा ॥ ३ ॥
ज्ञानार्थशक्तिधर्माणां विघातो दैवमेव च ।
मित्रार्थं चावमानश्च तथा बन्धुविनाशनम् ॥ ४ ॥
भूतानुग्रहविच्छेदस्तथा मण्डलदूषणम् ।
एकार्थाभिनिवेशित्वमिति विग्रहयोनयः ॥ ५ ॥

---

यैः परेण पीड्यमानो विगृह्णीयात्, तान् विग्रहहेतूनाह—राज्येत्यादिश्लोकत्रयेण । अत्र ज्ञानग्रहणमेकमपहारशब्देन सम्बध्यते । द्वितीयं विघातशब्देन सम्बन्धनीयम् । एते विंशतिर्विग्रहहेतवः ॥ ३—४—५ ॥

---

विग्रहोत्पत्तिकारणान्यभिधातुमाह—( राज्यस्त्रीस्थानदेशानामिति । ) राज्यं सप्तप्रकृतिकम् । स्त्री सीतादिकल्पा । स्थानं जानपदाधिष्ठानम् । देशो राष्ट्रैकदेशः। ज्ञानं ज्ञानहेतुत्वादुपाध्यायादयः । धनस्य रत्नादेरेतेषां प्रत्येकमपहारो विग्रहयोनिरिति सम्बन्धः । तथा मदः शौर्यादिजनितो दर्पो यथा दम्भोद्भवस्य । उक्तं च—" मदाद्दम्भोद्भवो नृप " इति । मानोऽहङ्कारः कथमपि रामभयात् सीतां न समर्पयामीत्येवंरूपः । उक्तं च—" मानाद्रावणः परदारानप्रयच्छन्नि "ति । पीडा वैषयिकी तथेति विषयो जनपदस्तस्य पीडा सापि विग्रहयोनिः । विषयमूलप्रकृतीनाम् ( च सा तथा ) ॥ ३ ॥

( ज्ञानेति । ) ज्ञानविघातो ज्ञानस्य कारणभूतोपाध्यायादिविघातः । अर्थविघातो भूमिहिरण्यमित्ररूपस्यार्थस्य विघातः। शक्तिविघातः प्रभुमन्त्रोत्साहशक्तीनां विघातोऽनुत्पत्तौ यत्नः, उत्पन्नानां विनाशः । दैवमेव च जन्मान्तरकृतं शुभाशुभं ग्रहदौस्थ्यादिलिङ्गम्। मित्रार्थश्चेति मित्रसाहाय्यादिभवः। अपमानश्चेति मान्यानामपमाननम् । तथा बन्धुविनाशनं विग्रहयोनित्वेन प्रसिद्धमेव ॥ ४ ॥

( भूतेति । ) भूतानुग्रहविच्छेद इति—एकेन दत्ताभये मृगवने यद्यपरो मृगयायां विचरति तदपि विग्रहकारणम् । तथा मण्डलस्य द्वादशराजकस्य मध्ये अदुष्टस्यापि दूषणं दुष्टत्वापादनम् । एकार्थाभिनिवेशित्वं एको भूम्यादिः स्त्र्यादिर्वा योऽर्थस्तत्राभिनिवेशित्वम्——ग्रहणाग्रहबन्धः । इति—प्रकारः एवंप्रकाराण्यन्यान्यपि परीवादस्तेयादयो( ऽपीति ) विग्रहहेतवो भवन्तीति ॥ ५ ॥

राज्यस्त्रीस्थानदेशानां दानेन च दमेन च ।
विग्रहस्य तु युक्तिज्ञैरिति प्रशमनं स्मृतम् ॥ ६ ॥
एतदेव तु विज्ञेयं स्वार्थधर्मविघातजे ।
विषयध्वंसजे शत्रोर्विषयप्रतिपीडनम् ॥ ७ ॥
ज्ञानापहारसम्भूते ज्ञानशक्तिविघातजे ।

---

तत्र देशकालबलोपेतश्चेद्विगृह्णीयात् । नो चेदभ्युपायैः शमयेदित्युपाया-नाह दशभिः श्लोकैः । राज्येत्यादि । सप्तोपायान् वक्ष्यति—

" साम दानञ्च भेदश्च दण्डश्चेति चतुष्टयम् ।
मायोपेक्षेन्द्रजालञ्च सप्तोपायाः प्रकीर्तिताः " इति । (१८—३)

तत्र राज्यं प्रकृतयः, स्त्री अवरोधसम्बद्धा, स्थानं दुर्गं, देशो राष्ट्रं, एषाम-न्यतमापहारजस्य विग्रहस्य प्रशमनमिति सम्बन्धः । दानेन दमेन चेति, कोशद-ण्डभूमीनामन्यतमप्रदानेन राज्यप्रत्यानयनहेतुना, दमेन चेत्यप्रकाशेन दण्डेन । इदमुक्तं भवति—राज्यादिकमपहरन्तं शत्रुं तूष्णीं युद्धेनोपताप्य प्रकाशयुद्धान्निवर्त-येदिति ॥ ६ ॥

स्वार्थधर्मविघातजे—विग्रह इति विपरिणतमनुषज्यते । " ज्ञानार्थशक्ति-धर्माणां विघात " ( श्लो० ४ ) इत्यत्रार्थधर्मौ निर्दिशति । ज्ञानशक्ती तु निर्देक्ष्यति । स्वार्थो दुर्गादिकर्म, स्वधर्मश्चाश्वमेधादिप्रवर्तनम् । विषयध्वंसज इति पीडां वैषयिकीं निर्दिशति । शत्रोर्विषयप्रतिपीडनं, यावन्मात्रं शत्रुर्दाहविलो-पादिनाऽपकुर्यात्तावन्मात्रमस्य प्रत्युपकुर्यात्तेजसः सन्धानकारणत्वात् ॥ ७ ॥

ज्ञानापहारसम्भूते ज्ञानशक्तिविघातज इति । अशास्त्रचक्षुर्बालिशतर इति

---

कारणाभावात्कार्याभावं मन्यमानो विग्रहकारणानामुपन्नानामप्युपशमार्थ-माह—( राज्येति । ) राज्यादीनामुक्तरूपाणां प्रमादादपहृतानामपि दानेन प्रत्यर्प-णेन, दमेनोपशमेन च विग्रहस्य युक्तिज्ञैरिति प्रशमनं स्मृतमिति प्रतीतम् ॥६॥

( एतादिति । ) एतदेव तु विज्ञेयं स्वार्थधर्मविघातजे विग्रहे शमनामिति सम्बन्धः । विषयध्वंसजे शत्रोर्विषयस्य प्रतिपीडनं तेनामर्षस्योपशमो भवतीति ॥ ७ ॥

( ज्ञानेति । ) तथा ज्ञानविघातजे शक्तिविघातजे च शमो विग्रहस्यो-

शमस्तदर्थत्यागेन क्षान्त्या वोपेक्षणेन वा ॥ ८ ॥
अधर्मद्रोहसंयुक्ते मित्रजातेऽप्युपेक्षणम् ।
आत्मवन्मित्रजाते तु प्राणानपि परित्यजेत् ॥ ९ ॥
अपमानात् तु सम्भूतं मानेन प्रशमं नयेत् ।

---

परेण सम्भूतज्ञानेन विलोपात्तेजस्विनो विग्रहः सम्भवति, तथा शास्त्रादिपरिज्ञानं मा भूदस्येतीर्ष्ययाऽऽचार्यनिवारणादिव्यापारेण ज्ञानविघातादपि सम्भवति, यथा दुर्योधनेनार्जुनस्य । विजिगीषोः परेण पार्ष्णिग्राहादिना शक्तिविघाताद्विग्रहो भवति । एषु त्रिषु यथासम्भवं शमोपायत्रैयम् । तत्र शक्तिविघातजे तदर्थत्यागेन शमो'भियुञ्जानस्य, यदर्थमयं शक्तिं विहन्यात्, तमर्थं त्यजेत् । अथवा पराभियोगादभियोगसाध्यार्थसम्पदानेन शमः । क्षान्त्या वा ज्ञानापहारसम्भूते शमः । तत्र शुष्कविग्रहे बलवतोऽपि क्षान्तिरेव श्रेयसी । सा च क्रोधोपशमस्वभावत्वात्सामरूपैव । उपेक्षणेन च ज्ञानविघातजे शमः । कियन्तं कालं ज्ञानविघातं मे करिष्यतीति बलवानप्युपेक्षेत, न साहसाद्विगृह्णीयात् ॥ ८ ॥

मित्रजात इति मित्रार्थं निर्दिशति । तत्राधार्मिकस्य कृतद्रोहस्य च मित्रस्यार्थादन्येन सहोत्पन्नं विग्रहं बलवानप्युपेक्षेत । आत्मवन्मित्रजाते त्विति । धार्मिकस्य मित्रभाविनश्च मित्रस्यार्थादन्येनोत्पन्ने विग्रहे दुर्बलोऽपि प्राणानपि परित्यजेत् । तथा हि “ मित्रगोब्राह्मणार्थेषु सद्यः प्राणान् परित्यजेत् ” इति निदर्शनम् ॥ ९ ॥

अपमानात्त्विति । विजिगीषुणा परस्य वाक्पारुष्याद्यपमानात् । माने

---

प्रशम तदर्थत्यागेन उपाध्यायादिपरित्यागेनार्पणेन वा । क्षान्त्यापहारादेः क्षमयानुज्ञानादुपेक्षणेन वा दोषानुद्भावनेन वाऽनवधारणेन ॥ ८ ॥

( अधर्मेति । ) अधर्मद्रोहाभ्यां युक्तं मित्रमप्युपेक्षेत । तत्साहाय्यादानं विग्रहोपशमाय भवति । आत्मवन्मित्रजाते त्विति मित्रस्यात्मा प्रकृतिः तद्युक्तः ( तत्त्वं ) मित्रसम्पद्गुणसम्पन्नत्वम् । तथा च कौटिल्यः—“ पितृपैतामहं नित्यं च वश्यमद्वैध्यं महल्लघुसमुत्थानमि ”ति । एतद्गुणरूपो मित्रस्यात्मा, स विद्यते यस्य तदात्मवन्मित्रम् । तदर्थं जाते विग्रहे प्राणानपि परित्यजेत् न विग्रहमिति । एवंविधमित्ररक्षार्थं प्राणानपि परित्यजेदित्यर्थः ॥ ९ ॥

(अपमानादिति ।) तथा सम्पूर्वं उपाय इति साम प्रतिपादनं तत्पूर्वं उ-

सामपूर्व उपायो वा प्रणामो वाभिमानजे ॥ १० ॥
रहस्येन प्रयोगेण रहस्यकरणेन वा ।
विग्रहं शमयेद् धीरो बन्धुनाशसमुद्भवम् ॥ ११ ॥
येन पीडा न जायेत तादृशन्तु विचक्षणः ।
कुर्यादर्थपरित्यागमेकार्थाभिनिवेशजे ॥ १२ ॥
धनापहारजे जातु विरोधं न समाचरेत् ।

---

न--सान्त्वपूर्वेण सत्कारेण । अभिमानज इति मानं निर्दिशति । असाध्येऽभ्युन्न-तमनस्कतां दर्शयतो रावणस्येव विग्रह उत्पद्यते । तत्र सामपूर्व उपायो दानभे-भेदात्मकः, प्रणामो वा शमहेतुः । ननु च तवाहमित्यात्मोपनिधानं प्रणामः सामैव । सत्यम्, अभिमानजे प्रधानमात्मोपनिधानमिति दर्शनार्थं पृथङ्निर्देशः ॥ १० ॥

बन्धुनाशसमुद्भवमिति । विजिगीषुणा परस्य बन्धुविनाशाद्विग्रह उत्प-द्यते । तत्र दुर्बलश्चेद्, रहस्येन प्रयोगेण--सामादीनां चतुर्णामुपांशुप्रयोगेण । रह-स्यकरणेन वा मायेन्द्रजालसम्पादनेन शमयेद्, अन्यथानेन मे बन्धुर्हत इति परः परशुराम इव कार्तवीर्यं नियतमेनं विगृह्णीयात् ॥ ११ ॥

येन पीडा न जायेतेति । यस्तु परित्यज्यमानः पीडामावहति, तं न परि-त्यजेत्, तदर्थमेव तस्याभिनिवेशात् ॥ १२ ॥

धनापहारज इति । परेण कोशस्यैकदेशापहाराद्विग्रह उत्पद्यते । तत्र

---

पायो दानं भेदो वा । प्रणामोऽभिमानजे विग्रहे प्रशमार्थं विधेयः । "इन्द्राय स प्रणमते यो बलीयसे नमती" त्याचार्यवचनात् ॥ १० ॥

( रहस्येनेति । ) रहसि विजने भवो रहस्यः । यस्य बन्धुविनाशो वि-हितस्तस्य एकान्ते अविदित एव गत्वा आत्मनिवेदनपूर्वकं सामादीनां प्रयोगेण । एतच्च धर्मविजयिनि द्रष्टव्यम् । रहस्यकरणेन वा असुरविजयिनि । रहस्यानि को-धोपशमनमोहनमारणादीनि औपनिषदिकोक्तानि तेषां करणेन वा विग्रहं शमयेत् धीरो बन्धुनाशसमुद्भवमिति प्रतीतम् ॥ ११ ॥

( येनेति । ) येनार्थपरित्यागेन शक्तीनां पीडा क्षीणत्वं न जायेत तादृशं तु विचक्षणः कुर्यादर्थ( परित्याग )मेकार्थाभिनिवेशजे इति तात्पर्यार्थः ॥ १२ ॥

( धनेति । ) धनस्य कोशस्यापहारेण जाते विग्रहे सति विरोधं न समा-

कदाचिद् विग्रहे पुंसां सर्वनाशोऽपि जायते ॥ १३ ॥
तथोपन्यासयुक्तेन सम्प्रदानादिकेन च ।
महाजनसमुत्पन्नं भेदेन प्रशमं नयेत् ॥ १४ ॥
भूतानुग्रहविच्छेदजातस्यान्तं व्रजेद् वशी ।
दैवमेव तु दैवोत्थे शमनं साधुसम्मतम् ॥ १५ ॥
मण्डलक्षोभसम्भूतमुपायैः प्रशमं नयेत् ।
सापत्नं वास्तुजं स्त्रीजं वाग्जातमपराधजम् ॥ १६ ॥
वैरप्रभेदनिपुणैर्वैरं पञ्चविधं स्मृतम् ।

---

विरोधं न समाचरेत्, क्षान्तिमेव कुर्यात्, मा भूत्—सर्वनाश इति ॥ १३ ॥

महाजनसमुत्पन्नमिति मदं निर्दिशति। शौर्याद्यवलेपाल्लोकमभिभवतो महाजनविरोधो भवति । तं भेदेन शमयेत् । बहूनां संहतानां भेदसाध्यत्वात् ॥ १४ ॥

भूतानुग्रहविच्छेदजातस्येति । भूतरक्षणं राज्ञो धर्मः । तस्मिन् परेण विच्छिद्यमानेऽवश्यम्भावी विग्रहस्तस्यान्तं व्रजेद् दुर्बलोऽपि लोकानुग्रहमेव साधयेत् । स्वयमेव वा न भवेदित्यर्थः । दैवोत्थ इति दैवहेतुके ग्रहोपसृष्टप्रभव इति यावत् । दैवमेव शमनमथर्वविहितं कर्म शान्तिकपौष्टिकम् । साधुसम्मतं, पुरोहिताभिप्रेतम् ॥ १५ ॥

मण्डलक्षोभसम्भूतमिति । मण्डलं हि प्रकोपयतस्तत्सङ्क्षोभाद्विरोध उत्पद्यते। उपायैः सामदानादिभिः । मतान्तरमाह श्लोकत्रयेण सापत्नमित्यादि । दैवस्याचिन्त्यत्वान्मानुषोत्थं पञ्चविधं विरोधकारणं शेषाणामत्रैवान्तर्भावादिति केचित्। तत्र सपत्नी( त्न ? )भवं सापत्नं, विभीषणरावणयोरिव । अत्रैकार्थाभिनिवेश-

---

चरेत् । कस्मादित्याह—कदाचिदिति । तस्माद्धनांशापहारः सोढव्य इति ॥१३॥

एभिरेव कारणैर्बहुभिः सह समुत्पन्ने विग्रहे प्रशममाह—( महाजनेति । ) ( भेदेन ) तथोपन्यासयुक्तेन सम्प्रदानादिकेन चेत्यर्थः ॥ १४ ॥

( भूतानुग्रहेति । ) तथा भूतानुग्रहविच्छेदोऽनन्तरोक्तस्तस्यान्तं वशी व्रजेत् नान्यः । दैवमेवेत्यादि प्रतीतम् ॥ १५ ॥

( मण्डलक्षोभेति । ) इति सुगमम् । इदानीं वैरस्योत्पत्तिप्रकारमाह—(सापत्नमित्यादि ) सपत्नः शत्रुस्तज्जं, वास्तु भूम्यादिस्तद्धरणादिजं, स्त्रीजमपराधजं वचनजं चेति वैरप्रभेदनिपुणैर्वैरं पञ्चविधं स्मृतमिति प्रतीतम् । बाहुदन्तीसुत इन्द्र-

जातं भूम्युपरोधेन तथा शक्तिविघातजम् ॥ १७ ॥
भूम्यनन्तरजातं च मण्डलक्षोभजं तथा।
चतुर्विधं वैरजातं बाहुदन्तिसुतोऽब्रवीत् ॥ १८ ॥
कुलापराधजे प्राहुर्वैरे द्वे एव मानवाः।
किञ्चित्फलं निष्फलञ्च सन्दिग्धफलमेव च ॥ १९ ॥
तदात्वे दोषजननमायत्यां चापि निष्फलम्।

---

जोऽन्तर्गतः। स्त्रीजवास्तुजयोः—स्त्रीस्थानापहारजौ। वाग्जाते ज्ञानापहारजांवमानसम्भूतौ। अपराधजे च परिशिष्टाश्चतुर्दशान्तर्भूताः। अपराधस्यानेकप्रकारत्वात्। चतुर्विधमित्यपरे। तत्र भूम्युपरोधजाते स्थानदेशापहारजावन्तर्भूतौ। शक्तिविघातजं मण्डलक्षोभजञ्च स्वरूपत एवोक्ते। भूम्यनन्तरजाते च परिशिष्टाः पञ्चदशान्तर्भूताः, भूम्यनन्तरस्य शत्रोरनेकधापराध्यमानत्वात्। वैरमेव वैरजातं द्रव्यजातवत् ॥ १६–१७–१८ ॥

अन्ये सहजकृत्रिमभेदाद्द्विविधमाहुः। तत्र कुलक्रोधजे सहजविरोधे एकार्थाभिनिवेशजस्यान्तर्भावः। अपराधजे च कृत्रिमे च परिशिष्टानामिति। देशकालबलोपेतोऽपि विग्रहं कुर्वन् षोडशविधं त्यजेदित्यपवादमाह श्लोकाष्टकेन। किञ्चित्फलमित्यादि। तदात्वे चायत्यां च स्वल्पफलं निष्फलं सान्दिग्धफलञ्च न कुर्यादेव। विग्रहामीति वक्ष्यमाणेन प्रतिपदं योज्यम् ॥ १९ ॥

तदात्वे दोषजननामिति। आयत्यां ।.फलम्, तदात्वे प्रतिकार्यं पश्चात्को

---

श्चतुर्विधमेव वैरमित्यब्रवीत्। वास्तुजमेव द्विविधं—भूम्युपरोधजं, अनुपरोधेऽपि भूम्यनन्तरेण सह विरोधो भवतीति (भूम्यनुपरोधजं) तथा शक्तीनां प्रभुमन्त्रोत्साहानां विघाताज्जातं, मण्डलक्षोभो द्वादशराजक(क्षोभः) एवं चतुर्विधं वैरजातं मन्यत इन्द्रः ॥ १६, १७, १८ ॥

कुलजं सपत्नजं निष्कारणकम्। शेषं तु यत्सकारणकं तदपराधजमेवेत्याह—(कुलेति।) मानवा मन्यन्त इति। (इदानीं विग्रहे अपवादमाह—) किंचिदल्पतरं फलं यस्य विग्रहस्य तं तथा निष्फलं फलरहितं सान्दिग्धफलं संशयितफलमेव च ॥ १९ ॥

(तदात्व इति।) तदात्वे विग्रहकाले एव दोषजननं मित्रादिविरोधकारकम्। आयत्यामागामिनि काले निष्फलम्। तथा आयत्यां च तदात्वे च काल-

आयत्याश्च तदात्वे च दोषस्य जननं तथा ॥ २० ॥
अपरिज्ञातवीर्येण परेण स्तोभितोऽपि वा ।
परार्थं स्त्रीनिमित्तश्च दीर्घकालं द्विजोत्तमैः ॥ २१ ॥
अकालदैवयुक्तेन बलोद्वृत्तसखेन च ।
तदात्वे फलसंयुक्तमायत्यां फलवर्जितम् ॥ २२ ॥
आयत्यां फलसंयुक्तं तदात्वे निष्फलं तथा ।

---

पादिदोषकरम् । आयत्यां चापि निष्फलम्, तदात्वे दोषस्य जननमिति । आयत्यां मण्डलकोपादिदोषस्य तदात्वे च पार्ष्णिग्राहादिदोषस्य जननम् ॥ २० ॥

अपरिज्ञातवीर्येण अन्तस्तत्त्वतोऽपरिच्छिन्नबलेन हि परेण सह विग्रहस्य क्षयादिदोषकरत्वात् । स्तोभितोऽपि वा " हन्यतां कलिना कलि " रिति मन्यमानेन परेणालीकदोषप्रख्यापनात्सन्दीपितोपि वा । परार्थम् अनुपकारिणः परस्यार्थेनेत्यर्थः । स्त्रीनिमित्तं सामान्ययोषिदर्थम् । दीर्घकालं दीर्घविग्रहस्य क्षयादिदोषफलत्वात् । द्विजोत्तमैः प्रकृष्टक्रियादियुक्तैः सह विग्रहो विनाशायैव ॥२१॥

अकालदैवयुक्तेन अकस्माद्दैवसम्पन्नेन लब्धवरत्वात् । बलोद्वृत्तसखेन च शक्त्याभ्यधिकमित्रयुक्तेन । तदात्वे फलसंयुक्तं परदेशविलोपादिलाभात् । आयत्यां फलवर्जितं शत्रोः सापाश्रयस्यानुच्छेदात् ॥ २२ ॥

आयत्यां फलसंयुक्तं—मण्डलस्य शत्रोरुच्छेदे विजिगीषोर्मण्डलानुग्राह्यता-

---

द्वयेऽपि मित्रविरोधमण्डलक्षोभादिकरं तथैव विग्रहं न कुर्यादिति सम्बन्धः ॥२०॥

( अपरिज्ञातेति । ) न परिज्ञातं वीर्यं सामर्थ्यं यस्य तेन च सह, विग्रहे परेणान्येन, हेतुना दुष्टेन स्तोभितो ग्राहितविग्रहग्रहावेशो वा, विग्रहं न कुर्यात् । परार्थं परस्यार्थः सम्पद्यतामिति । स्त्रीनिमित्तमेकार्थाभिनिवेशित्वम् । न च दीर्घकालं यस्मिन् दीर्घकालो लगति । द्विजोत्तमैरिति ब्राह्मणैर्महापातकसम्बन्धत्वात् ॥ २१ ॥

( अकाल इति । ) अकाले विग्रहं न कुर्यात् । दैवयुक्तेनारिणा—दैवयुक्तात्परिभव एव भवति । बलोद्धतसखेन चेति, बलोद्धतः सखा मित्रादिर्यस्य तेन च । ( तदात्व इत्यादि ) अयं मध्यम एव ॥ २२ ॥

( आयत्यामिति । ) आयत्यां फलसंयुक्तं तदात्वे फलवर्जितम् इत्ययमपि

इतीमं षोडशविधं न कुर्यादेव विग्रहम् ॥ २३ ॥
तदात्वायतिसंशुद्धमारभेत विचक्षणः ।
तदात्वायतिशुद्धानि सर्वकर्माणि चिन्तयेत् ॥ २४ ॥
तदात्वायतिसंशुद्धमातिष्ठन्नैति वाच्यताम् ।
साधु लोकद्वयग्राहि विद्वान् कर्म समाचरेत् ॥ २५ ॥
परित्यजेदिमं लोकं नार्थलेशोपलोभितः ।
परलोकविरुद्धानि कुर्वाणं दूरतस्त्यजेत् ।

---

लाभात्, तदात्वे निष्फलं देशविलोपादिफलाभावात् ॥ २३ ॥

ननु चास्मिन्विग्रहद्वये तावद्दोषरहितेन फलेन योगोऽस्ति । तदात्वे आयत्यां चेति विशेषः । अतः कथमिदं न कुर्यादित्याह—तदात्वेत्यादि । संशुद्धमिति । विग्रहो हि क्षयव्ययप्रवासप्रत्यवायहेतुत्वादगत्या क्रियते । स चेत्कालद्वयेऽपि न फलवान्, किं तेनारब्धेन ? तथान्यदपि कर्म कालद्वयसंशुद्धमारभेतेत्यनुषङ्गादाह—सर्वकर्माणीति ॥ २४ ॥

नैति वाच्यतां विचक्षण इति । वर्तमानदेहापेक्षया कालद्वयपरिशुद्धिं निरूप्य भविष्यद्वर्तमानदेहापेक्षया निरूपयन्नाह—साध्वित्यादि । लोकद्वयग्राहीति—उभयलोकाविरुद्धमित्यर्थः ॥ २५ ॥

तत्र वर्तमानकालपरिशुद्धिमधिकृत्याह—परित्यजेदिमं लोकमिति । अर्थलवतृष्णयापि सहसा विगृह्णता विनाशसम्भवादयं लोकस्त्यक्तो भवति । भविष्यत्कालमधिकृत्याह—परलोकविरुद्धानीति । अदृष्टविरुद्धानि कर्माणि कुर्वाणं पुत्रमपि परित्यजेत् । स्वयञ्च न कुर्यादिति सामर्थ्यलब्धम् । आगमप्रमाणत्वा-

---

मध्यम एव ॥ २३ ॥

( तदात्वायतीति । ) सर्वकर्माणि सन्ध्यादीनि लाभपालनादीनि च । शेषं प्रतीतम् ॥ २४ ॥

( तदिति । ) परलोकसाधनार्थम् ॥ २५ ॥

( परित्यजेदिति । ) अन्यमपि पुरुषं परलोकविरुद्धानि कुर्वाणं दूरतस्त्यजेदिति प्रतीतम् । इत्युक्तेन क्रमेण कल्याणमाचरेत् । परलोकाभिगमं आगमसंज्ञं प्रमाणमस्तीति "वेदाः प्रमाणं स्मृतयः प्रमाणम्" इति प्रमाणबलात् सर्वदोभयलो

इत्यागमप्रमाणत्वात् साधु कल्याणमाचरेत् ॥ २६ ॥
यदा मन्येत मतिमान् हृष्टं पुष्टं स्वकं बलम् ।
परस्य विपरीतञ्च तदा विग्रहमाचरेत् ॥ २७ ॥
स्फीतं यदानुरक्तञ्च भवेत् प्रकृतिमण्डलम् ।
परस्य विपरीतञ्च तदा विग्रहमाचरेत् ॥ २८ ॥
उपनामि यदा दैवं सुव्यक्तमुपलक्षितम् ।
परस्य विपरीतन्तु तदा विग्रहमाचरेत् ॥ २९ ॥
मित्रमाक्रन्द आसारो यदा स्युर्दृढभक्तयः ।

---

दिति । अस्मिन्विषये आगमः प्रमाणम्, प्रत्यक्षादिप्रमाणानामतीन्द्रियार्थाविषयत्वात् ॥ २६ ॥

कदा तर्हि विगृह्णीयाद्यदा परस्मादाधिकमात्मानं पश्येत् । तदेव षड्भिः श्लोकैर्निर्दिशति । यदेत्यादि । हृष्टं पुष्टमित्युत्साहयुक्तं उपचितं चतुरङ्गबलम्। परस्य विपरीतमहृष्टमपुष्टञ्च ॥ २७ ॥

स्फीतमुपचितम् । अनुरक्तं विजिगीषौ । प्रकृतिमण्डलममात्यादिकम् ॥ २८ ॥

उपनामि—उपनमनशीलम् । दैवं सुव्यक्तमुपलक्षितं स्वल्पेनापि पौरुषेण बहुशोऽप्रतिहतार्थसिद्धिदर्शनात् । विपरीतमनुपनामि ॥ २९ ॥

दृढभक्तय इति । तत्र स्थिरस्नेहत्वान्मित्रं शत्रोः पार्ष्णिं गृह्णातीत्याक्रन्दः (विजिगीषुः पार्ष्णिग्राहमरिमित्रमित्रेणाक्रन्दितः ?) तस्य पार्ष्णिं गृह्णाति

---

कान्तिरुद्धमातिष्ठेदिति ॥ २६ ॥

विग्रहस्यानुकूलं कालमभिधातुमाह—(यदेति ।) हृष्टं सम्मानादिभिः। पुष्टं भक्तवेतनादिभिः । स्वकं बलं सैन्यम् । परस्य विपरीतमहृष्टमपुष्टं च । तदा विग्रहमाचरेत् । जयस्यावश्यम्भावित्वात् ॥ २७ ॥

(स्फीतमित्यादि)......॥ २८ ॥

(उपनामीत्यादि)......॥ २९ ॥

(मित्रमिति) । मित्रमग्रतो यातव्यभूम्यनन्तरम् । आक्रन्दः पश्चात् पार्ष्णिग्राहभूम्यनन्तरः, पार्ष्णिग्राहं निषेद्धुं विजिगीषुणा (आक्रन्द्यत) इति । आसारः आक्रन्दस्य पश्चादेव भूम्येकान्तरं "मित्रं पीडच(मान)माक्रन्दमासरति" इति । एते त्रयोऽपि यदा विजिगीषौ दृढभक्तयो निश्चलानुरागा भवन्ति । परस्य

परस्य विपरीताश्च तदा विग्रहमाचरेत् ॥ ३० ॥
भूमिर्मित्रं हिरण्यञ्च विग्रहस्य फलं त्रयम् ।
यदैतन्नियतं भावि तदा विग्रहमाचरेत् ॥ ३१ ॥
गुरु वित्तं ततो मित्रं तस्माद् भूमिर्गरीयसी ।
भूमेर्विभूतयः सर्वास्ताभ्यो बन्धुसुहृद्गणाः ॥ ३२ ॥
सर्वसम्पत्समे शत्रावुपायान् निक्षिपेद् बुधः ।

---

आसारश्च विजिगीषुमित्रमारिमित्रमित्रस्येति । परस्य विपरीता अदृढभक्तित्वात् । शत्रुमित्रं विजिगीषोः पार्ष्णिं न गृह्णाति, तदासारश्चारिमित्रं विजिगीषुमित्रमित्रस्येति ॥ ३० ॥

( भूमिरित्यादि ) नियतम्भावीनि । समस्तं व्यस्तञ्चावश्यंभावी ॥ ३१ ॥

एषाञ्च त्रयाणामन्यतमलाभे पूर्वं पूर्वं लिप्सेतेति दर्शयितुमाह, गुरु वित्तमित्यादि । ततो मित्रं गुरु । सर्वतोभोगं हि मित्रं लब्धं हिरण्येनाहिरण्येनाप्युपयुज्यते । ननु मित्रहिरण्यभूमिलाभानामुत्तरोत्तरलाभः श्रेयान्, "मित्रहिरण्ये हि भूमिलाभाद्भवतो, मित्रं हिरण्यलाभात्" इयुक्तं कौटिलीये । सत्यम् । इदमप्युक्तं यो वा लाभः सिद्धः शेषयोरन्यतरं साधयति स श्रेयान् । ( कौ० अ० ७-८-११६ ) इति । तस्माद् द्वितीयपक्षसन्दर्शनार्थं मित्रं वित्ताद्गुर्वित्यत्रोक्तम् ॥ ३२ ॥

हीनेन विग्रहमुक्त्वा समेनापि श्लोकद्वयेन वृत्तिमाह—सर्वसम्पदित्यादि । विग्रहस्य प्रस्तुतत्वात् सर्वा सम्पद्विग्रहस्येति सत्यां विग्रहसम्पदि । सोऽपि ताव-

---

यातव्यस्य विपरीता मित्राक्रन्दासाराश्च वीतभक्तयस्तदा विग्रहमाचरेदिति ॥३०॥

विग्रहस्य फलविमर्शमभिधातुमाह । ( भूमिरिति । ) इति प्रतीतम् ॥३१॥

फलत्रये गुरुलाघवमाह—( गुर्विति । ) वित्तं सुवर्णादि तद्गुरु तन्मूलत्वाद्व्यवहाराणाम् । ततोऽपि गुरु मित्रं मित्रसाध्यत्वाद्वित्तस्य । तस्मान्मित्रादपि भूमिर्गरीयसी । भूमेर्विभूतयः सर्वा वित्तादिकाः । ताभ्यो बन्धुसुहृज्जनाः गुरवः विभूतिसाध्यत्वात्तेषामिति ॥ ३२ ॥

समेनापि विग्रहो विधेय इत्येतदेव समर्थयन्नाह—( सर्वेति । ) प्रभुमन्त्रोत्साहादिभिः सम्पद्भिः समे शत्रौ उपायान् सामदानादीन् प्रयुञ्जीत । बुध इति

उपायैरप्रतिव्यूढे सम्मे दण्डः प्रशस्यते ॥ ३३ ॥
आगतं विग्रहं विद्वानुपायैः प्रशमं नयेत् ।
विजयस्य ह्यनित्यत्वाद् रभसेन न सम्पतेत् ॥ ३४ ॥
समाक्रान्तो बलवता काङ्क्षन्नभ्रंशिनीं श्रियम् ।
श्रयेत वैतसीं वृत्तिं न भौजङ्गीं कदाचन ॥ ३५ ॥
क्रमाद् वेतसवृत्तिः सन् प्राप्नोति महतीं श्रियम् ।
भुजङ्गवृत्तिराप्नोति वधमेव तु केवलम् ॥ ३६ ॥
मत्तप्रमत्तवत् स्थित्वा ग्रसेतोत्प्लुत्य पण्डितः ।

त्सामादीन् प्रयुञ्जीत । समेन हि विग्रहस्य सुन्दोपसुन्दयोरिवोभयतः क्षयकारित्वात् । अप्रतिव्यूढे—अप्रनिविहिते । दण्डो विग्रहः ॥ ३३ ॥

अस्यैव पूर्वार्धं स्फुटीकुर्वन्नाह—आगतमित्यादि ॥ ३४ ॥

अभ्रंशिनीमविनाशिनीम् । वैतसीं भौजङ्गीमिति—वेतसो बलीयसा नदीजवेनाक्रम्यमाणो नमति । भुजङ्गश्च तृणाग्रस्पृष्टोऽपि स्फटाटोपैरुद्धावति॥३५॥

प्रवृत्तिद्वयस्य फलमाह—क्रमादित्यादि । क्रमात्प्राप्नोति कालेनेत्यर्थः। वधमेव केवलं तदात्वे । तस्माद्वैतसीं वृत्तिमाश्रित्य विगृह्णीयात् ॥ ३६ ॥

कथमिवेत्याह—मत्तप्रमत्तवत् स्थित्वेत्यादि । वेतसवृत्त्यसंश्रितोऽप्यात्मनः

---

नीतिपण्डितः । उपायैः सामादिभिरप्रतिव्यूढैरनिष्पादितकार्यैर्दण्डोऽपि शस्यते। गत्यन्तराभावादिति ॥ ३३ ॥

एतदेव समर्थयन्नाह—( आगतमिति । ) परतोऽप्यागतं विग्रहम् उपायैरनन्तरोक्तैः प्रशमं नयेत् । कुत इत्याह विजयस्य ह्यनित्यत्वात् विग्रहे विजयो नित्यं न भवति । हीनैरपि ज्यायांसो विजिता दृश्यन्ते । तस्मात् रभसेन पर्यालोचनं विना न सम्पतेत् । यानगुणमालोचयेदिति ॥ ३४ ॥

उपायैः परिहर्तुमशक्ये विग्रहे संश्रयवृत्तिं दर्शयन्नाह—( समाक्रान्त इति । ) समाक्रान्तः सर्वतो निरुद्धचेष्टः । अभ्रंशिनीमविनश्वराम् । वैतसीमनुप्रवेशरूपां गत्यन्तराभावात् । शेषं सुगमम् ॥ ३५ ॥

एतदेव समर्थयन्नाह—( क्रमादिति । ) इति सुगमम् ॥ ३६ ॥

संश्रयवृत्तिं दर्शयन्नाह—( मत्तेति । ) मत्तः मदावस्ताविवेकः । प्रमत्तः

अपरिभ्रश्यमानं हि क्रमप्राप्तं मृगेन्द्रवत् ॥ ३७ ॥
कौर्मं सङ्कोचमास्थाय प्रहारमपि मर्षयेत् ॥ ३८ ॥
काले प्राप्ते तु मतिमानुत्तिष्ठेत् क्रूरसर्पवत् ।
काले साहिष्णुर्गिरिवदसहिष्णुश्च वह्निवत् ॥ ३९ ॥
( स्कन्धेनापि वहेत् काले प्रियाणि समुदाहरन् ।
सम्प्राप्ते चैव काले तु भिन्द्याद् घटमिवाश्मनि ॥ ) १ ॥
( नित्यं स्वार्थपरो लोकः स्वार्थसिद्धिर्यथा भवेत् ।
तथा तस्य प्रतीकारं यथोक्तं समुपाचरेत् ॥ २ ॥
प्रसादवृत्त्याहितलोकवृत्तया प्रविश्य शत्रोर्हृदयं
निरन्तरम् ।

---

कृतकं व्यसनं प्रकाश्य जातविस्रम्भं क्रमप्राप्तत्वाद परिभ्रश्यमानं हन्यात् ॥ ३७ ॥

कौर्मं सङ्कोचमिति । कूर्मवदङ्गानि गूहयित्वा काले परपीडामपि सहेत ॥ ३८ ॥

काले च क्रूरसर्पवद्दशेत् । सहिष्णुर्गिरिवदप्रकाशिताशयविकारत्वात् । असहिष्णुश्च वह्निवत् प्रदर्शिततेजस्त्वात् ॥ ३९ ॥

प्रसादवृत्त्येति—प्रसन्नया वृत्त्या । आहितलोकवृत्तया प्रदर्शितलोकव्यवहारया । नयो विग्रहाख्यो गुणः । प्रसह्येति प्रकाशयुद्धं दर्शयति । अयश्च

---

उन्मादगृहीतः । ग्रसेत ग्रासीकुर्यात् । शेषं सुगमम् ॥ ३७ ॥

( कौर्ममिति । ) सङ्कोचमास्थाय अवयवपञ्चकं कर्परान्तः कृत्वा । वज्रसमानकर्परेण प्रहारमपि मर्षयेत् ॥ ३८ ॥

( काले प्राप्त इत्यादि । )...॥ ३९ ॥

( प्रसादेति । ) प्रसादः प्रसन्नत्वं वाङ्मनोमुखचक्षुषाम् । तेन वर्तनं प्रसादवृत्तिः । तामाश्रितः शत्रोरशङ्कनीयो भवति । आहितलोकवृत्तया आहितं न्यस्तं लोकवृत्तं यया । लोकवृत्तं चात्रानुजीविवृत्तमेव संश्रितस्तेनाराधितस्तेनाराध्यत इति । तथा प्रविश्य शत्रोर्हृदयं निरन्तरं पिशुनकृतान्तररहितं काले उत्थित उद्युक्तो विजिगीषुर्नयाग्रहस्तेन नीतिनय एवाग्रहस्तस्तेन । प्रसह्य हठात्कचग्रहं क-

नयाग्रहस्तेन हि कालमास्थितः प्रसह्य कुर्वीत कचग्रहं श्रियः ॥ ४० ॥

कुलोद्गतं सत्यमुदारविक्रमं स्थिरं कृतज्ञं मतिमन्तमूर्जितम् ।
अतीव दातारमुपेतवत्सलं सुदुष्प्रसाधं प्रवदन्ति विद्विषम् ॥ ४१ ॥

असत्यता निष्ठुरताऽकृतज्ञता भयं प्रमादोऽलसता विषादिता ।
वृथाभिमानोऽपि च दीर्घसूत्रता तथाङ्गनाक्षादि विनाशनं श्रियः ॥ ४२ ॥

---

बलीयासि कोऽपि विधिः आपातविग्रहेण दुष्प्रसाधे शत्रौ वेदितव्यः ॥ ४० ॥
कोऽसावित्याह—कुलोद्गतमित्यादि ॥ ४१ ॥
आपातविग्रहसाध्यतां शत्रोर्दर्शयितुमाह—असत्यतेत्यादि । अङ्गनाक्षादीति । आदिशब्दान्मृगयापानादिव्यसनसङ्ग्रहः ॥४२॥

---

श कर्षणं श्रियः कुर्वीत बलात्तस्यैव संश्रितस्य श्रियं गृह्णीयादित्यर्थः ॥ ४० ॥

विग्रहे ( साध्या ) साध्यविभागं यातव्यस्याभिधातुमाह—( कुलेति । ) यः कुलीनः स परिजनैर्न परित्यज्यते । सत्यममृषावादिनं तस्य विश्वसन्ति । उदार उत्कृष्टो विक्रमः शौर्यं यस्य स हि स्थिरलक्ष्मीको भवति । स्थिरश्चापलरहितः प्रतिष्ठिततत्वादाश्रयणीयो भवति । कृतज्ञस्योपकारे सर्व एव प्रवर्तते । धृतिमन्तमविषादिनमूर्जितं च प्राणसमन्वितम् । अतीव दातारं विक्रमादित्यसमानम् । उपेतवत्सलं शरणागतवत्सलम् । इत्याद्याभिगामिकगुणयुक्तं सुदुःप्रसाधमसाध्यं प्रवदन्ति विद्विषम् । तेन सह विग्रहो न कार्य इति भावः ॥ ४१ ॥

विग्राह्यं रिपुमभिधातुमाह—( असत्यतेति । ) असत्यता, निष्ठुरता, अकृतज्ञता, भयम् । प्रमाद इति शब्दादिष्विन्द्रियार्थेषु प्रसक्तिरत्र प्रमाद इष्यते । अलसता, विषादिता । वृथाभिमानोऽसत्यहङ्कारः। दीर्घसूत्रता जडता । तथाङ्गनाक्षादि च निरवशेषं व्यसनजातं विनाशनं श्रिय इत्यादिसम्पद्युक्तो रिपुः साध्यः सुविग्राह्य इति ॥ ४२ ॥

इति स्म दोषान्वितमाशु विद्विषं त्रिशक्तियुक्तो विजि-
गीषया व्रजेत् ।
अतोऽन्यथासाधुजनस्य सम्मतः करोत्यविद्वानुपघात-
मात्मनः ॥ ४३ ॥

समन्वितो राज्यपदोन्निनीषया चरेक्षणैर्वीक्षितमण्डल-
क्रियः ।
इमं नृपो विग्रहमार्गमास्थितः स्थिरोद्यमः सम्प्रयतेत
सिद्धये ॥ ४४ ॥

---

इति स्मेति । इतिशब्दः प्रकारे, एवंप्रकारैर्दोषैरन्वितामिति । त्रिशक्ति-युक्तः—मन्त्रप्रभावोत्साहशक्तियुक्तः । विजिगीषया आपातविग्रहेण जेतुमिच्छया । अतोऽन्यथेति—दुष्प्रसाधं शक्तिहीनो विजिगीषया व्रजन्नित्यर्थः । असाधुजनस्य सम्मतः । वृद्धजनाभिसम्मतस्तु वृद्धबुद्धित्वात्, अतश्चाविद्वानिति विशेषणमर्थवत् ॥ ४३ ॥

इदानीं प्रकरणार्थमुपसंहरति समन्वित इत्यादिना । राज्यपदोन्निनीषया समन्वित इति सम्बन्धः । मनीषया प्रज्ञया । अन्वीक्षितमण्डलक्रियः समहीन-ज्यायस्त्वापेक्षया विभावितमण्डलव्यापारः । इममिति यथोक्तं विग्रहमार्गम् । स्थिरोद्यमः असमाप्यानुपरतः । अन्यथा ह्यनन्तरं नष्टोत्साहस्य परस्मादेव प्रत्य-वायः स्यात् ॥ ४४ ॥

---

( इतीति । ) इत्यनन्तरं दोषान्वितमाशु विद्विषं शत्रुं त्रिशक्तियुक्तः । अतोन्यथोक्तप्रकारं विना असाधुजनेषु सुसम्मतः करोति अविद्वानुपघातमात्मनो विग्रहानुष्ठानादिति शेषः ॥ ४३ ॥

उपसंहरन्नाह—( समन्वित इति । )......सम्यक्सिद्धये प्रयत्नं कुर्या-दिति ॥ ४४ ॥

इति विग्रहविकल्पो नाम पञ्चदशं प्रकरणम् ।
इति श्रीकामन्दकीयनीतिसारे विग्रहविकल्पो नाम दशमः सर्गः ।

---

इति पञ्चदशं विग्रहविकल्पप्रकरणम् ।
इति शङ्करार्यकृतायां कामन्दकीयनीतिसारपञ्चिकायां जयमङ्गलायां विग्रहविकल्पो नाम दशमः सर्गः ।

---

( इति पञ्चदशं विग्रहविकल्पप्रकरणम् ॥ )
इति कामन्दकीयनीतिसारटीकायामुपाध्यायनिरपेक्षायां विग्रहविकल्पो नाम दशमः सर्गः ॥

## अथ एकादशः सर्गः ।

### १६ यानासनद्वैधीभावसंश्रयविकल्पप्रकरणम् ।

उत्कृष्टबलवीर्यस्य विजिगीषोर्जयैषिणः ।
गुणानुरक्तप्रकृतेर्यात्रा यानमिति स्मृतम् ॥ १ ॥
विगृह्य सन्धाय तथा सम्भूयाथ प्रसङ्गतः ।
उपेक्षा चेति निपुणैर्यानं पञ्चविधं स्मृतम् ॥ २ ॥
विगृह्य याति हि यदा सर्वाञ्छत्रुगुणान् बली ।

---

## अथ एकादशः सर्गः ।

### १६ यानासनद्वैधीभावसंश्रयविकल्पप्रकरणम् ।

सन्धिविग्रहौ प्रधानगुणौ सर्गद्वयेनोपदिश्येदानीमस्मिन् सर्गे यानासनद्वैधीभावसंश्रयविकल्पानाह । तत्र यानमधिकृत्याह—उत्कृष्टेत्यादि । बलं शक्तिदेशकालानां, वीर्यमुत्साहः, तदुभयं परापेक्षयोत्कृष्टं यस्य तस्य । जयैषिणः—अन्यथा न, यातव्यं, जेतुमनिच्छतो यानासम्भवात् । गुणानुरक्तप्रकृतेरिति । स्वामिगुणैः प्रकृतैरनुरक्तामात्यादिप्रकृतेरित्यर्थः। यथा ह्युक्तं "गुणातिशययुक्तो यायात्" इति । ( कौ० अ० ६–२–९९ ) ॥ १ ॥

तद्यानं पञ्चविधमाह—विगृह्येत्यादि ॥ २ ॥

तानि यथाक्रमं श्लोकाष्टकेनाह—विगृह्य यातीति । गुणशब्देनात्र द्रव्यप्रकृतयो द्रष्टव्याः, तासामप्रधानत्वात् । स्वामिप्रकृतिरेव प्रधानम् । यदा पश्चात्-

---

## अथ एकादशः सर्गः ।

### १६ अथ यानासनद्वैधीभावसंश्रयविकल्पप्रकरणम् ।

विग्रहविकल्पमभिधाय षाड्गुण्ये यानगुणं प्रतिपादयितुमाह—( उत्कृष्टेति । ) उत्कृष्टमत्युत्तमं, बलं वीर्यं च यस्य विजेतुमेषणशीलस्य । जयैषिणः—नैतत्पुनरुक्तं, विशेषप्रतिपादनार्थमेतत् । नेच्छामात्रेण जयमृच्छति किन्तु कर्मणा विजयसार्धनानामनुष्ठानात् । गुणानुरक्तप्रकृतिः गुणैः प्रकृतिसम्पदुक्तैराभिगामिकैश्चानुरक्ताः प्रकृतयो यस्य । यात्रा यातव्यं प्रति प्रस्थानं यानमिति स्मृतमन्यथा तु गमनमात्रमेव फलाभावात् ॥ १ ॥

यानभेदानभिधातुमाह—( विगृह्येति । ) ॥ २ ॥

( विगृह्य यातीति । ) विगृह्य याति हि यदा सर्वान् शत्रुगुणान् शौर्यत्या-

विगृह्ययानं यानज्ञास्तदाचार्याः प्रचक्षते ॥ ३ ॥
अरिमित्राणि सर्वाणि स्वमित्रैः सर्वतो बलात् ।
विगृह्य चारिगमनं विगृह्यगमनं स्मृतम् ॥ ४ ॥
( सन्धाय सार्धमरिभिश्चेष्टासंरोधकारिभिः ।
यदन्यत्र रिपौ यानं सन्धायगमनं हि तत् ) ॥
सन्धायान्यत्र या यात्रा पार्ष्णिग्राहेण शत्रुणा ।
सन्धायगमनं प्रोक्तं तज्जिगीषोः फलार्थिनः ॥ ५ ॥
एकीभूय यदेकत्र सामन्तैः सामवायिकैः ।
शक्तिशौचयुतैर्यानं सम्भूयगमनं हि तत् ॥ ६ ॥

---

स्थायिनः शत्रोः सर्वा द्रव्यप्रकृतीर्दाहविलोपादिना बलाद्विगृह्य पुरताच्छत्रुं याति, तदा विगृह्ययानमित्येकः प्रकारः ॥ ३ ॥

द्वितीयमाह—अरिमित्राणीति—अरेर्यातव्यस्य मित्राणि । सर्वाणीति पुरस्तात् पश्चाच्च यानि स्थितानि । स्वमित्रैः पुरः पृष्ठतश्च स्थितैः करणभूतैः। बलाद्विगृह्य वेति सम्बन्धः । सर्वतः उभयसम्पीडनेनेत्यर्थः ॥ ४ ॥

सन्धाय पार्ष्णिग्राहेण शत्रुणेति सम्बन्धः । अन्यत्र या यात्रा पार्ष्णिग्राहमित्रे यद्गमनम् । फलार्थिन इति मा मे दीर्घयात्रां गतस्य पार्ष्णि ग्रहीष्यतीत्येवं फलार्थिनः ॥ ५ ॥

एकीभूयेति । यदा न शक्यमेकेन यातुं, अवश्यं च यातव्यं, तदा सामन्तैरेकीभूय यद्गमनं, तत्सम्भूय यानम् । एकत्रेत्येकस्मिन् यातव्ये । सामवायिकैः समवायप्रयोजनैरेकमतिभिः । शक्तिशौचयुतैरिति । शक्तिमान् हि पार्ष्णिग्रहणे साहाय्यदाने च शक्तः, शुद्धश्च सिद्धौ च यथास्थितकारी भवतीत्येकः प्रकारः ॥६॥

---

गादीनाभिगाभिकान् स्वगुणैः । यदा ( ते ) आच्छादिता भवन्ति तदा ते विजिगीषुणा विशेषात् विजिता (गृहीताः ?) एव भवन्तीति विगृह्य याति हि यदा बली शक्तिभिरभ्युपाचितः तदा विगृह्ययानं यानज्ञा आचार्याः प्रचक्षते ॥ ३ ॥

विगृह्ययानं द्वितीयं व्याख्यातुमाह—( अरिमित्राणीति )...... ॥ ४ ॥

( सन्धाययानमाह सन्धायेत्यादि । ).... ॥ ५ ॥

सम्भूययानमभिधातुमाह । ( एकीभूयेति । ) एकीभूयैकमतेन यद्यानमेकस्मिन्यातव्ये । सामन्तैर्भूम्यनन्तरैः । सामवायिकैः समवायेन प्रत्यंशग्रहणेन चरन्ति ये तैः सह । शक्तिशौचयुतैर्यानं सम्भूय गमनं हि तदिति ॥ ६ ॥

उभयारौ तु वा यानं द्वयोः प्रकृतिनाशने ।
सम्भूयगमनं प्रोक्तं हनुमत्सूर्ययोरिव ॥ ७ ॥
( उभयत्र तु या यात्रा द्वयोः प्रकृतिनाशने ।
सम्भूययानं तत् प्रोक्तं रामसुग्रीवयोरिव ।
अल्पसारानुपादाय प्रतिज्ञाय फलोदयम् ।
गम्यते यत् परान् जेतुं सम्भूयगमनं हि तत् ) ॥
अन्यत्र प्रस्थितः सङ्गादन्यत्रैव हि गच्छति ।

---

द्वितीयमाह—उभयारौ तु वेति । अरेर्विजिगीषोश्चोभयोर्यः शत्रुस्तस्मिन् द्वयोरपि सम्भूययानम् । प्रकृतिनाशन इति । उभयारिप्रकृतिविलोपादिनिमित्तम् । हनुमत्सूर्ययोरिवेति । हनुमान् किल बाल्यावस्थायामालोहितं भानुमन्तं दृष्ट्वा किमिदमिति चापलादुत्प्लुत्य हस्ताभ्यां गृहीतवान् । तत्काल एव च राहुः सूर्यं ग्रसितुमाजगाम । तद्ग्रसनार्थञ्च तं मोचयितुं प्रयतमानं दृष्ट्वा हनुमान् किमिदमपरमिति भानुं मुक्त्वा तमेवाभ्यधावत् । आदित्येनापि ज्ञातं, ममाप्ययं राहुः शत्रुः, अतो स्य हनुमतः साहाय्यकं प्रतिपद्येऽहमिति । सोऽपि तमभिजगामेत्येतावदत्रौपम्यकम् ॥ ७ ॥

अन्यत्र प्रस्थित इति । द्वयोर्यातव्ययोरेकमभीष्टमभियोक्तुं प्रस्थितो यदा पथि कुतश्चित् प्रसङ्गादितरं प्रति याति, तदास्य प्रासङ्गिकं गमनम् । यथा—कुरुपाण्डवानामुद्योगे मद्रराजस्य पाण्डवमातुलस्य शल्यस्य तदनु बलाधानार्थं एक-

---

द्वितीयं सम्भूययानमाह—( उभयेति । ) उभयोरप्यरिविजिगीष्वोररिरुभयारिस्तद्विषयं यानमुभयोरपि प्रकृतिनाशने जाते सति । प्रकृतिरादित्यस्य मण्डलम्, हनुमतो मुखमण्डलम्, तन्नाशने सञ्जाते, ततः सूर्यो हनुमता सन्धाय राहुं जेतुं गत इत्युदाहरणं हनुमत्सूर्ययोरिति पौराणिकाः ॥ ७ ॥

[ तृतीयं सम्भूययानमाह—( अल्पसारेति । ) अल्पं सारं शक्तीनां वीर्यं बिभ्रतः सामन्तानुपादाय । प्रतिज्ञाय जाते फले इदमित्युक्त्वा फलोदयं गम्यते यत्परं यातव्यं जेतुं सम्भूयगमनं हि तदिति ॥ ]

इदानीं प्रसङ्गतो यानमभिधातुमाह—( अन्यत्रेति । ) अन्यत्र यातव्यमुद्दिश्य प्रस्थितोऽन्यत्र गच्छति । प्रसङ्गयानं तत्प्रोक्तम् । शल्यस्य दुर्योधनं यात-

प्रसङ्गयानं तत्प्रोक्तमत्र शल्यो निदर्शनम् ॥ ८ ॥
रिपुं यातस्य बालिनः सम्प्राप्यारिक्षतं फलम् ।
उपेक्ष्य तन्मित्रयानमुपेक्षायानमुच्यते ॥ ९ ॥
निवातकवचान् हित्वा हिरण्यपुरवासिनः । कालकञ्जान्
उपेक्षायानमास्थाय निजघान धनञ्जयः ॥ १० ॥

---

याऽक्षौहिण्या सह पाण्डवार्थे प्रस्थितस्य तस्य पथि दुर्योधनेनात्मनिवेदनात् पूर्वकेणोपकारेण हृतचेतसस्तत्प्रसङ्गात् कुरुषु लब्धसख्यस्य पाण्डवान्प्रति गमनं दर्शयति—अत्र शल्यो निदर्शनमिति ॥ ८ ॥

रिपुं यातस्येति—रिपुं प्रति यातस्य । विजिगीषोरिति शेषः । बलिन इति द्वितीयाबहुवचनम् । इदमुक्तं भवति—यं रिपुमभियोक्तुं प्रयातो विजिगीषुस्तदनु बलाधानार्थं तत्सुहृदोऽपि येऽन्ये बलिनः समायातास्तान् सम्प्राप्य यदरिणा कृतं फलं प्रत्यभियोगलक्षणं तदुपेक्ष्य तन्मित्रेषु च बलिषु सम्प्राप्तेषु यद् यानं, तदुपेक्षायानम् ॥ ९ ॥

तदेव दृष्टान्तेन स्फुटयन्नाह—निवातकवचानिति । शक्रः स्वर्गतमर्जुनं दिव्यास्त्राण्याधिगमय्य गुरुदक्षिणापदेशेन निवातकवचनाम्नोऽसुरान् जहीत्यभिहितवान् । सोऽपि तथेति प्रतिज्ञाय मातलिसनाथं रथमारुह्य तानभियोक्तुं प्रयातः । अभियुक्तेषु तेषु तदनु बलाधानाय हिरण्यपुरवासिनः कालकञ्जनामानोऽसुरा बलीयांसः समायाताः । तान् सम्प्राप्य निवातकवचाः प्रत्यभियुयुजः । ततस्तानुपेक्ष्य तत्सुहृद एव कालकञ्जानभियोक्तुं प्रयातस्तानभियुज्य निजघान, पश्चात् तानपीति ॥ १० ॥

---

व्यमद्दिश्य प्रस्थितस्य दुर्योधनेनोपकारैरात्मसात्कृतस्य युधिष्ठिरो यातव्यः संवृत्त इति प्रसङ्गयानमिति ॥ ८ ॥

उपेक्षायानमभिधातुमाह–( रिपुमिति । ) ॥ ९ ॥

अत्र निदर्शनमाह–( निवातकवचानिति । ) निवातकवचाः प्रचण्डदानवाः । तन्निग्रहणार्थमिन्द्राज्ञया धनञ्जय आसन्नानपि निवातकवचान् हित्वा परित्यज्यासाध्यांस्तन्मित्राणि पौलोमकालजङ्घान् दानवान्निजघान । धनञ्जयोऽर्जुन इति ॥ १० ॥

स्त्रियोऽथ पानं मृगया तथाक्षा दैवोपघातश्च बहुप्रकारः।
इति प्रदिष्टं व्यसनं ह्यनेन समन्वितो यो व्यसनी स
गम्यः ॥ ११ ॥

परस्परस्य सामर्थ्याविघातादासनं स्मृतम्।
अरेश्च विजिगीषोश्च तत् पञ्चविधमुच्यते ॥ १२ ॥
अन्योन्याक्रान्तिकरणं विगृह्यासनमुच्यते।

---

कः पुनर्यातव्य इत्याह—स्त्रिय इत्यादि। व्यसनी यातव्यः। व्यसनञ्च दैव-मानुषभेदेन द्विविधम्। तत्र मानुषं द्विविधम्। कामजं कोपजञ्च। तत्र स्त्रियः पानं मृगया द्यूतमिति कामजम्। वाक्पारुष्यं दण्डपारुष्यमर्थदूषणमिति कोपज-मिति। तादिह—"कामात्क्रोधो हि जायते" इति (भ० गी० २–६२) दर्शनार्थं साक्षात् कोपजं नोक्तम्। दैवोपघातश्चेति। स चाग्न्युदकदुर्भिक्षमरकादि-भेदेन बहुप्रकारः। इति प्रदिष्टमिति। इति शब्द आद्यर्थे, अनेन साक्षात् कोपज-मप्युक्तं वेदितव्यम् ॥ ११ ॥

आसनमधिकृत्याह—परस्परस्येत्यादि। अरेश्च विजिगीषोश्च परस्परस्येति सम्बन्धः। सामर्थ्याविघातादिति। यदा शत्रुर्विजिगीषोर्विजिगीषुश्च शत्रोर्विग्रहे सामर्थ्यमुपसोढुं समर्थः, तदा यदुपेक्षणं तदासनं। तथाह्युक्तं "न मां परो नाहं परमुपहन्तुं शक्त इत्यासीत" [कौ० अ० ७–१–९८–९९] इति। तत् पञ्चविधं यानवत् ॥ १२ ॥

तदेव श्लोकदशकेन दर्शयति—अन्योन्य क्रान्तिकरणमित्यादि। आक्रा-न्तिरतिसन्धानम्। इदमुक्तं भवति—अरिविजिगीष्वोः परस्परमतिसन्धानपूर्वकं यदा-

---

यानभेदानभिधाय यातव्यलक्षणमाह—(स्त्रिय इति।) स्त्रिय इति स्त्रीव्यसनम्। पानं पानव्यसनम्। मृगया पापर्द्धिः। तथा अक्षा द्यूतानि। दैवोपघातश्च दुर्भिक्षमरकादिर्बहुप्रकारः। इत्येवंप्रकारमन्यदपि व्यसनं सम्प्रदि-ष्टम्। अनेन समन्वितोऽरिर्व्यसनी। स च गम्यो यातव्यो भवति सुखोच्छेद्यत्वात् ॥ ११ ॥

आसनमभिधातुमाह--(परस्परस्येति।) अरेश्च विजिगीषोश्च परस्परसामर्थ्य-विघातादितरेणेतरस्य तदा या अवस्थितिः तदासनम्। तदपि पञ्चविधमेव; तद्य-था--विगृह्यासनं, सन्धायासनं, सम्भूयासनं, प्रसङ्गासनमुपेक्षासनमिति ॥ १२ ॥

तत्र विगृह्यासनमाह--(अन्योन्येति।) अरिविजिगीष्वोरन्योन्यं यदा-

अरिं विगृह्य वा स्थानं विगृह्यासनमुच्यते ॥ १३ ॥
यदा दुर्गस्थितः शत्रुर्ग्रहीतुं न च शक्यते ।
विगृह्यैनं तदासीत हत्वास्यासारवीवधौ ॥ १४ ॥
विच्छिन्नवीवधासारं प्रक्षीणयवसेन्धनम् ।
विरज्यमानप्रकृतिं कालेनैव वशं नयेत् ॥ १५ ॥
अरेश्च विजिगीषोश्च विग्रहे हीयमानयोः ।
सन्धाय समवस्थानं सन्धायासनमुच्यते ॥ १६ ॥

---

सनकरणं, तद्विगृह्यासनमित्येकः प्रकारः । द्वितीयमाह—अरिं विगृह्य वेति । देश-विलोपादिना शत्रोरपकृत्येत्यर्थः । पूर्वत्रोभयोर्व्यापारः । इह तु विजिगीषोरेवेति विशेषः ॥ १३ ॥

कदा विगृह्यासनमित्याह—यदेत्यादि । ग्रहीतुं नैव शक्यते, शक्तेन विग्रहेण, तदासीत । आसारवीवधाविति । "धान्यादेर्वीवधः प्राप्तिः, आसारस्तु सुहृद्बलम्" ( १४-२७ ) इति वक्ष्यति । उपलक्षणार्थं चैतत् । तेन यवसेन्धनादि च वीवध इति बोध्यम् ॥ १४ ॥

एवञ्च विगृह्यासने सति क्रमेण शत्रुर्विरज्यमानप्रकृतिर्वध्यो भवति। यदाह--विच्छिन्नेत्यादि ॥ १५ ॥

हीयमानयोरिति--तुल्यबलत्वात् , क्षीयमाणयोः ॥ १६ ॥

---

कान्तिकरणं चेष्टाया विघातनं तद्विगृह्यासनम् । विग्रहान्तःस्थयोरेव सामर्थ्यविघाते सति यदासनं तद्विगृह्यासनमेकमरिं विगृह्य कारणापेक्षया यत्स्थानं तदपि विगृह्यासनमुच्यते ॥ १३ ॥

( यदेति । ) यदा दुर्गगतः शत्रुः ग्रहीतुं नैव शक्येत तदा । आसारो मित्रबलमुच्यते । "स्वदेशादागच्छति वीवध" इति कौटिल्यः। मित्रादिप्रविबलात् स्वदेशादनु पश्चाद् यद्भक्तवस्त्राद्यागच्छति। तच्छिन्नविच्छिन्नावासारवीवधौ ( कृत्वा ) यदासीत तदपि विगृह्यासनमिति ॥ १४ ॥

दुर्गनिरोधे विधेयमाह--( विच्छिन्नेति । ) इति प्रतीतम् ॥ १५ ॥

सन्धायासनमभिधातुमाह--( अरेरिति । ) ॥ १६ ॥

निवातकवचैः सार्धं रावणः शत्रुरावणः ।
ब्रह्माणमन्तरे कृत्वा सन्धायासनमास्थितः ॥ १७ ॥
उदासीने मध्यमे च समानप्रतिशङ्कया ।
एकीभूय व्यवस्थानं सम्भूयासनमुच्यते ॥ १८ ॥
उभयारिं हि वाञ्छन्तं विनाशमुभयोरपि ।
सम्भूयैनं प्रतिव्यूहेदाधिकं सर्वसम्पदा ॥ १९ ॥

---

निवातकवचैः सार्धमिति । रावणो हि ब्रह्मवरप्रदानाल्लब्धत्रिलोकविजयो लोकत्रयं जित्वा लब्धोत्साहः पातालं जेतुं प्रविष्टः । तत्र भोगवती नाम पुरी । तत्रस्थान्निवातकवचान् दीर्घकालं योधितवान्, तयोश्चोभयोर्विग्रहे क्षीयमाणयोर्ब्रह्मा शिरोवेदनया समुपलब्धवृत्तान्तो विफलत्वमस्मद्वरप्रदानस्य मा भूदिति विचिन्त्यागत्य दैत्यान् विग्रहान्न्यवर्त्तयत् । रावणश्च सन्धितुस्तमेव ब्रह्माणं प्रातिभाव्ये स्थापयित्वा तैः सन्धायासितवान् ॥ १७ ॥

उदासीने मध्यमे चेति विषयसप्तमी । समानप्रतिशङ्कयेति—अरिविजिगीष्वोस्तुल्यया मध्यमोदासीनविषयप्रतिशङ्कयेत्यर्थः । एकीभूयेति शत्रुणा ॥१८॥

तदेव स्फुटयन्नाह—उभयारिमित्यादि । यदा मध्यमोदासीनयोरन्यतरो विजिगीषुं विनाशयितुं वाञ्छति, तदायमुभयोरप्यनयोररिर्भवति । तमुभयारिमधिकं शत्रुणा सम्भूय प्रतिव्यूहेत् ॥ १९ ॥

---

अस्योदाहरणमाह—( निवातकवचैरिति । ) निवातकवचैः सह रावणस्य विग्रहे सति रावणस्तैराक्रान्तो ब्रह्माणं गोत्रगुरुमन्तरेण प्रतिभुवं कृत्वा शत्रुरावणोऽपि रावणः सन्धायासनमास्थितोऽन्यथा निवातकवचैर्विनाश्यते ( स्म ) इति एतदपि सन्धायासनम् ॥ १७ ॥

सम्भूयासनमभिधातुमाह-( उदासीन इति । ) उदासीनमध्यमौ कृतलक्षणौ । समानप्रतिशङ्कया यदि समानोऽपि कारणादभियोक्ता स्यात् तच्छङ्कया उदासीने मध्यमे विषयभूते व्यवस्थानं सम्भूयासनमुच्यत इति प्रतीतम् ॥ १८ ॥

( उभयारिमिति । ) तथा उभयारिरत्र मध्यमविशेषः । तं विशेषेण वाञ्छन्तमिच्छन्तं विनाशं उभयोरप्यरिविजिगीष्वोरुपचितशक्तित्वात् तदा बहुभिः सम्भूयैनमुभयारिं प्रति व्यूहेत प्रतिबलयेत् । अधिकं बलवत्तरमिति । सङ्घधर्मणा सङ्घवृत्तोक्तन्यायेनेति ॥ १९ ॥

यियासोरन्यमन्यत्र प्रसङ्गेन हि केनचित् ।
आसनं यत् तदर्थज्ञैः प्रसङ्गासनमुच्यते ॥ २० ॥
अथोपेक्ष्यारिमधिकमुपेक्षासनमुच्यते ।
उपेक्षां कृतवानिन्द्रः पारिजातग्रहं प्रति ॥ २१ ॥
उपेक्षितस्य वान्यैस्तु कारणेनैव केनचित् ।

---

यियासोरिति–अन्यं शत्रुं यातुमिच्छोर्विजिगीषोः । अन्यत्र, यातव्यात् । प्रसङ्गेन हीति–अन्तरा मित्रोत्सवादिप्रसङ्गेन ॥ २० ॥

अथोपेक्ष्येति । स्थानमासनमुपेक्षणं चेत्यासनपर्यायाः । तत्र गुणैकदेशे स्थानम् । स्ववृद्धिप्राप्त्यर्थमासनम् । उपायानामप्रयोग उपेक्षणम् । तत्र बलवन्तमरिमुपायानामप्रयोगपूर्वकमुपेक्ष्य यत्स्ववृद्धिप्राप्त्यर्थमासनं, तदुपेक्षासनमुच्यते । पारिजातग्रहं प्रतीति । विष्णोः प्रियां सत्यभामां पत्या स्वगृहमागतां शची स्वमुद्यानं दर्शयामास । तत्र पारिजातमञ्जरीं दृष्ट्वा सत्यभामया प्रणयादभ्यर्थिता मानुषीत्यवज्ञया न ददौ । तदीर्ष्यया च जातकोपया तया प्रोत्साहितो विष्णुर्नन्दनं वनं गत्वा तदारक्षकान् निहत्य पारिजातकमेवोत्पाट्य द्वारकायां रोपितवान् । इन्द्रोऽपि देवकार्यमनेनानेकं कर्तव्यं, बलवांश्चेति विचिन्त्य तमुपेक्ष्य स्थितवानित्येकः प्रकारः ॥ २१ ॥

द्वितीयमाह–उपेक्षितस्य वान्यैरिति । यदा द्वयोरमित्रयोः परस्परमभि-

---

प्रसङ्गासनमभिधातुमाह–( यियासोरिति । ) यियासोरन्यं यातुमिच्छोः प्रसङ्गेन कार्यान्तरेण अर्थलाभानर्थप्रतीकारादिना यदासनं तत्प्रसङ्गासनमुच्यते अर्थज्ञैः शास्त्रवेदिभिरिति ॥ २० ॥

उपेक्षासनमाह–( आस्त इति । ) अत्राभियुक्तोऽरिमाधिकं दृष्ट्वा आस्ते उपेक्षां कृत्वा तदुपेक्षासनम् । यथा उपेक्षां कृतवानिन्द्रः पारिजातग्रहं प्रति ।... ........ततः प्रतियातरुक्मिणीसत्यभामासन्निधौ वासुदेवाग्रतो नारदः पारिजातमञ्जरीमदृश्यमानश्चिक्षेप, हरिकरस्थितायां च मञ्जर्यां समकालमेव भार्याद्वयेनाभ्यर्थितेन रुक्मिण्यै दत्तेति सत्यभामया, यस्येयं मञ्जरी तेन वृक्षेण विना मदन्तिकं नागन्तव्यमिति तदर्थं वासुदेवेन विध्वस्ते नन्दने इन्द्रेणोपेक्षणं कृतमिति ॥ २१ ॥

द्वितीयमुपेक्षासनमाह–( उपेक्षितस्येति । ) अन्यैर्स्नेहादिना कारणेन

आसनं रुक्मिण इव तद्वद्युपेक्षासनं स्मृतम् ॥ २२ ॥
बलिनोर्द्विषतोर्मध्ये वाचात्मानं समर्पयेत् ।
द्वैधीभावेन वर्त्तेत काकाक्षिवदलक्षितः ॥ २३ ॥

युक्तिकृतोः कार्यसम्भववशाद्यथास्वं पक्षमाश्रितेषु शत्रुविजिगीषुसमवायार्थिषु ताभ्यां गौरयुक्तोऽयमित्यनेन प्रकारेणोभाभ्यामभ्युपेक्षितो न समवेतः, तदाऽस्योपेक्षितस्य यदासनं, तदुपेक्षासनम् । रुक्मिण इवेति—कुरुपाण्डवानामुद्यमे यथाप्रयोजनं द्विधा समाश्रितेषु सामवायिकेषु सर्वक्षत्रियेषु रुक्मी करथकैशिकेष्वेकाक्षौहिणीपरिवारः सन् शत्रुभ्यो भयात् कुरुपाण्डवान् साहाय्यदानेच्छया प्रत्येकमुपगम्योवाच "यदि भीताः स्थ साहाय्यं करिष्यामि रणे" इति । तैश्चासौ मन्दप्रयोजनोऽयं युयुत्सुरित्युपेक्षितो निवृत्त्यासितवान् ॥ २२ ॥

द्वैधीभावमधिकृत्य श्लोकचतुष्टयमाह--बलिनोरित्यादि । तत्र कौटिलीये द्विधा द्वैधीभाव उक्तः । तथा षाड्गुण्यसमुद्देश उक्तः "सन्धिविग्रहोपादानं द्वैधीभाव" इति । अवस्था चास्योक्ता "सहायसाध्ये कार्ये द्वैधीभावं गच्छेदिति"। ( कौ० अ० ७–१–९८,९९) तथा संश्रयवृत्तावुक्तं "पार्श्वस्थो वा बलस्थयोरासन्नभयात्प्रतिकुर्वीत, दुर्गापाश्रयो वा द्वैधीभूतस्तिष्ठेत् , सन्धिविग्रह-( क्रम ) हेतुभिर्वा चेष्टेते"ति । ( कौ० अ० ७–२–१०० ) इह तु सन्धिविग्रहयोरुक्तत्वात्तत्समुदायोऽपि द्वैधीभावोऽर्थादुक्त एवेति नोक्तम् । इतरं तु द्वैधीभावमभिसन्धायाह—बलिनोर्द्विषतोरिति । वाचात्मानं समर्पयन् , इदं राज्यमहञ्च त्वदर्पण इति द्वैधीभावेनोभयत्रात्मार्पणेन दुर्गापाश्रयो वर्तेत । काकाक्षिवदलक्षितः—काकदृष्टिर्ह्येकाप्युभयत्र गोलके वर्तमाना नोपलक्ष्यते । द्वैधीभावश्चायमुभयाश्रयः संश्रयश्चैकाश्रय इत्यनयोर्भेदः ॥ २३ ॥

उपेक्षितस्य यदासनं तदुपेक्षासनं, रुक्मिण इव, वासुदेवेन रुक्मिणीहरणे क्रियमाणे परिभवादिकमङ्गीकृत्य स्नेहात् रुक्मिणीभ्राता उपेक्षासनं कृतमिति ॥२२॥

द्वैधीभावं गुणमभिधातुमाह—( बलिनोरिति । ) बलिनोः शक्तित्रयसम्पन्नयोः द्विषतोर्मध्ये वाचा वाङ्मात्रेणैवात्मानं समर्पयन् न कर्मणा, प्रत्येकमहं त्वदीयो यन्मम किञ्चित्त्वदीयमेवेति । वाच्ययं मित्रभावो हृदि तु शत्रुभाव इति द्विधाभवनम्—द्वैधीभावस्तेन वर्तेत आत्मरक्षार्थं काकाक्षिवदलक्षित इति । यथा काकस्यैकं वामदक्षिणपार्श्वयोः समकालमेव परिदृश्यमानं न लक्ष्यते—किमेकं द्वे वेति एवंभावं द्विरधिष्ठानं धारयेत् एको द्वैधीभाव इति ॥ २३ ॥

यापयेद् यत्नमास्थाय सन्निकृष्टतरस्तयोः ।
उभयोरपि सम्पाते सेवेत बलवत्तरम् ॥ २४ ॥
यदा द्वावपि नेच्छेतां संश्लेषं जातसंविदौ ।
तदोपसर्पेत्तच्छत्रुमधिकं वा समाश्रयेत् ॥ २५ ॥
द्वैधीभावो द्विधा प्रोक्तः स्वतन्त्रपरतन्त्रयोः ।
स्वतन्त्र उक्तो ह्यन्यस्तु यः स्यादुभयवेतनः ॥ २६ ॥

---

यापयेदात्मानमिति शेषः । सन्निकृष्टतरस्तयोस्तद्देशाक्रान्त्या द्वाभ्यामुपहितत्वात् । सम्पात इति स्वदेशात्सम्भूय विजिगीषुदेशमभिपततोरित्यर्थः । बलवत्तरं द्वयोरेवान्यतरम् ॥ २४ ॥

जातसंविदाविति—उच्छेत्तव्योऽयमस्माभिर्न सन्धातव्य इति कृतसंवित्कौ तच्छत्रुमिति तयोः शत्रुम् । अधिकं वा अशत्रुमपि विशिष्टबलम् ॥ २५ ॥

द्विधा प्रोक्तः—स्वतन्त्रपरतन्त्रयोश्च भेदात् । तत्र स्वतन्त्र उक्तः । अयमेव विजिगीषुः तस्य स्वकर्मप्रधानत्वात् । अन्यस्तु परतन्त्रः, कोऽसावित्याह—यः स्यादुभयवेतन इति । यो याभ्यां यत्र प्रणिहितः स ताभ्यां वेतनमाददानः उभयवेतनः । तयोरुभयोर्वर्तमानः परकर्मप्रधानत्वात् परतन्त्रः ॥ २६ ॥

---

तत्र विधेयमाह—( यापयेदिति । ) प्रयत्नेनाऽऽक्षितः, सन्निकृष्टतरं तयोर्द्विषतोर्यः सन्निकृष्टः तं, कालयापनया प्रतिपन्नश्चैष करोमीत्याशाप्रदर्शनेन कालं यापयेदित्यर्थः । उभयोरपि विश्वासाभावात् सम्पाते बलवत्तरं त्राणार्थं सेवेतेति ॥ २४ ॥

( यदेति । ) तथा यदा द्वावप्यरी जातसंविदौ वञ्चकोऽयमिति जातविश्वासौ संश्लेषं सन्धिं नेच्छेतां तदोपसर्पेत्तयोः शत्रुं परित्राणार्थं तदभावेऽप्यधिकमाश्रयं व्रजेदिति ॥ २५ ॥

( द्वैधीभाव इति । ) द्वैधीभावो गुणः आचार्यैर्द्विधा प्रोक्तः । एकः स्वतन्त्रोऽपरः परतन्त्रः । तयोः स्वतन्त्रपरतन्त्रयोर्मध्ये स्वतन्त्र उक्तो( यो )ऽनन्तरं स्ववशो यत्र रक्षा सम्पद्यते तत्रैव यातीति । अन्यस्त्विवति परतन्त्रः यः स्यादुभयवेतनो भृत्यादिः सोऽपि स्वामिद्वयवेतनं गृह्णन् एकस्मिन् गृहीतपुत्रदारे स्निह्यति, द्वितीयाय द्रुह्यतीति ॥ २६ ॥

उच्छिद्यमानो बलिना निरुपायप्रतिक्रियः ।
कुलोद्भतं सत्यमार्यमाश्रयेत बलोत्कटम् ॥ २७ ॥

तद्दर्शनोपास्तिकता नित्यं तद्भावभाविता ।
तत्कारिता प्रश्रयिता वृत्तं संश्रयिणां स्मृतम् ॥ २८ ॥

विनीतवत् तत्र कालं गमयित्वा गुराविव ।

---

संश्रयमधिकृत्य श्लोकाष्टकमाह—उच्छिद्यमानः स्वदेशादुत्थाप्यमानः । निरुपायप्रतिक्रिय इति—उपायेन प्रतिक्रिया उपायप्रतिक्रिया सा शक्तिहीनत्वाद् व्यपेता यस्येति विग्रहः । तथाह्युक्तं ' शक्तिहीनः संश्रयेते '' ति । ( कौ० अ० ७–९८–१९ ) कुलोद्गतं—राजबीजकम् । आर्यं सद्वृत्तम् । बलोत्कटं—शत्रोर्बलाधिकम् ॥ २७ ॥

समाश्रितस्य वृत्तिमाह—तद्दर्शनेत्यादि । तद्दर्शनायोपास्तिः उपासना यस्येति विग्रहः । पश्चात् कप्रत्ययान्तस्य भावप्रत्ययः । तद्भावभाविता तदभिप्रायानुकूलता । तत्कार्यकारिता—तदर्थकारिता । प्रश्रयिता—सादरता ॥ २८ ॥

विनीतवद्विनीत इव । तत्सङ्गात् प्रतिपूर्णः—तत्संश्रयादभ्युच्चितः । स्वव-

---

संश्रयगुणमभिधातुमाह—( उच्छिद्यमान इति । ) बलिना अत्युपचितशक्तिना अभियोग उच्छिद्यमानः । निरुपायप्रतिक्रियस्तत्र च निरुपाया प्रतिक्रिया यदा स्यात् तदा संश्रयवृत्तिरिष्यते महादोषो हि विशिष्टबलसमागमो राज्ञामिति वचनात् । उपायान्तरे विद्यमाने संश्रयो नेष्यत इति भावः । तदा कुलोद्गतं, कुलीनस्य नाकार्ये मतिः प्रवर्तत इति । सत्यममृषावादिनमार्यमनतिसन्धायकं श्रयेत बलोत्कटमभियोक्त्रपेक्षया बलेनोत्कटमात्मरक्षार्थमिति ॥ २७ ॥

संश्रयिणो विधेयमाह—( तदिति । ) तद्दर्शने आश्रितदर्शने साष्टाङ्गप्रणामपूर्वकाराधनशीलता । नित्यं तद्भावभाविता तथा चोक्तम्—

" यस्य यस्य हि यो भावस्तेन तेन हि तं नरः ।
अन्तःप्रविश्य मेधावी क्षिप्रमात्मवशं नयेत् ॥ " इति ।

तत्कारिता प्रश्रयिता एतद्वृत्तं संश्रयिणः स्मृतमिति ॥ २८ ॥

( विनीतवदिति । ) तत्र संश्रिते विनीतवत् न तु परमार्थतो विनीतः कश्चित्कालं गमयित्वा गुराविव तत्सङ्गात् संश्रितसम्बन्धात् परिपूर्णः शक्तिमि-

तत्सङ्गात् प्रतिपूर्णः सन् क्रमेण स्ववशो भवेत् ॥ २९ ॥
ददद् बलं वा कोशं वा भूमिं वा भूमिसम्भवाम् ।
आश्रयेदभियोक्तारं विसन्धिरनपाश्रयः ॥ ३० ॥
सर्वाणि चैतान्यार्तः सन् दद्यात् त्राणार्थमात्मनः ।
युधिष्ठिर इवाप्नोति पुनर्जीवन् वसुन्धराम् ॥ ३१ ॥
निष्पतेदात्मलाभे वा व्यसने वा रिपोः श्रितः ।

शो भवेत्—स्वकर्मप्रधानः स्यात् ॥ २९ ॥

बलं दण्डः । भूतिसम्भवां— गुणवतीं भूमिम् । विसन्धिरनपाश्रय इति-यदा बलोत्कटो नास्ति, तदा निराश्रयोऽभियोक्त्रा सह सन्दध्यात् । तेनापि विसन्धिश्चेदतिघोरमेवाश्रयेत् ॥ ३० ॥

कस्माद्बलादीनि दद्यादित्याह सर्वाणीत्यादि । त्राणार्थमात्मनः तस्य प्रधानत्वात् । जीवतः पुनरावृत्तिदर्शनात् । यदाह—युधिष्ठिर इवेति । युधिष्ठिरो हि द्यूतेन हृतराज्योऽपि जीवन् पुनराप्तवान् राज्यमित्यतिप्रसिद्धम् ॥ ३१ ॥

संश्रितः कदा निर्गच्छेदित्याह निष्पतेदिति । आत्मलाभे—स्ववृद्धौ सत्याम् । व्यसने वा शत्रोरन्तःकोपादौ प्रहरेद्वा । यदि न निष्पतेदाबलीयस्या वृत्त्येति शेषः " मत्तः प्रमत्तवदि " त्यादिना ( १०—३७ ) प्रागुक्तयाऽऽबलीयस-

रभ्युच्छ्रितः सन् क्रमेण स्ववशो भवेत् तच्चित्तमेवाराध्येत्यर्थः ॥ २९ ॥

उक्तगुणसंश्रयाभावे विधेयमाह—( दददिति । ) ( आश्रयेत् ) गत्यन्तराभावेऽभियोक्तारं विसन्धिरनपाश्रय इति प्रतीतम् ॥ ३० ॥

( सर्वाणीति । ) सर्वाणि बलकोशदण्डादीनि, आर्तः सन् दद्यात् त्राणार्थमात्मनः । यत्रात्मा जीवन्नवशिष्यते । युधिष्ठिर इवेत्यादि प्रतीतम् । तथाचाहुः—

कल्याणी बत गाथेयं लौकिकी प्रतिभासते ।
एति जीवन्तमानन्दो नरं वर्षशतादपि ॥ १ ॥
त्यजेत्कुलार्थे पुरुषं ग्रामस्यार्थे कुलं त्यजेत् ।
ग्रामं जनपदस्यार्थे ( आत्मार्थे ) विचार्य पृथिवीं त्यजेत् ॥ ॥

इति ॥ ३१ ॥

प्रकारान्तरमाह—( निष्पतेदिति । ) निष्पतेदात्मलाभे वा व्यसने वा

प्रहरेद् वाऽऽबलीयस्या सैंह्या वा काल उत्थितः ॥ ३२ ॥
नाकारणात् सङ्गमियाज्ज्यायसा वेतरेण वा।
क्षयव्ययकृताद् दोषाद् विस्रम्भद्रोहजादपि ॥ ३३ ॥
संयोगं हेतुना गत्वा पितर्यपि न विश्वसेत्।
विश्वासमागतं सन्तं प्रायो द्रुह्यन्त्यसाधवः ॥ ३४ ॥
इति षाड्गुण्यमन्ये तु द्वैगुण्यमिति चक्षते।

---

वृत्त्या वा सैंह्या वा—सिंहवृत्त्या वा स्वोत्साहमवेक्ष्येत्यर्थः ॥ ३२ ॥

नाकारणादिति। यदा परस्यारिविगृहीतत्वं न पश्यत्तदा न संश्लिष्यात्। किन्त्वदृष्ट एव कोशादीन् ददत्संश्रयेत्। तथा चोक्तं "कोशदण्डभूमीनामन्यतमेनास्योपकर्तुमदृष्ट प्रयतेत। महादोषो हि विशिष्टबलसमागमो राज्ञामन्यत्रारिविगृहीतादिति"। (कौ अ० ७–२–१०) इतरेण समहीनाभ्यां वा। दोषादपि न सङ्गमियादिति सम्बन्धः। विस्रम्भद्रोहजात्—विस्रम्भघातसमुत्थात् ॥ ३३ ॥

हेतुना-कारणेन। पितर्यपि न विश्वसेत् किमुत शत्रुषु। विश्वासमागतं विश्वस्तम् ॥ ३४ ॥

इदानीं श्लोकसप्तकेन षाड्गुण्योपसंहारपूर्वकं मतभेदं दर्शयति—इति षाड्गुण्यमित्यादि। प्रतिपादितमिति शेषः। द्वैगुण्यमिति—सन्धिर्विग्रहश्च द्वावेव गुणौ।

---

रिपोः श्रितः; प्रहरेद्वा बलीयस्या सैंह्या वृत्त्या बलिनं रिपुं काले प्रहर्तव्यकाले; उच्छिद्यत इति ॥ ३२ ॥

(नेति।) कारणाद्विना सङ्गमं नेयात् न गच्छेत् ज्यायसा विशिष्टबलेन च इतरेण दुर्बलेन समानबलेन वा। कस्मादित्याह—क्षयव्ययकृतात् क्षयः पुरुषवाहनादेर्विनाशः शुष्ककलहादौ; धान्यहिरण्यादेरौचित्यकरणे व्ययस्तत्कृतादोषात्। विश्रम्भद्रोहजादपि दोषात् विश्रम्भमागतं द्रुह्यन्ति वा असाधव इति ॥ ३३ ॥

एतदेव समर्थयन्नाह—(संयोगमिति।) संयोगं हेतुना केनापि कारणेन गत्वा पितर्यपि न विश्वसेत् विश्वासं न कुर्यादिति ॥ ३४ ॥

उपसंहरन्नाह—(इतीति।) इति षाड्गुण्यमिति सिद्धान्तः। अन्ये तु द्वैगुण्यमिति चक्षते व्याख्यां कुर्वन्ति; यतो यानासने विग्रहस्य रूपं सन्धेः पर

यानासने विग्रहस्य रूपं सँन्धेः परं स्मृतम् ॥ ३५ ॥
( सन्धेस्तु सन्धिमार्गज्ञैर्द्वैधीभावसमाश्रयौ । )
सोऽभिगच्छंश्च तिष्ठंश्च विग्रहं कुरुते यतः ।
ततो यानासने प्राज्ञैर्विग्रहः परिकीर्त्यते ॥ ३६ ॥
असन्धाय यतो नास्ति द्वैधीभावः समाश्रयः ।
ततो द्वावपि तौ प्राज्ञै रूपं सन्धेरुदाहृतौ ॥ ३७ ॥
सन्धायेति हि यत्प्रोक्तं तत् सन्धे रूपमुच्यते ।
विगृह्येति च यत्प्रोक्तं विग्रहस्य तदुच्यते ॥ ३८ ॥

---

शेषाणामत्रैवान्तर्भावात् कारणात् । तदेव दर्शयति यानासने इत्यादिना । सन्धेः परं रूपं द्वैधीभावसंश्रयौ ॥ ३५ ॥

स इति विजिगीषुः । अभिगच्छंश्चेति । अपरभूमौ गच्छन् देशविलोपादिनापकारलक्षणं विग्रहञ्च कुरुते । तिष्ठन् स्वभूमौ । परमभिहन्तुमशक्तोऽप्यतिसन्धातुकामः । स्वदण्डैर्वा कर्शयन् विगृह्णाति ॥ ३६ ॥

असन्धायेति—सन्धिमकृत्वा कथं द्विधा वर्तेत, संश्रयेद्वा तस्मादुभावपि सन्धे रूपम् । यानासनभेदा अपि यथास्वमत्रान्तर्भूतत्वादत्यातिभिन्ना एव । सम्भूयप्रसङ्गापेक्षा अपि यथासम्भवं योज्याः ॥ ३७ ॥ ३८ ॥

---

स्मृतम् । विग्रहे सति यानं, विगृह्यासनं तदशेषं ( विग्रहरूपमेव ) संश्रयो द्वैधीभावश्च सन्धेरेव रूपं, अतो द्वैगुण्यमेव ॥ ३५ ॥

एतदेव व्याख्यातुमाह—( स इति । ) स हि अभियोक्ता गच्छन् अभियानगुणमातिष्ठन् , तिष्ठन् आसनगुणमातिष्ठन् विग्रहं कुरुते यतस्ततो यानासने प्राज्ञैर्विग्रहः परिकीर्तित इति प्रतीतम् ॥ ३६ ॥

( असन्धायेति । ) तथा सन्धिमकृत्वा द्वैधीभावः संश्रयसहितो नास्ति " संश्रयविग्रहोपादानो द्वैधीभाव ( ७–१–९९ ) " इति कौटिल्यः । संश्रयस्तु न सन्धिं विनेति, ततो द्वावपीत्यादि प्रतीतम् ॥ ३७ ॥

( सन्धायेति । ) सन्धायति हि यत्प्रोक्तं तत्सन्धे रूपमिष्यते । विगृह्येति च यत्प्रोक्तं विग्रहस्य तदुच्यते । रूपमिति वर्तत इति ॥ ३८ ॥

सन्धिश्च विग्रहश्चेति द्वैगुण्यमिति चक्षते ।
एतौ च संश्रयश्चैव त्रैगुण्यमिति चापरे ॥ ३९ ॥
यस्मादन्यं संश्रयेत बाध्यमानो बलीयसा ।
तत्सन्धेः संश्रयो ह्यन्य इत्युवाच वृहस्पतिः ॥ ४० ॥
न्याय्यो गुणो विग्रह एक एव सन्ध्यादयोऽन्ये तु गुणा-
स्तदुत्थाः ।

---

एताविति—सन्धिविग्रहौ । संश्रयश्च तृतीयः ॥ ३९ ॥

यस्मादन्यमिति । अभियोक्तुरन्यं बलात्कटं संश्रयेत् । सन्धिः पुनरभियोक्त्रैव बलीयसा सह क्रियते ॥ ४० ॥

एक एवेति—कौटिल्यदर्शनमेवैतत् । एवं मन्यते—यदि प्राधान्यचिन्तया गुणोपदेशस्तदा विग्रह एवैको गुणः । यस्मादभियोक्ताभियोज्यश्च द्वे प्रकृती इति । तत्र प्राधान्येन प्रथमं विग्रह एव व्याप्रियते, शेषास्तु तदङ्गभूतास्तद्भाविनो गुणीभूता एव । अथ स्वकार्यावस्थापेक्षया गुणाख्यानं, तदा षडेव गुणा इत्याह—अवस्थया भेदमुपागतः षाड्गुण्यमिति । तथा चोक्तम्—षाड्गुण्यमेवैतदवस्थाभेदादिति कौटिल्यः । तत्र "हीयमानः सन्धीयेत ( सन्दधीत ) । अभ्युच्चीयमानो विगृह्णीयात्, न मां परो नाहं परमपहन्तुं शक्त इत्यासीत "। गुणातिशययुक्तो यायात् । शक्तिहीनः संश्रयेत, साहाय्यसाध्ये कार्ये द्वैधीभावं गच्छेदिति, ( कौ०

---

( सन्धिश्चेति । ) एवं च सन्धिश्च विग्रहश्चेति द्वैगुण्यमिति चक्षत इति स्थितम् । एताविति । सन्धिश्च विग्रहश्चैव । चक्षत इति वर्तत इति ॥ ३९ ॥

सन्धौ संश्रयो नान्तर्भविष्यतीति नियममाह ( यस्मादिति । ) यस्मात्कारणादन्यं बलवत्तरं संश्रयते बाध्यमानो बलीयसा । तप्तं तप्तेन सन्धत्त इति सन्धिस्वरूपम् । नात्र संश्रयस्य तापोऽस्तीति सन्धेरन्यः संश्रय इति । तत्सन्धेः संश्रयो ह्यन्य इत्युवाच बृहस्पतिरिति प्रतीतम् ॥ ४० ॥

स्वगुरुमतदर्शनपूर्वकमुपसंहरन्नाह—( न्याय्य इति । ) न्यायेन विचार्यमाणे एको विग्रह एव गुणः । सन्ध्यादयोऽन्ये तु गुणास्तदुत्था विग्रहानन्तरं व्यपदिश्यन्ते; यतो विग्रहोपतप्तः सन्धत्ते । संश्रय एव द्वैधीभावः । विग्रह एव यानं, कारणादासनं चेति बोद्धा प्रतिभिद्यमानोऽप्येक एव विग्रहो गुण इत्य मद्गुरो-

अवस्थया भेदमुपागतः सन् षाड्गुण्यमित्येव गुरोर्मतं नः ॥ ४१ ॥

इति यानासनद्वैधीभावसंश्रयविकल्पो नाम षोडशं प्रकरणम् ।

इति श्रीकामन्दकीयनीतिसारे यानासनद्वैधीभावसंश्रय-
विकल्पो नाम एकादशः सर्गः ।

---

अ० ६–२–९९ ) ॥ ४ ॥

इति षोडशं यानासनद्वैधभावसंश्रयप्रकरणम् ।

इति शङ्करार्यविरचितायां कामन्दकीयनीतिसारपञ्चिकायां
जयमङ्गलायां यानासनद्वैधीभावसंश्रयविकल्पो नाम
एकादशः सर्गः ।

---

मतम् ॥ ४१ ॥

( इति षोडशं यानासनद्वैधीभावसंश्रयविकल्पप्रकरणम् । )

इति कामन्दकीयनीतिसारटीकायामुपाध्यायनिरपेक्षायां यानासन-
द्वैधीभावसंश्रयविकल्पो नाम एकादशः सर्गः ॥

## अथ द्वादशः सर्गः ।

### १७ मन्त्रविकल्पप्रकरणम् ।

षाड्गुण्यनिश्चितमतिर्गुह्यं गूढप्रचारवान् ।
मन्त्रयेतेह मन्त्रज्ञो मन्त्रज्ञैः सह मन्त्रिभिः ॥ १ ॥

---

## अथ द्वादशः सर्गः ।

### १७ मन्त्रविकल्पप्रकरणम् ।

परमण्डलविजयोपायः षाड्गुण्यं सर्गत्रयेणोक्तम् । तत्र विज्ञाततत्स्वरूपस्यापि मन्त्रहीनस्य तत्प्रयोगासम्भव इति, षाड्गुण्यप्रयोगाय तच्छेषभूतो मन्त्रस्य विमर्शोऽस्मिन् सर्गे विधीयत इति प्रकरणक्रमः । यदाह—षाड्गुण्यनिश्चितमतिरित्यादि । यथोक्ते षाड्गुण्ये प्रतिष्ठितमतिः । विग्रहे गूढप्रचारवान् स्वपरैरविज्ञातचेष्टितत्वात् । इहेति स्वपरमण्डलविषये, गुह्यं मन्त्रं मन्त्रयेतेति सम्बन्धः । मन्त्रज्ञः तदङ्गतत्त्वपरिज्ञानात् । सह मन्त्रिभिः । तथा हि—"नैकस्य मन्त्रसिद्धिरस्तीति विशालाक्षः" ( कौ० अ० १–१४–११ ) ॥ १ ॥

---

## अथ द्वादशः सर्गः ।

### १७ अथ मन्त्रविकल्पप्रकरणम् ।

षाड्गुण्यस्यानन्तरं मन्त्राधिकारस्य सम्बन्धं दर्शयन्नाह—( षाड्गुण्येति । ) षाड्गुण्ये अनन्तरोक्ते निश्चिता निःसन्दिग्धा मतिर्यस्य कृतषाड्गुण्यतत्त्वनिर्णय इत्यर्थः । गुह्यं गोपनीयं कार्यं मन्त्रयेदिति सम्बन्धः । गूढं प्रचरन्तीति गूढप्रचाराः संस्थासञ्चारभेदभिन्नाः ते विद्यन्तेऽस्येति गूढप्रचारवान् । मन्त्रज्ञ इति मन्त्रः—षण्णां गुणानां मध्ये कस्मिन् गुणे स्थितस्य मे वृद्धिरवृद्धिः परस्य ( इति ) तत्रावस्थित्यर्थः पर्यालोच्यो मन्त्रः । तत्र कौटिल्यः—'तेषां यस्मिन्वा गुणे स्थितः पश्येत् इह स्थितः शक्ष्यामि दुर्गसेतुकर्मवणिक्पथशून्यनिवेशखनिद्रव्यहस्तिवनकर्माणि आत्मनः प्रवर्तयितुं, प[रस्य] चैतानि कर्माणि अपहन्तुमिति सा वृद्धिः ।" एतद्विषयं गुप्तभाषणं मन्त्रः स्वकर्मप्रवर्तनं परकर्मोपघातश्च यैरुपायैर्भवति तैस्तैश्च तत्कर्मप्रचारो मन्त्रः इत्यादिस्वरूपं जानातीति मन्त्रज्ञो विजिगीषुरेव । मन्त्रज्ञैरेव मन्त्रिभिः सहेति ॥ १ ॥

मन्त्रार्थकुशलो राजा सुखं भूतिं समश्नुते ।
विपरीतस्तु विद्वद्भिः स्वतन्त्रोऽप्यवधूयते ॥ २ ॥
दुर्मन्त्रमेनं रिपवो यातुधाना इव क्रतुम् ।
समन्ततो विलुम्पन्ति तस्मान्मन्त्रपरो भवेत् ॥ ३ ॥
मन्त्रयेतेह कार्याणि सहाप्तेन विपश्चिता ।
आप्तं मूर्खमनाप्तञ्च मन्त्रिणं परिवर्जयेत् ॥ ४ ॥

---

मन्त्रज्ञ इत्यस्य स्थिरीकरणाय श्लोकद्वयमाह–मन्त्रार्थकुशल इत्यादि । विपरीतो मन्त्रार्थाकुशलः । स न केवलं भूतिं न समश्नुते अवधूयते च विद्वद्भिर्मूर्खोऽयमिति । स्वतन्त्रोऽपि–स्वयं कार्यं प्रवर्तयन्नपि ॥ २ ॥

दुर्मन्त्रं अविशुद्धमन्त्रम् । यातुधाना राक्षसाः । क्रतुं यज्ञम् । तस्मान्मन्त्रपरो भवेत्, तत्पूर्वकत्वात् सर्वारम्भाणाम् ॥ ३ ॥

मन्त्रज्ञैः सह मन्त्रिभिरित्यस्य विशेषमाह–सहाप्तेन विपश्चितेति । आप्तेन मन्त्रज्ञेन च मन्त्रिणा कार्याणि मन्त्रयेतेत्यर्थः । यः पुनरनाप्तः योऽपि न मन्त्रज्ञस्तदुभयमपि त्यजेत् ॥ ४ ॥

---

मन्त्रज्ञानस्य फलमन्वयव्यतिरेकाभ्यां दर्शयन्नाह–( मन्त्रार्थेति । ) वक्ष्यमाणपञ्चाङ्गस्य मन्त्रस्य योऽर्थः वृद्धिक्षयलक्षणस्तस्य सम्पादने कुशलो राजा प्रजारञ्जनात् सुखमक्लेशेन भूतिं श्रियमश्नुते आक्रम्य भुङ्क्ते । विपरीतस्तु मन्त्रार्थाकुशलः विद्वद्भिः पण्डितैः तत्र कुशलैः स्वतन्त्रोऽपि अवधूयते राज्यात् प्रच्याव्यते इति ॥ २ ॥

( दुर्मन्त्रामिति । ) दुष्टो मन्त्रो मन्त्रणं यस्य । दुष्टत्वं च तस्य शास्त्रविरुद्धत्वम् । एनं रिपवो विलुम्पन्ति समन्ततो यातुधाना राक्षसा दुष्प्रयुक्तवैदिकमन्त्रं यज्ञमिव । तस्मात्तेषु मन्त्रपरो यथोक्तमन्त्रपर एव स्यादिति ॥ ३ ॥

मन्त्रलक्षणमभिधातुमाह–( मन्त्रयेतेति । ) मन्त्रयेतेह कार्याणि सहाप्तेन यो हि षड्गुणैर्निरन्तरं व्याप्यते स तस्याप्त इत्युच्यते । आप्लृ व्याप्ताविति पाठात् । तस्य च व्यभिचारो न स्याद् यथा तथोक्तत्वात् । आप्तोऽपि भूत्वा यदि विपश्चित् नीतिशास्त्रपण्डितो भवति तेन सह मन्त्रयेत । एतद्गुणद्वयमेकत्र यस्मिन् विद्यते तेनेति । आप्तं मूर्खमनाप्तं च पण्डितमिह मन्त्रे वर्जयेदिति ॥ ४ ॥

मार्गं सन्मार्गगतिभिः सिद्धये सिद्धकर्मभिः।
पूर्वैराचरितं सद्भिः शास्त्रीयं न परित्यजेत् ॥ ५ ॥
उच्छास्त्रपदविन्यासः सहसैवाभिसम्पतन्।
शत्रुखड्गमुखग्रासमगत्वा न निवर्तते ॥ ६ ॥
प्रभावोत्साहशक्तिभ्यां मन्त्रशक्तिः प्रशस्यते।

---

असम्मन्त्र्यैव कस्मान्न कार्यं कुर्यादित्याह—मार्गमित्यादि। शास्त्रीयं मार्गं मन्त्रनिर्णयाख्यं सिद्धये न परित्यजेदिति सम्बन्धः। पूर्वैराचरितं सेवितम्। ते ह्यमुमेवाश्रित्य सिद्धकर्माणोऽभवन् ॥ ५ ॥

तत्परित्यागे दोषमाह—उच्छास्त्रपदविन्यास इति। उच्छास्त्रः पदविन्यासः कार्यानुष्ठानलक्षणो यस्येति विग्रहः। सहसैव विना निर्णयेन ॥ ६ ॥

शक्तित्रये च मन्त्रशक्तिर्गरीयसीत्याह—प्रभावेत्यादि। काव्यो जितो देवपुरोधसेति। देवासुरसङ्ग्रामे देवैर्निहतानसुरांस्तन्मन्त्री शुक्रः सञ्जीवन्या विद्यया जीवयतीति श्रुत्वा बृहस्पतिर्देवमन्त्री चिन्तामापन्नस्तदतिसन्धानोपायञ्च ज्ञानबलेनालोच्य तद्विद्याग्रहणार्थं कचाख्यं स्वपुत्रं शिष्यत्वेन प्रहितवान्। तस्य च तमाराधयतस्तद्दुहित्रा देवयान्या सह महान् स्नेहोऽभवत्। तं चैकदा शत्रुपक्षीय

---

मन्त्रश्च शास्त्रोक्तक्रमेणैव कार्यं इति दर्शयन्नाह—( मार्गमिति। ) शास्त्रीयं मार्गं मन्त्रणे न परित्यजेदिति सम्बन्धः। पूर्वैः षोडशराजादिभिः बृहस्पत्यादिभिश्च सद्भिः सद्गुरुभैराचरितं सेवितं च। सिद्धये सिद्ध्यर्थम्। सिद्धकर्मभिः सद्भिः। सन्मार्गगैव गतिर्येषां ते इति तथोक्तन्यायेनैव मार्गेण मन्त्रः कर्तव्य इत्यर्थः ॥ ५ ॥

उक्तस्यान्यथात्वे दोषं दर्शयन्नाह—( उच्छास्त्रेति। ) उद्गतशास्त्रं पदविन्यासः कार्येषु गमनं यस्य ( सः )। पदविन्यासानिष्पाद्यं उच्छास्त्रं न कर्तव्यमित्यर्थः। सहसैव मन्त्रालोचनं विनैवाभिसम्पतन् अभिमुखं शत्रूणां गच्छन्, शत्रुखड्गमुखग्रासमगत्वा न निवर्तत इति। खड्गमुखं धारैव तद्ग्रासः खड्गधाराग्रासो मरणं तदप्राप्य न निवर्तते इत्यर्थः अतो मन्त्रपूर्वं प्रवर्तितव्यमिति भावः ॥ ६ ॥

मन्त्रशक्तेः प्राधान्यं दर्शयन्नाह—( प्रभावेति। ) कोशदण्डबलं हि प्रभु-

प्रभावोत्साहवान् काव्यो जितो देवपुरोधसा ॥ ७ ॥
( असुरान् मोहयामास शुक्ररूपी बृहस्पतिः ।
बृहस्पतिं तथा शुक्रः शशापानुपमद्युतिः )॥
अशिक्षितनयः सिंहो हन्तीभं केवलं बलात् ।

---

इति बहिर्गतमसुरा निजघ्नुः । देवयान्या च तमपश्यन्त्या "तात कचो नायातीति" पृष्टेन शुक्रेण योगचक्षुषा मृतमालोच्य पठित्वा च विद्यां "एहि कचे"-त्याहूतस्तन्मूल एवोपतस्थौ । एवमनेकधा व्यापादितं प्रापितजीवितं चासुरास्तं पुनरेकदा हत्वा पिष्ट्वा च तस्मै मदिरामदविह्वलाय शुक्राय पानेन सह ददुः । पुनश्च तया तथैव पृष्टो निरूपयन् स्वोदरगतं ददर्श । तत्र विद्याबलात्सुसम्पूर्णदेहो पि कुक्षिमविदार्य न निर्गच्छतीति शुक्रस्तत्रस्थायैव तस्मै विद्यां ददौ । भित्वा च कच उदरान्निर्गत्य विद्यया पुनस्तमजीवयदिति, ततो विद्यापहाराज्जितः । पानव्यसनाच्चायं दोष इति ततः प्रभृति उशना द्विजानां मद्यमपेयं भविष्यतीति शापमुत्सृष्टवान् ॥ ७ ॥

अशिक्षितनयः मन्त्रशक्तिविकलः । बलादुत्साहशक्त्या । तत्र सिंहश्च तेषां

---

शक्तिः । शौर्यममर्षो दाक्ष्यं चोत्साहशक्तिः । ताभ्यां सकाशादत्र मन्त्रशक्तिरेव गरीयसीति । अत्रेतिहासं दर्शयति प्रभावोत्साहवान् काव्यः शुक्रो महाप्रभावकोशदण्डचण्डदैत्यपरिवृतो जितो देवपुरोधसा बृहस्पतिना मन्त्रशक्त्येति वाक्यशेषः । देवासुरसङ्ग्रामे मृतानसुरान् शुक्रो मृतसञ्जीविन्या जीवयति । देवा मृता मृता एव । ततश्च प्रभावोत्साहसम्पन्नोऽभूत् । तदतिसन्धानार्थं सुत कचः शिष्यत्वेन प्रणिहितः । तेन च शुक्रस्य प्रियसुता वशीकृता । तदवेत्य च दैत्यैरतिसन्धानभयात् कचो विपक्षः शुक्राय भक्षितुं दत्तः । तत्सुतया देवयान्या प्रार्थितेन काव्येनोदरस्थ एव मृतसञ्जीविन्या पुनर्नवः कृतः । उदरस्थस्यैवोपदिष्टा मृतसञ्जीविनी कचस्य 'विदार्योदरं निर्यातस्त्वं मामनयैव जीवय' इति । तथा कृत्वा गते कचे समरे मृता दैत्या न जीवन्ति । तदनया मन्त्रशक्त्या सुरगुरुणा जितः काव्य इति ॥ ७ ॥

एतदेव समर्थयन्नाह—( अशिक्षितेति । ) अशिक्षितो नयो नीतिशास्त्रं येन स तथोक्तो मन्त्रशक्तिरहित इत्यर्थः । सिंहः केवलोत्साहशक्तिर्हन्ति इभं

तञ्च धीरो नरस्तेषां शतानि मतिमान् जयेत् ॥ ८ ॥
पश्यद्भिर्दूरतोऽपायान् सूपायप्रतिपत्तिभिः।
भवन्तीह फलायैव विद्वद्भिर्मन्त्रिताः क्रियाः ॥ ९ ॥
उपायपूर्वं लिप्सेत कालं वीक्ष्य समुत्पतेत्।
पश्चात्तापाय भवति विक्रमैकरसज्ञता ॥ १० ॥

---

हस्तिनां शतानि जयेदिति सम्बन्धः। मतिमान् मन्त्रशक्त्युपेतः ॥ ८ ॥

तस्मान्मन्त्रशक्त्या निरूपित एव कार्यारम्भः फलायेत्याह—पश्यद्भिरित्यादि। सूपायप्रतिपत्तिभिः—सदुपायानुष्ठानैः ॥ ९ ॥

इदानीं मन्त्रनिर्णयमेव विस्तरतो गुणख्यापनेन स्थिरीकर्तुं विंशतिं श्लोकानाह। उपायपूर्वमिति मन्त्रशक्तिव्यापारं सूचयति। विक्रमैकरसज्ञता उत्साहशक्तितत्परता ॥ १० ॥

---

केवलं बलात् सामर्थ्यात्। तं चेति तमित्थं धीरो नरः तेषां च सिंहानां शतानि अनेकानि मतिमान् कूटकपटादिभिः स्थापयेन्मारयेद्वा ॥ ८ ॥

मन्त्रशक्तेः सामर्थ्यमभिधातुमाह—( पश्यद्भिरिति। ) पश्यद्भिः प्रमाणबलात्प्रत्यक्षीकुर्वद्भिर्दूरतो देशव्यवधानात् कालव्यवधानाद्वा। अपायान्विनिपातान् सूपायप्रतिपत्तिभिरिति शोभनसामाद्युपायैः प्रतिपत्तिर्ज्ञानपूर्विका फलप्राप्तिर्येषां तैः, विद्वद्भिश्चिन्तिताः सुपर्यालोचिता मन्त्राधिकारोक्तक्रिया अनुष्ठानानि फलायैव भवन्ति निश्चयेन फलन्ति इत्यर्थः ॥ ९ ॥

क्रियाचिन्तनमेव दर्शयन्नाह—( उपायेति। ) उपायाः सामप्रदानभेदा येऽत्राभिमताः। दण्डेन तु लाभः सांशयिकः इति भावः। तत्पूर्वं लब्धुमिच्छेत् यानमात्रसाध्ये लाभे कालं यात्रानुरूपं वीक्ष्य निर्णीय समुत्पतेत् यायात्। कस्मादित्याह—विक्रमैकरसज्ञता यस्मात्पश्चात्तापाय भवति। विक्रमः परमोत्साहः शौर्यातिशयः स एवैको रसस्तमेव जानाति न मन्त्रशक्तिरसम्। तद्रसाज्ञानात् देशकालादिनिरपेक्षस्य विपन्ने व्यवसाये विक्रमैकरसज्ञता पश्चात्तापाय भवति, किमित्यहं देशकालबलादिनिरपेक्षो व्यवसित इति। विक्रमोऽपि मन्त्रं सहायः फलतीति भावः ॥ १० ॥

शक्याशक्यपरिच्छेदं कुर्याद् बुद्ध्या प्रसन्नया ।
केवलं दन्तभङ्गाय दन्तिनः शैलताडनम् ॥ ११ ॥
अशक्यारम्भवृत्तीनां कुतः क्लेशादृते फलम् ।
आकाशमास्वादयतः कुतस्तु कवलग्रहः ॥ १२ ॥
नाग्निं पतङ्गवद् गच्छेत् स्पृश्यमेव तु संस्पृशेत् ।
किमन्यत् स्यादृते दाहात् पतङ्गस्याग्निमृच्छतः ॥१३॥

---

बुद्ध्या प्रसन्नया, अन्यथा ह्यपरिच्छेदमोहादशक्येषु प्रवर्तमानस्याङ्गवैकल्यं निष्फलक्लेशता विपत्तिरन्तस्तापश्चेति दोषाः स्युः । तान् दर्शयति केवलमित्यादिना । दन्तभङ्गायेति, गजो हि निर्मलशिलातलेषु स्वबिम्बं दृष्ट्वा प्रतिगजो यामिति मन्यमानो मोहात्तस्मिन् परिणतो दन्तभङ्गमवाप्नोति ॥ ११ ॥

कुतस्तु कवलग्रहः शून्यत्वात् ॥ १२ ॥

स्पृश्यमेव तु संस्पृशेत्—शक्यमेवारभेत ॥ १३ ॥

---

मन्त्रसामान्यमभिधातुमाह—( शक्येति । ) आदावेव शक्यमिद( मिद )मशक्यं चेति परिच्छेदं कुर्यात् बुद्ध्या विशुद्धया अतिनिर्मलया । अशक्यमिति परिच्छिन्ने ( प्रवृत्तौ ) दोषं दर्शयन्नाह—केवलमिति । दन्तिनो दन्ताभ्यां शैलताडनं दन्तभङ्गायैव न पर्वतक्षतये । एवमशक्यारम्भणे क्षतिरनन्तेति । तस्मान्मन्त्रपूर्वं समारभतेति । ततश्च कारणात् यथापि फलाभावेऽपि यथाशास्त्रमेव प्रारब्धव्यम् । ( तेन ) पश्चात्तापो न स्यात् अन्यथा तु स्यादिति भावः ॥ ११ ॥

एतदेव द्रढयितुमाह—( अशक्येति । ) अशक्यारम्भेणैव वृत्तिर्येषां तेषां क्लेशादृते क्लेशं विहाय नान्यत्फलं दृश्यते तद्यथा आकाशमास्वादयतः आकाशस्वादमनुभवामीति यः कवलग्रहमाकाशस्य करोति तस्य कुतः कवलग्रहः आकाशस्यामूर्तत्वात् । एवमशक्यारम्भिणोऽपि कुतः फलमिति ॥ १२ ॥

अशक्यारम्भो न केवलं निष्फलोऽपि तु विनाशाय च भवतीति च दर्शयन्नाह-( नेति । ) पतङ्गवदग्निं न गच्छेत् स्पृशेत् । स्पृश्यमेव तु संस्पृशेत् । यः पतङ्गः पूर्वमेवापरिच्छिद्य अपर्यालोच्य दीपाग्निदर्शनसुखी, स्पर्शं सुन्दरमप्यनुभवामीति बुद्ध्या अग्निं गच्छेत् तस्य पतङ्गस्याग्निमृच्छतः गच्छतः दाहादृते किमन्यत् ? तथा मन्त्ररहितस्यापीति भावः ॥ १३ ॥

मोहात् प्रक्षिपतश्चेष्टां दुःखलभ्येषु वस्तुषु ।
भवन्ति परितापिन्यो व्यक्तं कर्मविपत्तयः ॥ १४ ॥
बुद्ध्या बोध्यानुगतया परीयात् सम्पदः पदम् ।
विशुद्धपदविन्यासः पर्वताग्रमिवोन्नतम् ॥ १५ ॥
दुरारूढं पदं राज्ञां सर्वलोकनमस्कृतम् ।
स्वल्पेनाप्यपचारेण ब्राह्मण्यमिव दुष्यति ॥ १६ ॥

---

चेष्टां प्रक्षिपतः कुर्वतः । परितापिन्यः परितापनशीलाः । कर्मविपत्तयः कर्मव्यापदः ॥ १४ ॥

यस्मादपरिच्छेद्या एते दोषास्तस्माद्बुद्ध्या सर्वं परिच्छिन्द्यादित्याह—बुद्ध्येति । बोध्यानुगतया—यथावस्थितवस्तुविषयया विशुद्धपदविन्यास इति सम्बन्धः । परीयात्संपदः पदमाक्रामेद्राज्यम् ॥ १५ ॥

अविशुद्धे च पदन्यासे तत्स्वल्पेनापि दोषेण दुष्येदित्याह—दुरारूढमित्यादि ॥ १६ ॥

---

( मोहादिति । ) मोहान्मन्त्रस्याज्ञातत्वात् कुर्वतश्चेष्टामुद्योगं दुःखलभ्येषु वस्तुषु भवन्ति परितापिन्यो व्यक्तमित्यादि प्रतीतम् ॥ १४ ॥

सम्यग्भूतेन मन्त्रेण फलावाप्तिरिति दर्शयन्नाह—( बुद्ध्येति । ) बुद्ध्या बोध्यानुगतया, ज्ञानेन ज्ञेयानुयायिना, ज्ञानं साधनं, ज्ञेयं साध्यं, साधनं साध्यानुरूपं यदा भवति तदावश्यंभाविनी सिद्धिरिति भावः । तथा चोक्तम्—प्रत्यक्षादिप्रमाणनयनिर्णीतायां फलसिद्धौ यथासाध्यं साधनविनियोगलक्षणा क्रिया नीतिरन्यथा त्वनीतिः । एवं बुद्धिर्यदा बोध्यानुगता च भवति तदा परीयात् प्राप्नुयात् । सम्पदो लक्ष्म्याः पदमुन्नतमुत्कृष्टं पर्वताग्रमिव विशुद्धपदविन्यासः विशुद्धोऽन्तरायरहितः पदविन्यासो यस्य स यथा पर्वताग्रमुन्नतं परीयादिति ॥ १५ ॥

कस्मान्मन्त्रे महान् यत्न इत्याह—( दुरिति । ) दुःखेन महता क्लेशेनारूढत इति दुरारोहं पदं राजत्वं राज्ञां सर्वलोकैर्नमस्कृतं माहेन्द्रसमानमपाप्यत्वात् । स्वल्पेनाप्यपचारेण मन्त्रभेदादिकेन ब्राह्मण्यमिव सर्वलोकनमस्कृतमपि सन्ध्यावन्दनवञ्चनमात्रेणापि दुष्यति सदोषं भवतीति ॥ १६ ॥

आरब्धानि यथाशास्त्रं कार्याण्यमलबुद्धिभिः ।
वनानीव मनोहारि प्रयच्छन्त्यचिरात् फलम् ॥ १७ ॥
सम्यगारभ्यमाणं हि कर्म यद्यपि निष्फलम् ।
न तत् तथा तापयति यथा मोहसमीहितम् ॥ १८ ॥
यत्तु सम्यगुपक्रान्तं कार्यमेति विपर्ययम् ।
पुमांस्तत्रानुपालभ्यो दैवान्तरितपौरुषः ॥ १९ ॥
प्रयत्नस्तावदास्थेयः फलायामलबुद्धिना ।

---

गुणख्यापनेन मन्त्रनिर्णयं स्थिरीकर्तुमाह—आरब्धानीत्यादिना । वनानीवेति, तान्यपि वृक्षायुर्वेदविहितेन विधिना ज्ञात्वा ऽरब्धानि अचिरात् फलं ददतीति ॥ १७ ॥

ननु सम्यगारब्धमपि कर्म कदाचिन्निष्फलं भवत्येव । ततश्च निर्णयानिर्णययोः को भेद इत्याह—सम्यगित्यादि । न तापयति, तत्र पुरुषस्य अनुपालभ्यत्वात् ॥ १८ ॥

यदाह—यत्तु सम्यगित्यादि । उपक्रान्तमारब्धम् । विपर्ययं नैष्फल्यम् । दैवान्तरितपौरुषः—अलक्षणेन दैवेन बलवता तिरस्कृतपुरुषकार इत्यर्थः । तत्र दैवमेवोपालभ्यमत्र पुमान् ॥ १९ ॥

यदि दैवं प्रधानं किं तर्हि पुरुषकारेणेत्याह—प्रयत्न इत्यादि । अमल-

---

शास्त्रोक्तमन्त्रस्य फलं दर्शयन्नाह—( आरब्धानि । ) यथाशास्त्रं नीतिशास्त्रानतिक्रमेण । कार्याणि पृथिवीलाभपालनादीनि । शेषं प्रतीतम् ॥ १७ ॥

अथ शास्त्रसमारब्धं निष्फलं विमोहकृतं च विशिष्टफलं तयोर्विशेषमाह—( सम्यगिति । ) सम्यक् नीतिशास्त्रानतिक्रमेण । मोहः अज्ञानं तेन समीक्षितं कृतम् । तापयति तापं जनयति । शेषं सुगमम् ॥ १८ ॥

( यादति । ) तथा एतत्सुगममुक्तं च दैवपुरुषकारयोरानुकूल्ये फलसिद्धिरन्यथा नेति । तथा च—

क्षेत्रे सुकृष्टे पृथ्व्यां च सुषिक्तायां प्ररोहति ।
दैवं पुरुषकारं च कौटिल्यो मन्यते द्वयम् ॥ इति ॥ १९ ॥

यद्यपि दैवपुरुषकारयोरानुकूल्ये फलसिद्धिस्तथापि पुरुषकार एव कर्तव्य इति दर्शयन्नाह ( प्रयत्न इति । ) अनुकूलं दैवं चेत्सफलत्वं भवति । प्रातिकूल्ये

अथर्ववेदनिपुणः शेषं दैवं समाश्रयेत् ॥ २० ॥
आत्मानं च परं चैव वीक्ष्य धीरः समुत्पतेत् ।
एतदेव हि विज्ञानं यदात्मपरवेदनम् ॥ २१ ॥
निष्फलं क्लेशबहुलं सन्दिग्धफलमेव च ।
न कर्म कुर्यान्मतिमान् महावैरानुबन्धि च ॥ २२ ॥
तदात्वायतिसंशुद्धं सुविशुद्धक्रमागतम् ।
हितानुबन्धि च सदा कर्म सद्भिः प्रशस्यते ॥ २३ ॥

---

बुद्धिनेति, विचारपूर्वकः पुरुषकारः कार्य इति दर्शयति । अथर्ववेदनिपुणः अ-काण्डविनाशकुशलः । दैवं समाश्रयेत् सहकारितया ॥ २० ॥

उत्साहवतोऽपि विक्रमो विचारपूर्वक एव फलवानिति दर्शयितुमाह—आत्मानं चेत्यादि । एतदेव हि विज्ञानं बुद्धेः कौशलम् , यत्प्रथममेवात्मपरवेदनम-भ्युच्चयापचयाभ्याम् ॥ २१ ॥

उपायपूर्वं लिप्सेतेत्युक्तम् । कीदृशं पुनस्तत्कर्म लिप्सेत त्यजेच्चेति प्रस-ङ्गादाह—निष्फलमित्यादिना ॥ २२ ॥

सुविशुद्धक्रमागतं—देशकालोपेतत्वात् ॥ २३ ॥

---

वैफल्यम् । तच्च दैवं प्रतिलोमं यदा भवति तदा । अपर्वाणि अस्थाने एव( भेदो ) भङ्गः फलविनाशः, तत्र निपुणं कुशलमिति ॥ २० ॥

मन्त्रतत्त्वमभिधातुमाह—( आत्मानमिति । ) आत्मानं शक्तित्रयेणात्युपचितं देशकालबलमनुकूलशकुननिमित्तग्रहं वीक्ष्य निर्णीय, परस्मै तद्विपरीतं निरूप्य, उत्पतेत् यात्रां कुर्यात् । धीरो धैर्यसम्पन्नो विजिगीषुः । एतदेव हि विज्ञानं मन्त्रे यदात्मपरवेदनम् । स्वपरबलाबलपरिज्ञानमेव मन्त्रस्य तत्त्वम् ॥ २१ ॥

निषिद्धानुष्ठानमभिधातुमाह-( निष्फलमिति । ) इति प्रतीतम् ॥ २२ ॥

( तदात्वेति । ) तदात्वं वर्तमानकालः । आयतिरागामिकालः । एतयो-स्तदात्वायत्योर्यन्निर्दोषं तत्तदात्वायतिसंशुद्धमित्युच्यते । तथा शुचिना शुद्धेन क्रमेण मार्गेणागतं रक्षणादि, यथा भूतरक्षणादि क्षत्रियस्य । हितमुभयलोकहितमनुबध्नाति च यत्तत् । सद्भिः सदा कर्म प्रशस्यते ॥ २३ ॥

हितानुबन्धि तज्जातु गच्छेद् येन न वाच्यताम् ।
तस्मिन् कर्मणि सज्जेत तदात्वकटुकेऽपि हि ॥ २४ ॥
बुद्धयैवोपक्रमः श्रेयान् फलनिष्पत्तये सदा ।
क्वचित् कल्याणमित्रस्य दृश्यते सिंहवृत्तिता ॥ २५ ॥
सहसोत्पत्य दुष्टेभ्यो दुष्करं सम्पदार्जनम् ।
उपायेन पदं मूर्ध्नि न्यस्यते मत्तहस्तिनः ॥ २६ ॥
न किञ्चित् क्वचिदस्तीह वस्त्वसाध्यं विपश्चिताम् ।
अयोऽभेद्यमुपायेन द्रवतामुपनीयते ॥ २७ ॥

---

तदात्वकटुकेऽपि आरम्भकाले समुद्वेजनेऽपि तिक्तौषधपानवत् ॥ २४ ॥

बुद्धयैवोपक्रमः श्रेयान्, यथोक्तेषु कर्मसु । क्वचिदिति भीते । तत्रापि कल्याणमित्रस्य—सुसहायस्येत्यर्थः ॥ २५ ॥

सहसोपक्रमे चार्थसिद्धिर्दुष्करैवेत्याह—सहसोत्पत्येति । उपायेन बुद्धिपूर्वकेण ॥ २६ ॥

न किञ्चित्क्वचिदस्तीत्यादि, उपायस्याभिव्यापितां दर्शयति । अयो द्रवतां नीयत इति सम्बन्धः । अभेद्यमपि सत् ॥ २७ ॥

---

एतदेव समर्थयन्नाह—( हितेति । ) सुगमं सर्वम् । तदात्वे वर्तमाने कटुकेऽपि सौख्यरहितेऽपि । हिं स्फुटम् ॥ २४ ॥

(बुद्धयेति ।) बुद्धयैव मन्त्रयुद्धेनैव प्रारम्भः श्रेयान् । कल्याणानि हितविधायीनि मित्रगुणसम्पन्नानि मित्राणि यस्य तस्यैव शस्यते । सिंहवृत्तिता—व्यायामवृत्तिता—व्यायामयुद्धेनोपक्रमः फलनिष्पत्तये नान्यथा ॥ २५ ॥

एतदेवं स्पष्टयन्नाह—( सहसेति । ) ( सहसोत्पत्य दुष्टेभ्यो ) यातव्येभ्यः सकाशात् , दुष्करं कर्तुं न शक्यं, सम्पदर्जनं श्रियः समुपार्जनं दुष्टत्वात्तेषाम् । अत्र दृष्टान्तः—उपायेन शास्त्रोक्तेनोपदेशेन मत्तदन्तिनो मूर्ध्नि पदं न्यस्यते । न क्षान्त्यादिकर्मणा न पुनः सहसोत्पत्य मत्तदन्तिनो मूर्ध्नि पदन्यासः कर्तुं शक्यते । उपायाश्च मन्त्रेण निर्णीयन्त इति भावः ॥ २६ ॥

विपश्चितां तु नियमेन फलोपधानमाह—( नेति । ) विपश्चितां मन्त्राधिकारपण्डितानां किञ्चिदपि दुर्लभतरमपि न क्वचिदपि देशेकालेऽपि असाध्यमस्तीह । अयो लोहकनकादि अभेद्यमपि उपायेन तापादिकर्मणा द्रवतामुपनीयते । तद्वदसाध्यमपि विपश्चिता साध्यते मन्त्रेणैवेति भावः ॥ २७ ॥

वाह्यमानमयःपिण्डं महच्चापि न कृन्तति।
तदल्पमपि धारावद् भवतीप्सितसिद्धये॥ २८॥
लोकप्रसिद्धमेवैतद् वारि वह्नेर्नियामकम्।
उपायोपगृहीतेन तत् तेनैव विशोष्यते॥ २९॥
अविज्ञातस्य विज्ञानं विज्ञातस्य विनिश्चयः।

---

वाह्यमानं—व्यापार्यमाणम्। तत्रापि स्वल्पमपि च्छेद्यम्। धारावद्धारोपेतम्। ईप्सितसिद्धये—छिंदयारिपीडयैव॥ २८॥

उपायोपगृहीतेनेति। वह्निनाधस्तात्प्रतप्यमानायां स्थाल्यां तद्गतं वारि शोष्यते। तस्मान्मन्त्रनिर्णयः कार्य इति स्थिरीकृतम्॥ २९॥

इदानीं मन्त्रस्य ज्ञानरक्षाप्रकाशनप्रशस्ताङ्गव्यापारोत्पत्तिक्रमशुद्धिसिद्ध्यावर्तनधारणप्रदेशानष्टादशभिः श्लोकैराह—अविज्ञातस्येत्यादि। मन्त्रनिर्णयो—मन्त्रज्ञानम्। तच्च मन्त्रिभिः सह मन्त्रयमाणस्य नैकाकिनः। तथा हि देशकालान्तरितत्वादसाक्षात्कृतस्य विज्ञानं मन्त्रिभ्य एव। मन्त्रिसाक्षात्कृतस्यापि तत्त्वाभास निश्चयभूयस्त्वे निश्चयो बुद्ध्यन्तरात्। अर्धाधस्य दशया ( शायां ? ) यातव्ययोः कं प्रति यायादित्यादि सन्देहे तच्छेदनं मन्त्र्युपदशात्। शेषदर्शनम्—एक-

---

( वाह्यमानमिति। लोहशकलं वाह्यमानं छेदनक्रियां कर्तुं, उपायरहितमण्वपि न निकृन्तति तदल्पमपि लोहखण्डं धारावत् तीक्ष्णं सत् कृतधारं शराग्रस्थितं, भवति ईप्सितसिद्धये शत्रुविनाशाय। स्यादेवमुपायैः कार्यप्रसिद्धिरिति॥ २८॥

( लोक इति। ) नियामकमुपशमकारकम्। उपायोपगृहीतेन तेनैव वह्निना विशोष्यते स्थाल्यादिसंस्थितमधः प्रज्वालितेन। एवमत्र विनीतोपायानामसाध्यं किमपि नास्तीति भावः॥ २९॥

[ विषं सुविषमाहारं केवलं मरणात्मकम्।
तदेव द्रव्यसंयोगादौषधाय प्रकल्पते॥ ]

मन्त्रिकर्माभिधातुमाह—( अविज्ञातस्येति। ) अविज्ञातस्य विधेयकार्यदेर्विज्ञानम्। देशकालव्यवहितमपि कार्यं मन्त्रिणः पश्यन्ति। पटुतरं शास्त्रज्ञानं चक्षुस्तेषामिति। विज्ञातस्य राज्ञां मन्त्रिमतसंवादात् निश्चयो निर्णयो भवति। अर्थ-

अर्थद्वैधस्य सन्देहच्छेदनं शेषदर्शनम् ॥ ३० ॥
विदुषां शासने तिष्ठन् नावमन्येत कञ्चन ।
सर्वस्यैवोपशृणुयात् सुभाषितजिघृक्षया ॥ ३१ ॥
मदोद्वृत्तः क्रियामूढो योऽतिक्रामति मन्त्रिणम् ।
अचिरात् तं वृथामन्त्रमतिक्रामन्ति विद्विषः ॥ ३२ ॥

---

देशदृष्टस्येति शेषः । सन्धिविग्रहयोः सन्धिः श्रेयानिति शेषोपलब्धिः । एतच्चतुष्टयरूपं मन्त्रिसाध्यमिति तेषां शृणुयात् ॥ ३ ॥

यदाह–विदुषामिति । शासनमुपदेशः। सर्वस्याशास्त्रज्ञानस्यापि । सुभाषितजिघृक्षया–अर्थवद्वाक्यं ग्रहीतुमिच्छया ॥ ३१ ॥

अवमानने दोषमाह–मदोद्वृत्त इति । अहमेव ज्ञानवानिति मदावलिप्तः। क्रियामूढः–प्रयोगानाभिज्ञः । वृथामन्त्रं–निष्फलमन्त्रम् ॥ ३२ ॥

---

द्वैःस्व ' एवं वा कार्यं किमेवं वेति द्वैधस्य छेदनं संशयविच्छित्तिः । शेषदर्शनमित्येकदेशदृष्टस्य शेषोपलब्धिः । मन्त्रिकर्मेति वाक्यशेषः । तथा च कौटिल्यः– " अनुपलब्धस्य ज्ञानमुपलब्धस्य निश्चयोऽनिश्चितस्य बलाधानमर्थद्वैधस्य संशयच्छेदनमेकदेशदृष्टस्य शेषो लब्धिरिति । " मन्त्रिसाध्यमेतदिति त्रिभिश्चतुर्भिर्वा मन्त्रिभिर्मन्त्रयेतेति भावः ॥ ३० ॥

( विदुषामिति । ) सुगममेतत् । शृणुयाद्वचनमिति तथा चोक्तम्–

" न कश्चिदवमन्येत सर्वस्य शृणुयान्मतम् ।
बालस्याप्यर्थवद्वाक्यमुपजीवति पण्डितः ॥ " इति ॥ ३१ ॥

[ अलब्धलाभो लब्धार्थग्रसनं तस्य रक्षणम् ।
इयत्यो विजिगीषूणां वीर्यव्यायामभूमयः ॥
शोभा हि कृतकृत्यस्य राज्ञो भोगविभूतयः ।
अप्राप्तविजिगीषोश्च ता एव हि विडम्बनाः ॥
( अलब्धेति । ) ( शोभेति । ) प्रतीतम् ॥ ]

मन्त्रिवचनातिक्रमश्च दोषावह इति दर्शयन्नाह–( मदोद्धत इति । ) अहमेव सर्वं जानामीति ज्ञानमदेनोद्धतः । क्रियामूढः किङ्कर्तव्यतामूढः । योऽतिक्रामति मन्त्रिणं तदुपदिष्टस्याकरणात् अचिरात् तं वृथामन्त्रं प्रभुं मन्त्राभासविप्रलब्धमतिक्रामन्ति अतीत्यातिसन्धाय तद्राज्यमाक्रम्य गृह्णन्तीत्यर्थः ॥ ३२ ॥

संरक्षेन्मन्त्रबीजं हि तद्बीजं हि महीभृताम् ।
तस्मिन् भिन्ने ध्रुवो भेदो गुप्ते गुप्तिरनुत्तमा ॥ ३३ ॥
सिंहवच्चेष्टमानस्य काले कर्म विपश्चितः ।
क्रियमाणं स्वकुल्यास्तु विद्युरस्य परे कृतम् ॥ ३४ ॥
अपश्चात्तापकृत् सम्यगनुबन्धिफलप्रदः ।
अदीर्घकालोऽभीष्टश्च प्रशस्तो मन्त्र उच्यते ॥ ३५ ॥

---

रक्षितो मन्त्रः फलवानित्याह—संरक्षेदिति । निर्णयकालात्प्रभृति यावत्कर्मारम्भकालम् । मन्त्र एव बीजं, ततो राज्यफलप्रसवात् । यदाह—तद्बीजमिति । भेदो विनाशः । अनुत्तमा श्रेयसी ॥ ३३ ॥

कदा तर्हि मन्त्र प्रकटीभवतीत्याह—सिंहवदित्यादि सर्वकृतप्रतिविधानत्वात्सिंहस्येव निश्शङ्कं चेष्टमानस्य, काले प्रागवधारिते, क्रियमाणं स्वकुल्या विद्युः न तु चिकीर्षितम् । परे कृतं—समाप्तं विद्युः । अनेन क्रियानुमेयतां मन्त्रस्य दर्शयति ॥ ३४ ॥

प्रशस्ते च मन्त्रे यत्नः कार्य इति दर्शयितुमाह—अपश्चात्तापेत्यादि । अदीर्घकालः—चिरेण कालेन यो न निष्पद्यते । अभीष्टः ईप्सितार्थसाधनत्वात् ॥ ३५ ॥

---

मन्त्रभेदनिवारणार्थमाह—( संरक्षेदिति । ) मन्त्रबीजं विधेयं कार्यं गोपनीयम् । सम्यग् रक्षेत् भेदद्वाराणामकरणात् । तन्मन्त्रबीजं ( बीजं महीभुजां ) तस्मात्सुरक्षितान्महीभुजः सम्भवन्तीति । तस्मिन् मन्त्रबीजे भिन्ने ध्रुवं निश्चयेन भेदो राज्ञ एव विनाशो गुप्ते तु गुप्तिरनुत्तमा अत्युत्तमेत्यर्थः ॥ ३३ ॥

मन्त्रगुप्तिं दर्शयन्नाह ( सिंहवदिति । ) सिंहो हि सङ्कुचितसर्वावयवो वक्रक्रमः परैरलक्षितचेष्टो मार्जारवदकस्मात् ग्रसत इत्येवं सिंहवत् चेष्टमानस्य विजिगीषोः, काले चेष्टानुकूले विपश्चितो नीतिपण्डितस्य कर्मानुष्ठानमेवं नाम गुप्ततरं येन क्रियमाणं कुल्या बन्धवो विदुर्जानीयुः । परे अन्ये तु कृतं निष्पन्नं जानीयुरिति ॥ ३४ ॥

गुणवन्तं मन्त्रमभिधातुमाह—( अपश्चात्तापकृदिति । ) यो मन्त्रः समाप्तिगतः पश्चात्तापं न करोति । अनुबन्धाः फलान्तराणि तानि विद्यन्ते यस्य मुख्यफलस्य तदनुबन्धिफलं तद्ददाति । योऽदीर्घकालो भेदाभावात् । अभीष्टश्च लोकद्याविरोधात् । प्रशस्यः सद्भिर्मन्त्र इष्यते इति ॥ ३५ ॥

सहायाः साधनोपाया विभागो देशकालयोः ।
विपत्तेश्च प्रतीकारः सिद्धिः पञ्चाङ्ग इष्यते ॥ ३६ ॥
अनुतिष्ठेत् समारब्धमनारब्धं प्रयोजयेत् ।
अनुष्ठितञ्चं संवृत्त्य विशेषेणोपपादयेत् ॥ ३७ ॥

साध्य वर्तित्वा

प्रशस्तः स्वाङ्गसाफल्याद्भवतीति तान्यङ्गान्याह—सहाया इत्यादि । अत्र दुर्गकर्मणि सहाया मुख्याः क्षुद्राश्च पुरुषाः । साधनोपायाः दुर्गस्यारम्भे प्रत्युपायाः कुद्दालकुठारकरपत्रादयः । विभागो देशकालयोरिति । तत्र जनपदान्ते जनपदमध्ये चेति देशविशेषः । वर्षासु काष्ठादि कर्म, ग्रीष्मे हेमन्ते चेष्टकादिकर्मेति कालविभागः । विपत्तेश्चेति आरब्धे दुर्गकर्मणि दैव्या मानुष्याश्चोत्पन्नाया विपदः आथर्वभिरुपायैः सामादिभिश्च प्रतीकारः । सिद्धिरिति कार्यस्येति शेषः । ( तत्र मन्त्रविषयान्ते निष्पन्नदुर्गमविषह्यमाश्रितः परकर्माण्यपहनिष्यामि जनपदमध्ये च समुदयस्थानं भवतीत्यादि ) पञ्चाङ्ग इष्यते मन्त्र इत्येव । उक्तञ्च " कर्मणामारम्भोपायः पुरुषद्रव्यसम्पद्देशकालविभागो विनिपातप्रतीकारः कार्यसिद्धिश्चेति पञ्चाङ्गो मन्त्रः ," इति । ( कौ० अ० १–१५–११ ) ॥ ३६ ॥

मन्त्रव्यापारं दर्शयितुमाह—अनुतिष्ठेत्—समापयेत् । प्रयोजयेदारम्भयेत् । संवृत्त्येति, इदमनेन विशिष्टं भवतीति कुशलैः सम्भा ( वा )द्य ॥ ३७ ॥

मन्त्राङ्गान्यभिधातुमाह—( सहाया इति । ) पुरुषद्रव्यसम्पदाख्यमङ्गम् । साधनोपाया इति । कर्मणां साधने ये उपायाः कर्मणामारम्भोपायाख्यमङ्गम् । विभागो देशकालयोरस्मिन्देशेऽस्मिन्काले सिध्यतीति तृतीयमङ्गम् । विपत्तेर्विघ्नानां प्रतीकारो नाम चतुर्थमङ्गम् । सिद्धिः कार्यस्य पञ्चममङ्गम् । एवं मन्त्रः पञ्चाङ्ग इति । तथा च कौटिल्यः—" कर्मणामारम्भोपायः पुरुषद्रव्यसम्पद् देशकालविभागो विनिपातप्रतीकारः कार्यसिद्धिश्चेति पञ्चाङ्गो मन्त्रः । " ॥ ३६ ॥

मन्त्रिभिर्विधेयमाह—( अनुतिष्ठेदिति । ) यदारब्धं दुर्गसाधनादिकं तदनुतिष्ठेत् भूयोभूयः प्रेरयेत् यथा सुसमाप्तिं याति । अनारब्धं च प्रेरयेत् यथा प्रारभ्यते । अनुष्ठितं च निष्पन्नं च सद्वृत्त्या शोभनवृत्तिकरणेन विशेषेण यथा न चलति तथोपपादयेत् निष्पादयेत् । तथा च कौटिल्यः " अकृतारम्भमारब्धानुष्ठानमनुष्ठितविशेषं नियोगसम्पदं च कर्मणां कुर्युः । " मन्त्रिण इत्यनुवर्तते ॥ ३७ ॥

प्रचारयेन्मन्त्रविदः कार्यद्वारेषु नैकधा।
यत्र तच्चेतसां साम्यं तेषु साधु समुत्पतेत् ॥ ३८ ॥
यत्र मन्त्रिमनस्साम्यं यत्र चेतो न शङ्कते।
यत्र सन्तो न निन्दन्ति तत् परीयाच्चिकीर्षितम् ॥३९॥
धृतेऽपि मन्त्रे मन्त्रज्ञैः स्वयं भूयो विचारयेत्।

---

मन्त्रोत्पत्तिक्रममाह-प्रचारयेन्मन्त्रविद इति। इदं कार्यमुपस्थितं, तत्र किमाहुर्भवन्त इति कार्योपायेषु प्रवर्तयेत्। मन्त्रशुद्धिमाह-यत्रेति मन्त्रे। तच्चेतसां साम्यं—मन्त्रिणामेकाभिप्रायता। तेषु समुत्पतेत् तेषु कार्येषु प्रवर्तेत ॥३८॥

यथा मतिसाम्यं शुद्धिप्रवृत्त्योर्निबन्धनं (तथा) शङ्कानिन्दा(भ्युपगमा?)भ्यामशुद्धिर्निवृत्तिश्चेत्याह—यत्रेत्यादि। चिकीर्षितमिति कार्यद्वारेण मन्त्रशुद्धिरुक्ता ॥ ३९ ॥

इदमपरं शुद्धिकारणं यत्स्वयमेव पुनर्विमर्शनमित्याह—धृतेऽपीत्यादि। इदमेव कर्तव्यमित्यवधारितेऽपि तथा वर्तेत, यथा स्वार्थं न पीडयेदिति। इदमुक्तं भवति—न हि मन्त्रिमतेनैव तज्ज्ञो वर्तेत स्वार्थतात्पर्याद्धचन्यथाप्युपदिशेयु-

---

(प्रचारयेदिति।) मन्त्रिदूतगूढपुरुषांश्च (तथा) भवन्ति। मन्त्रितो मन्त्रो मन्त्रिदूतगूढपुरुषेषु यथा समर्प्यत इति तान्मन्त्रविदः त्रिविधानपि यथासम्भवं, कार्यद्वारेषु—पृथिवीपालनादिकार्यमायाति यैर्द्वारैः शत्रुमित्रमध्यमोदासीनस्वरूपैस्तेषु, सञ्चारयेत् प्रणिदध्यादनेकशः। यत्र तच्चेतसां मन्त्रिदूतगूढपुरुषचित्तानामैकमत्यं साधु संश्लिष्ट यथा भवति तथा तेन कार्यद्वारेण यानादिगुणमनुष्ठानं समुत्पतेत् आचरेदिति ॥ ३८ ॥

एतदेव द्रढयितुमाह—(यत्रेति।) तथा यस्मिन् क्रियमाणे मन्त्रिमनस्साम्यम्। यत्र चेतो न शङ्कते कर्तुः। शारीराण्यपि निमित्तानि शुभान्युदयन्ति बाहुशीर्षाक्षिगुदाधरादीनि। तत्र मनःशङ्कायां मध्यमा कार्यसिद्धिरिति शङ्कारहिते मनसि कार्यं विधेयम्। यच्च चिकीर्षितं कर्तुमीप्सितं सन्तो न निन्दन्ति। तत्परीयात् गच्छेत् कर्तुमिति शेषः ॥ ३९ ॥

उपधाशोधितेषु प्रणिहितगूढपुरुषेष्वपि मन्त्र्यादिषु व्यभिचारः सम्भवतीति सर्वथा न विश्वसनीयामिति दर्शयन्नाह—(धृत इति।) धृतेऽपि मन्त्रे मन्त्रज्ञैर्मन्त्राधिकृतैर्निर्णीय धृते-प्यवधारितेऽपि मन्त्रे स्वयं विजिगीषुर्भूयो विचारयेत्। तत्र (था?) मन्त्रज्ञो विजिगीषुर्वर्तेत यथा स्वार्थं न पीडयेत्। दीर्घविग्रहे स्वार्थपीडा

तथा वर्त्तेत मन्त्रज्ञो यथा स्वार्थं न पीडयेत् ॥ ४० ॥
मन्त्रिणः स्वार्थतात्पर्याद् दीर्घमिच्छन्ति विग्रहम् ।
तेषाञ्च भोग्यतामेति दीर्घकार्याकुलो नृपः ॥ ४१ ॥
मनःप्रसादः श्रद्धा च तथा करणपाटवम् ।
सहायोत्थानसम्पच्च कर्मणां सिद्धिलक्षणम् ॥ ४२ ॥
लघूत्थानान्यविघ्नानि सम्भवत्साधनानि च ।
कथयन्ति पुनः सिद्धिं करणान्येव कर्मणाम् ॥ ४३ ॥

---

रिति ॥ ४० ॥

यदाह- मन्त्रिण इत्यादि । दीर्घकार्याकुलः--दीर्घविग्रहादिकार्यव्याकुलः ॥ ४१ ॥

मन्त्रसिद्धिमूलान्याह--मनःप्रसाद इत्यादि । संशयाभावान्मनसो वैमल्यम् । श्रद्धा साध्येषु । करणपाटवं--बुद्धिकर्मेन्द्रियाणां स्वविषयव्यापारसामर्थ्यम् । सहायसम्पत्- सत्वप्रतिज्ञादियोगो बाहुल्यञ्च । उत्थानसम्पल्लघूत्थायिता । कर्मणामारभ्यमाणानाम् । तत्कार्यसिद्धिरेव मन्त्रसिद्धिरिति मन्त्राणामिति नोक्तम् ॥ ४२ ॥

लघूत्थानानि करणानीति सम्बन्धः । साध्यस्य यान्युपादानसाधनानि तेषु विजिगीषोर्लघून्युत्थानानीति सप्तम्यर्थे बहुव्रीहिः । सम्भवत्साधनानि सम्भवत्सहकारिकारणानि ॥ ४३ ॥

---

सम्भवति । तथा वर्त्तेतेति यथा स्वार्थपीडा न भवति ॥ ४० ॥

एतदेव स्पष्टयन्नाह--( मन्त्रिण इति । ) व्याख्या सुगमा ॥ ४१ ॥

मन्त्रनिर्णीतकार्यस्य सिद्धिलक्षणान्यभिधातुमाह--( मन इति । ) मनःप्रसन्नतां कालुष्याभावः । श्रद्धा च कार्यसिद्धावत्याग्रहः । तथा करणानामिन्द्रियाणामेकादशानां पटुत्वम् । सहायोत्थानसम्पच्च कर्मणां सिद्धिलक्षणम् । एभिर्लिङ्गैः सिद्धिरवश्यम्भाविनीति लक्ष्यत इति ॥ ४२ ॥

एतदेव समर्थयन्नाह-( लघ्विति । ) लघु शीघ्रमेवोत्थानमुद्योगो येषाम् । अविघ्नानि विघ्नरहितानि । सम्भवत्साधनानि सम्भवन्ति साधनानि सम्पत्सामग्रीकाणि । करणानि कार्याणामुत्पत्तिनिमित्तानि । पुरोऽग्रतो भाविनीं सिद्धिं कथयन्ति ॥ ४३ ॥

आवर्तयेन्मुहुर्मन्त्रं धारयेच्च प्रयत्नतः ।
अप्रयत्नधृतो मन्त्रः प्रचलन्नग्निवद् दहेत् ॥ ४४ ॥
आप्ताप्तसन्ततेर्मन्त्रं संरक्षेत् तत्परस्तु सन् ।
अरक्ष्यमाणं मन्त्रं हि भिनत्त्याप्तपरम्परा ॥ ४५ ॥
मदः प्रमादः कामश्च सुप्तप्रलपितानि च ।

---

धृतस्य मन्त्रस्याप्रयोगकालमावर्तनं धारणञ्च कुर्यादित्याह—आवर्तयेदिति अविस्मरणार्थम् । धारयेत् यथाधिष्ठानान्तरं न याति । प्रचलन्नधिष्ठानान्तरं गच्छन् ॥ ४४ ॥

संरक्षेन्मन्त्रबीजमित्युक्तम् , तत्कुतो रक्षेदित्याह—आप्ताप्तसन्ततेरिति । कथमिदमेवं स्यादिति निर्णयाय विजिगीषुराप्तं मन्त्रिणं पृच्छति, सोऽपि वृद्धं तदुपजीविष्वन्यं, सोऽप्यन्यमित्याप्तपरम्परा भिनत्ति । ततः संरक्षेन्मन्त्रबीजमित्युक्तम् ॥ ४५ ॥

तथाऽन्येऽपि मन्त्रभिद इत्याह—मद इत्यादि । सुरापानादिजनितो मदः । प्रमादः कार्यान्तरप्रसङ्गात् । कामः स्त्रीषु विश्वासहेतुः । सुप्तप्रलपितानि स्वप्नावस्थायाम् । प्रच्छन्नाः स्तम्भादितिरस्कृताः । कामिन्यः पार्श्ववर्तिन्यः । अवमताः

---

मन्त्रे निर्णयमाह—( आवर्तयेदिति । ) प्रयत्नवान् भेदकारणविरोधादिति । प्रचलन्नग्निवद्दहेत् । यथा अग्निरग्न्यगारात् चलितः अग्न्यगारादिकं दग्ध्वा पुरमपि दहति तथा मन्त्रोऽपि । तथा च कौटिल्यः “ मन्त्रभेदो ह्ययोगक्षेमावहो राज्ञस्तथायुक्तपुरुषाणां चे ”ति ॥ ४४ ॥

मन्त्ररक्षाप्रकारमाह—( आप्तेति । ) आप्ता मन्त्रिप्रभृतयः । तेषामप्याप्ता भवन्ति । तेषामपि । एवमाप्तपरम्परा भवति । तद्यनाप्तः कैस्तत्सन्ततिरस्तीति ! तस्या मन्त्रद्वारनिरोधो न शक्यते कर्तुमिति, तत्परस्तु सन् संरक्षेत् । अरक्ष्यमाणं हि मन्त्रं भिनत्त्याप्तपरम्परा । तथा च कौटिल्यः—“ मन्त्रिणामपि हि मन्त्रिणो भवन्ति । तेषां मन्त्रिपरम्परा मन्त्रं भिनत्ति ” इति ॥ ४५ ॥

अन्यानपि मन्त्रभेदद्वाराण्यभिधातुमाह—( मद इति । ) मदः सुराजनितः । तत्परवशो विस्मृत्य मन्त्रभेदं करोति । प्रमादः कार्यान्तरासक्तिस्तेनापि । कोपोऽप्यतिप्रवृद्धो मन्त्ररक्षाविस्मरणात् भेदकः । सुप्तप्रलपितानि तथैव भिन्दन्ति प्रकाशयन्ति मन्त्रम् । प्रच्छन्नाः कुड्यादितिरोहिताः कामिन्यो वशीकृतभर्तृकाः

प्रमादस्य प्रमादोऽनव धानतेत्यर्थः।

भिन्दन्ति मन्त्रं प्रच्छन्नाः कामिन्योऽवमतास्तथा ॥४६॥
निस्तम्भे निर्गवाक्षे च निष्कुडयान्तरसंश्रये ।
प्रासादाग्रे ह्यरण्ये वा मन्त्रयेदविभावितः ॥ ४७ ॥
द्वादशेति मनुः प्राह षोडशेति बृहस्पतिः ।

' दिच्छा ? ) मूकसमानाः । ४६ ।

मन्त्रप्रदेशमाह—निस्तम्भ इत्यादि । निष्कुडयान्तरसंश्रय इति । मध्ये कुडयमवस्थाप्य यदवस्थानं क्रियते तत्कुडयान्तरसंश्रयं, भित्त्यन्तरेति वा पाठः। तेन रहिते । अविभावितः अनुपलक्षितः । प्राज्ञा हि दूरादेवौष्ठपतनादिभिरभिप्रायं विन्दन्ति ॥ ४७ ॥

यतो मन्त्रः ानं तन्मन्त्रिमण्डल । त्र वृत्तं चतुर्भिः श्लोकैराह—द्वादशे-त्यादि । उत्तरमन्त्रिव्यतिरेकेणेयं चिन्ता । तत्रोत्तरमन्त्रिणस्त्रयश्चत्वारो वा कर्तव्याः । तद्व्यतिरेकेणान्ये द्वादशराजकेतिकर्तव्यतापरिज्ञानाय, द्वादश मन्त्रिणः स्युः । षोडशेति । एते चान्ये चारिविजिगीषुमध्यमोदासीनेषु चतुर्षु मण्डलेषु

तच्छुतमन्त्राः । अवमताः अवज्ञाताः किमेतेऽपि जानन्तीति शुकसारिकावालबधिराद्याः । तथा च कौटिल्यः " श्रूयते हि शुकसारिकादिभिर्भिन्नो मन्त्रः पशुभिरन्यैश्च तिर्यग्योनिभिरवमतैरि ”ति । अपि च कौटिल्यः—" तस्य च संवरणमा ुक्पुरुषरक्षणमाकार्यकालात् । तेषां हि प्रमादमदसुप्तप्रलापकामादिभिरुत्सेक ” इति ॥ ४६ ॥

प्रच्छन्नोऽवमतो वा मन्त्रं भिनत्तीति मन्त्रप्रदेशमभिधातुमाह—( निःस्तम्भ इति । ) स्तम्भरहिते भित्तिष्वेवोत्थापितोर्ध्वशरणत्वात् । निर्गवाक्षे वातायनरहिते शब्दानां बहिरनिःसरणार्थम् । निर्भित्त्यन्तरसंश्रये भित्त्यन्तरेषु प्रच्छन्नश्रोतॄणां संश्रयो यत्र नास्ति । प्रासादस्योपरि तथाविधे एवारण्ये वा निर्जने वा मन्त्रयेतान्यैरप्यविभावितोऽनवलोकितः । तथा च कौटिल्यः—" मन्त्रपूर्वाः सर्वारम्भास्तस्योद्देशः संवृतः कथानामनिस्रावी पक्षिभिरप्यनालोक्यः स्यादि ”ति ॥ ४७ ॥

[ निश्छिद्रे निर्जलेऽशङ्के अनिरन्तरसङ्गमे ।
निर्वातेऽसुषिरस्तम्भे मन्त्रयेत गृहे तथा ॥
( निश्छिद्र इति । ) इति प्रतीतम् ॥ ]

त्रिचतुःसङ्ख्यमहामन्त्रिव्यतिरिक्तं मन्त्रिमण्डलमभिधातुमाह–(द्वादशेति । )

उशना विंशतिरिति मन्त्रिणां मन्त्रिमण्डलम् ॥ ४८ ॥
यथासम्भवमित्यन्ये तत् प्रविश्य यथाविधि ।
मन्त्रयेताहितमनाः कार्यं बुद्धिविवृद्धये ॥ ४९ ॥
एकैकेनापि कार्याणि प्रविचार्य पुनः पुनः ।

---

द्रव्यप्रकृतिपञ्चकस्वरूपविदश्चत्वार इति । विंशतिरिति । दशराजके तत्स्वरूपविदो दश द्रव्यप्रकृतिविशेषविदश्च दशेति ॥ ४८ ॥

यथासम्भवमिति । अन्ये कौटिलीयाः । यस्य यावन्तो गुरुलघुकार्यापेक्षया सम्भवन्ति तस्य तावन्तः स्युः । तस्यैव कार्यसामर्थ्याद्धि पुरुषसामर्थ्यं प्रकल्प्यते तत्र वृत्तमाह--तदित्यादिना । मन्त्रिमण्डलं प्रविश्य यथाविधि आहितमना एकाग्रचित्तः । अनुद्धतवेषो भूत्वेत्यर्थः । बुद्धिवृद्धये, मन्त्रप्रयोगार्थं तूत्तरमन्त्रिभिरेव सह मन्त्रयेतेत्याचार्येणोक्तम् । "एतत्त्रिभिश्चतुर्भिर्वा मन्त्रयेते" ति ( कौ० अ० १-१५-११ ) ॥ ४९ ॥

एकैकेनामात्येन सह सम्भूय मतं प्रविशेत्, कस्य किंमुत्थोऽभिप्राय

---

द्वादशमन्त्रिपरिकल्पितं मनुराह । विजिगीष्वरिमध्यमोदासीनसंज्ञकमण्डलचतुष्टये द्वौ द्वौ अन्यौ चिन्तायां योज्याविति भावः । षोडशमन्त्रिपरिकल्पितं बृहस्पतिराह । उक्तमण्डलचतुष्टये मन्त्रित्रयनियोगादिति भावः । उशनाः शुक्रो विंशतिरिति विंशतिमन्त्रिपरिकल्पितं मण्डलं कुर्यादुक्तमण्डलचतुष्टये मन्त्रिचतुष्टयनियोगादित्यभिप्रायः ॥ ४८ ॥

( यथेति । ) यदि मन्त्रिगुणसम्पन्ना बहवो मन्त्रिणो भवन्ति, तेषां करणं पर्याप्तं तदा बहुकल्पितमेव मण्डलमिष्यते । तथा च कौटिल्यः--"इन्द्रस्य हि मन्त्रिपरिषदृषीणां सहस्रं सत्तच्चक्षुस्तस्मादिन्द्रं सहस्राक्षमाहुरि"ति । तत्प्रविश्य तन्मन्त्रिमण्डलं प्रविश्य यथाविधि विध्यनतिक्रमेण मन्त्रयेत । आहितमनास्सावधानः । कार्यं विधेयम् । बुद्धिविवृद्धये- बहुमतव्युत्पत्त्या बुद्धिर्वर्धत इति ॥ ४९ ॥

[ एकत्र पञ्च सप्ताद्या वैषम्यक्रियया युताः ।
मन्त्रिणो भूभुजां कार्या इति कौणपदन्तकैः ॥ ]

मन्त्रक्रममभिप्रायमाह--( एकैकेनेति । ) प्रतीतम् । तथा च कौटिल्यः--

प्रविशेत् स्वहितान्वेषी मतमेषां पृथक् पृथक् ॥ ५० ॥
महापक्षो यथाशास्त्रं दृष्टकर्मा हितः सुधीः ।
यद्यद् ब्रूयान्मतारूढस्तत्तत् साधु समाचरेत् ॥ ५१ ॥
नातियात् कार्यकालं हि कृत्वा मन्त्रविनिश्चयम् ।
अतिक्रान्तं तु तं भूयो यथायोगं प्रकल्पयेत् ॥ ५२ ॥
न कार्यकालं मतिमानतिक्रामेत् कदाचन ।
कथञ्चिदेव भवति कार्ययोगः सुदुर्लभः ॥ ५३ ॥

---

इति विद्यात् ॥ ५० ॥

तत्रैषां यो महापक्षादिगुणयुक्तो यद्ब्रूयात्तदाचरेदित्याह—महापक्ष इत्यादि । बहुभिर्मन्त्रिभिरनुगम्यमानत्वान्महापक्षः । यथाशास्त्रं कुर्यादिति सम्बन्धः । दृष्टकर्मा अन्यत्र दृष्टमन्त्रप्रयोगः । हितः स्वामिने । मतारूढः निश्चयमतारूढः ॥ ५१ ॥

तत्रोत्तरमन्त्रिभिः परिषदा वा मन्त्रं विनिश्चित्य कार्यकालं न हापयेदिति श्लोकत्रयेण दर्शयति । नातीयादित्यादिना । यथायोगमिति । यो यस्य साध्यस्य कालेन योगस्तं तेन पुनः प्रकल्पयेदिति ॥ ५२ ॥

कालस्य कार्ययोगो न सुलभ इति मन्यमान आह—न कार्यकालमित्यादि ॥ ५३ ।

---

" तानेकैकशः पृच्छेत् समस्तांश्च, हेतुभिश्चैषां गतिमाविवेकान् विद्यात् " इति ॥ ५० ॥

कीदृशस्य मन्त्रिणो वचनं कुर्यादिति दर्शयन्नाह—( महेति । ) महाप्रमाणः पक्षो बन्धुवर्गो यस्य सः स्वपक्षार्थं नाहितमुपादिशतीति । शास्त्रानतिक्रमेण दृष्टकर्मा प्रागप्यनुष्ठितषाड्गुण्यः । हितः स्वामिहितः, सुधीरष्टगुणप्रज्ञासम्पन्नो यद् ब्रूयात् इतरमान्त्रिमतारूढस्तत्तत्साधु समाचरेत् व्यभिचारसम्भवाभावात् ॥ ५१ ॥

( नेति । ) तथा सुगममेतत् ॥ ५२ ॥

कायकालस्तु नातिक्रमणीय इति दर्शयन्नाह—( न कार्यकालमिति ) कार्यकालं मतिमान्नातिक्रामेत् । काले कर्म समाचरेत् ॥ ५३ ॥

सतां मार्गेण मतिमान् काले कर्म समाचरेत् ।
काले समाचरन् साधु रसवत् फलमश्नुते ॥ ५४ ॥
इति चेति च सम्पश्यन् देशे काले सहायवान् ।
विशुद्धपार्श्वस्तद्वस्तु समाक्रामेन्न चापलात् ॥ ५५ ॥
अहिते हितबुद्धिरल्पधीरवमन्येत मतानि मन्त्रिणाम् ।
चपलः सहसैव सम्पतन्नरिखड्गाभिहतः प्रबुध्यते ॥५६॥
अविचार्य बलाबलं द्विषामहमित्येव समुद्धतोऽनयात् ।
चपलः स्वमतेन सम्पतन्ननिपत्याल्पमना न बुध्यते ॥५७॥

---

तस्मात्तैव काले कर्म समाचरेदित्याह—सतां मार्गेणेति । मन्त्रिणामुपदेशेन स्वादु साधु फलमश्नुते रसवत्त्वात् । अन्यथा कालातिपत्तिः प्रत्यग्रं कार्यरसं विहन्ति ॥ ५४ ॥

( विशुद्धपार्श्वसंसिद्धः ( तद्वस्तु ) पार्ष्णिस्सद्वस्तु " इ० पा० ) तत्रापि मन्त्राङ्गसव्यपेक्ष एव कार्यमारभेत, न चापलादिति श्लोकत्रयेण दर्शयति—इतीत्यादिना । अयमस्य साधनोपाय इत्यादातव्यस्य देशे काले प्रविभक्ते । क्षुद्रैर्मुख्यैश्च सहायैरुपेतः । विशुद्धपार्श्वः—कृतविपत्प्रतीकारत्वात् । तदिति सद्यः सिद्धिकरम् । न चापलादिति । चपलो मन्त्रिभिः स्वयं वा अविमृश्यकारी ॥५५॥

तदुभयमप्याह—अहित इत्यादि । दुःखहेतौ सुखहेतुरित्येवम्बुद्धिरल्पबुद्धित्वात् । मतानि कृतपञ्चाङ्गविनिर्णयानुपदेशान् योऽवमन्यते । सहसा सम्पतन्—मन्त्रिभिरविमृश्य वर्तमानः शत्रुभिश्छिद्रेषु प्रहतश्चेतयते ॥ ५६ ॥

अविचार्य स्वयं बलादहमिति जातदर्पो हि न स्वयं विमृशति । स्वमतेन विचारशून्येन । अनिपत्य न बुद्ध्यते स्वपदात्परिभ्रष्ट एव वेदयते । अल्पमनाः अल्पबुद्धिः ॥ ५७ ॥

---

( सतामिति । )......तत्सिद्धये प्रयत्ने रसवत्फलमश्नुते ॥ ५४ ॥

( इति चेति चेति । ) इति चेत्यन्वयेन, द्वितीयमिति ( चेति व्यतिरेकेण ?) ........सपश्चात्तापः स्यात् ॥ ५५ ॥

( अहिते हितबुद्धिरिति । )......॥ ५६ ॥

( अविचार्येत्यादि । ) द्विषां च बलमविचार्य अहमित्येवाहमेव बलवानिति समुद्धतो भवन्नसौ चपलः स्वमतेन सम्पतन् अनिपत्याल्पमना न बुध्यते, पतितः सन् बुध्यते ॥ ५७ ॥

इति मन्त्रबलान्महीपतिर्महतो दुष्टभुजङ्गमानिव ।
विनयेन्नयमार्गमास्थितो वशमुद्योगसमन्वितो रिपून् ॥५८॥
इति मन्त्रविकल्पो नाम सप्तदशं प्रकरणम् ।
इति श्रीकामन्दकीयनीतिसारे मन्त्रविकल्पो नाम
द्वादशः सर्गः ।

—

प्रकरणानुष्ठानफलमाह- इतीत्यादि । महतो रिपूनिति सम्बन्ध. । दुष्टभुजङ्गमानिव । तेऽपि मन्त्रबलादेव वशीक्रियन्ते । विनयेद्वशमिति सम्बन्धः । नयमार्गं षाड्गुण्यविधिम् । उद्योगसमन्वित इति, उद्योगः सर्वत्र प्रधानमिति मन्यते ॥ ५८ ॥

इति मन्त्रविकल्पो नाम सप्तदशं प्रकरणम् ।
इति शङ्करार्यकृतायां नीतिसारपञ्जिकायां जयमङ्गलायां मन्त्र-
विकल्पो नाम द्वादशः सर्गः ॥

———

(इतीति ।) इत्येवमुक्तप्रकारो यो मन्त्रस्तद्बलान्महीपातर्महतो रिपून् दुष्टभुजङ्गमानिव यथा गरुडमन्त्रवित् विनयेद् वश्यान् कुर्यात् तथा( विनयेत् ) न मार्गमास्थितः स्ववशमिति बलादुद्योगसमन्वितो रिपूनिति ॥ ५८ ॥

इति मन्त्रविकल्पो नाम सप्तदशं प्रकरणम् ।
इति श्रीकामन्दकीयनीतिसारटीकायामुपाध्यायनिरपेक्षायां
मन्त्रविकल्पो न म द्वादशः सर्गः ।

— —

## अथ त्रयोदशः सर्गः ।

### १८ दूतप्रचारप्रकरणम् ।

कृतमन्त्रस्तु मन्त्रज्ञो मन्त्रिणं मन्त्रिसम्मतम् ।
यातव्याय प्रहिणुयाद् दूतं दूत्याभिमानिनम् ॥ १ ॥

प्रगल्भः स्मृतिमान् वाग्मी शस्त्रे शास्त्रे च निष्ठितः ।
अभ्यस्तकर्मा नृपतेर्दूतो भवितुमर्हति ॥ २ ॥

---

## अथ त्रयोदशः सर्गः ।

### १८ दूतप्रचारप्रकरणम्

अस्मिन् सर्गे प्रकरणद्वयं दूतप्रचारश्चारविकल्पश्च । सन्धिविग्रहाद्यर्थो मन्त्रः । स च स्वपरमतसम्पादनाधीनः । तच्च प्रस्तावज्ञाद्दूताच्चाराच्च भवति । अतो मन्त्रविकल्पानन्तरम् उभयविधिः षाड्गुण्यशेषभूत उच्यते । तत्र प्राधान्याद्दूतविधिमाह- कृतमन्त्र इत्यादि । कृतमन्त्रः उद्धृतमन्त्रः, दूत्याभिमानिनमिति । यो मन्त्री दूतकर्मणि जाताभिमानो मन्त्रिसम्मतश्च, तं दूत्येन यातव्याय शत्रवे प्रेषयेत् । तस्य कार्यसाधनयोग्यत्वात् ॥ १ ॥

दूतगुणानाह--प्रगल्भ इत्यादि । अमात्यस्वरूपो दूतः । तस्य प्रकृतिसम्पदि गुणा उक्ता एव । पुनरिह कतिपयगुणोपादानं प्राधान्यार्थम् । निष्ठितः प्रकृष्टः । अभ्यस्तकर्मा--बहुधा कृतदूत्यः ॥ २ ॥

---

## अथ त्रयोदशः सर्गः ।

### १८ अथ दूतप्रचारप्रकरणम् ।

मन्त्रविकल्पानन्तरं दूतप्रचारं चरविकल्पं चाभिधातुमाह—( कृतमन्त्र इति । ) कृतोऽभ्युपगतो मन्त्रिणां मन्त्रो येन स तथा । दूतं वक्ष्यमाणलक्षणम् । दुनोति स्वाचारेण यातव्यमिति दूतः, तम् । मन्त्रिसम्मतमभिप्रेतम् । स्वयं मन्त्रज्ञो राजा यातव्याय प्रहिणुयात् प्रेषयेदिति ॥ १ ॥

सत्यप्यमात्यगुणसम्पन्नत्वेऽवश्यंभाविनो दूतगुणानभिधातुमाह—( प्रगल्भ इति । ) प्रगल्भो जितसभः, स शत्रुपरिषदि गतसाध्वसो वक्ति । स्मृतिमान् स्वामिसन्दिष्टं न विस्मरतीति । वाग्मी प्रशस्तवाक् स्ववचनैः सभां रञ्जयति । शस्त्रे धनुरादिके । शास्त्रे नीतिप्रतिपादके । प्रतिष्ठितः निष्ठां परां गतः । अभ्यस्तकर्मा शास्त्रप्रतिपादितं कर्माप्येभ्यस्तं येन तादृशो नृपतेर्दूतो भवितुमर्हति योग्यो भवति ॥ २ ॥

निसृष्टार्थो मितार्थश्च तथा शासनहारकः ।
सामर्थ्यात् पादतो हीनो दूतस्तु त्रिविधः स्मृतः ॥ ३ ॥
स भर्तुः शासनाद् गच्छेद् गन्तव्यं ह्युत्तरोत्तरम् ।

---

निसृष्टार्थः—यथाकामेन निसृष्टः सन्ध्यादिरर्थो यस्मिन् । परिमितार्थः त्वयैतावद्वाच्यमिति । शासनहारकः—लेखनहारकः । सामर्थ्यात्पादतो हीन इति । अमात्यगुणांश्चतुर्धा विभज्य योजनीयम् । तत्र गुणसाकल्यं सामर्थ्यमस्य, तदुपेतो निसृष्टार्थो वेदितव्यः । तस्य पादतो हीनः पादत्रययुक्तः परिमितार्थः । तस्यापि पादतो हीनः पादद्वययुक्तः शासनहारकः । तेन मेद्यापेक्षया पादतो हीन इति द्विरावर्तनीयम् । उक्तञ्च "अमात्यसम्पदोपेतो निसृष्टार्थः पादगुणहीनः परिमितार्थः अर्धगुणहीनः शासनहारक" इति । ( कौ० अ० १-१६-१२ ) ॥ ३ ॥

इदानीं एकविंशत्या श्लोकैस्तत्प्रचारमाह—स भर्तुरित्यादि । स इति निसृष्टार्थः । शासनादाज्ञया । गन्तव्यं—यातव्यं शत्रुम् । इति चेति—शासनमेवं

---

मन्त्रिण इव दूतस्यापि त्रैविध्यं दर्शयन्नाह—( निःसृष्टेति । ) निःसृष्टो नियमरहितोऽर्थः सन्धिविग्रहादिको यस्यासौ निसृष्टार्थः । यथा युधिष्ठिरेण वासुदेव एवमुक्त्वा प्रेषितः—

"अस्मान्वेत्थ परान्वेत्थ वेत्थार्थाननुभाषितुम् ।
यद्यदस्मद्धितं कृष्ण तत्तद्वाच्यः सुयोधनः ॥" इति ।

अत्र सन्धिरेव कर्तव्यो विग्रहो वेति न नियमः । मितार्थो मितो नियतो निर्दिष्टः सन्धिरेव, विग्रह एवेति त्वया विधेय इति, वचनानां च नियमो यस्यासौ परिमितार्थः । तथा शासनहारक इति । शासनं स्वामिसन्देशो येन शत्रुः शास्यते । तच्च परिमितार्थं परिमितवचनामिति द्रष्टव्यं; तद्धारको दूतः । सामर्थ्यात्पादतो हीन इति । सामर्थ्यं हि अमात्यानां पञ्चविंशतिगुणरूपं, तस्मात्पादतो हीन इति वीप्सा द्रष्टव्या । निःसृष्टार्थात् पादगुणहीनो मितार्थः, ततोऽपि पादगुणहीनः शासनहारक इति । एवं दूतस्त्रिविधः स्मृत इति ॥ ३ ॥

( स इति । ) स त्रिविधोऽपि दूतो भर्तुर्विजिगीषोः शासनादादेशात् गच्छेत् । गन्तव्यं यातव्यविषयम् । स्वव क्यानामुत्तरोत्तरमिति चेति च चिन्तयेत् । तथा च कौटिल्यः—"शासनमेवं वाच्यं, स वक्ष्यत्येवं, तस्येदं प्रतिवाक्य

स्ववाक्यपरवाक्यानामिति चेति च चिन्तयन् ॥ ४ ॥
अन्तपालांश्च कुर्वीत मित्राण्याटविकांस्तथा।
जलस्थानानि मार्गांश्च विद्यात् स्वबलसिद्धये ॥ ५ ॥
नाविज्ञातः पुरं शत्रोः प्रविशे‍च्च संसदम्।
कालमीक्षेत कार्यार्थमनुज्ञातश्च निष्पतेत् ॥ ६ ॥
सारवत्ताञ्च राष्ट्रस्य दुर्गं तद्गुप्तिमेव च।
छिद्रं च शत्रोर्जानीयात् कोशमित्रबलानि च ॥ ७ ॥

---

वाच्यं, पर एवं वक्ष्यति, एवं तस्येदं प्रतिवाच्यम्, एवमतिसन्धातव्यमित्युत्तरोत्तरं चिन्तयन् ॥ ४ ॥

अन्तपालान्—जनपदान्तरक्षाधिकृतान् मित्राणि कुर्यादुपजापार्थं स्वबलसिद्धये ॥ ५ ॥

अभियोगकाले नाविज्ञातः प्रविशेत् शङ्कानिवृत्तये। पुरं दुर्गम्। संसदं सभाम्। कालमीक्षेत कार्यार्थम्, इदं कार्यमस्मिन् काले सिद्ध्यतीति। अनुज्ञातः शत्रुणा विसर्जितः ॥ ६ ॥

सारवत्तां—स्फीतताम्। दुर्गं जानीयात्, कियता बलेनाधिष्ठीयते, विलुप्यते चेति। तद्गुप्तिं विषमस्थानम्। छिद्रमन्तःकोपादि ॥ ७ ॥

---

मेवं प्रतिसन्धातव्यामिति अधीयमानो गच्छेदिति ॥ ४ ॥

( अन्तपालानिति। ) स्वमण्डलपरमण्डलानामन्तान् पालयन्तीति तांश्च मित्राणि कुर्वीत, आटविकांश्च सामदानादिभिः यात्रासौकर्यार्थम्। तथा जलस्थानानि स्वबलोपयोगीनि मार्गांश्च निराबाधान् विद्यात् स्वबलसिद्धये। तथा च कौटिल्यः—"अटव्यन्तपालपरराष्ट्रमुख्यैश्च प्रति संसर्गं गच्छेत्, अनीकस्थानगुप्तिग्रहापसारभूमीरात्मनः परस्य चावेक्षेते"ति ॥ ५ ॥

( नेति। ) शत्रुणा नाविज्ञातः पुरं प्रविशेत्। न च शत्रोः संसदं सभाम्। असूचितप्रवेशः शङ्कनीयः स्यादिति। कालं वीक्षेत कालं याप्यमानं शत्रूणां वीक्षेत कार्यार्थं यदि विजिगीषोः कार्यानुगुणं याप्यमानं पश्येत् अनुज्ञातश्च शत्रुणा निःपतेत् नान्यथेति ॥ ६ ॥

( सारवत्तामिति। ) शत्रुराष्ट्रस्य सारवत्तां जानीयात् ग्रहीतुम्। दुर्गं च ग्रहणार्थमेव। तद्वत्तद्गुप्तिमेव चेति तद्गुप्तिं ( दुर्गगुप्तिम् )। छिद्रं च शत्रोर्जानीयात् ग्रहीतुम्। कोशं च तदुचितप्रतिविधानार्थमेव। मित्रबलानि चेति ॥ ७ ॥

उद्यतेष्वपि शस्त्रेषु यथोक्तं शासनं वदेत् ।
रागापरागौ जानीयाद् दृष्टिवक्त्रविचेष्टितैः ॥ ८ ॥
सहेतानिष्टवचनं कामं क्रोधञ्च वर्जयेत् ।
नान्यैः शयीत संरक्षेद् भावं विद्यात परस्य च ॥ ९ ॥
रागापरागौ जानीयात् प्रकृतीनाञ्च भर्तरि ।
कृत्यपक्षोपजापञ्च कुर्यादनभिलक्षितः ॥ १० ॥
वध्यमानोऽपि न ब्रूयात् स्वस्वामिप्रकृतिच्युतिम् ।

---

उद्यतेष्वपीति प्राणबाधार्थमुत्खातेष्वपि, किमुत विभीषिकादौ । शासनं स्वामिसन्देशम् । रागापरागौ जानीयात्, सन्देशमाचिख्यासुराख्याय वा । दृष्टिवक्त्रविचेष्टितैरिति । तत्रोर्ध्वाधस्तिर्यक्प्रसारितत्वं, नैर्मल्यमुत्फुल्लता चेति, दृष्टेर्विचेष्टितानि, पुलकिता विकासश्चेति वक्त्रस्य । तै रागं लक्षयेत् । विपरीतैरपरागम् ॥ ८ ॥

अनिष्टवचनम् अधिक्षेपादिकम् । कामं वेश्यासु । क्रोधं द्वेष्येषु । मन्त्रभेदनिवृत्त्यर्थं नान्यैः शयीत, वक्ष्यमाणदोषात् । भावमभिप्रायम् ॥ ९ ॥

प्रकृतीनां भर्तरीति । शत्रुप्रकृतीनां स्वभर्तरि । कृत्यपक्षोपजापं कुर्यात् क्रुद्धलुब्धभीतावमानितान् भिन्द्यादित्यर्थः । अनभिलक्षितः शत्रोः ॥ १० ॥

स्वस्वामिप्रकृतिच्युतिमिति । स्वभर्तुः प्रकृतीनामसारतामल्पताञ्च न ब्रूयात् । किन्तु व्याजेनापसरेत् । यदाह—ब्रूयादिति । प्रश्रितयाऽनुकूलया । सर्वं वेद

---

( उद्यतेष्विति । ) यथोक्तं न भयादपलपेत् । शेषं सुगमम् ॥ ८ ॥

( सहेतेति । ) सहेतेति असहिष्णुतया कार्यं न नाशयेत् । कामं क्रोधं च वर्जयेत्, "कामादेरुत्सेको मन्त्रं भिनत्ति" इति वचनात् । नान्यैः शयीत 'स्त्रियः पानं क्षेत्, एकः शयीत', इति वचनात् । स्वं भावं मन्त्रात्मकमाभिप्रायं संरक्षेत् । विद्यात् परस्य भावमिति वर्तते ॥ ९ ॥

( रागापरागाविति । )......॥ १० ॥

( पृच्छ्यमानोपीति । )—( स्वस्वामिनः स्वप्रभो ) स्तत्प्रकृतीनां च जनपदकोशदण्डादीनां च्युतिं हीनतां न ब्रूयात् । तर्हि किं ब्रूयादित्याह—ब्रूयात् प्रसृतया ( वाचा ) "भवानेव सर्वं वेद, यस्माच्चारचक्षुषा प्रत्यक्षीकृतान्यमण्डलो

ब्रूयात् प्रश्रितया वाचा सर्वं वेद भवानिति ॥ ११ ॥
कुलेन नाम्ना द्रव्येण कर्मणा च गरीयसा।
कुर्याच्चतुर्विधं स्तोत्रं पक्षयोरुभयोरपि ॥ १२ ॥
विद्याशिल्पापदेशेन संश्लिष्योभयवेतनैः।
कृत्यपक्षं विजानीयात् तद्भर्तुश्च विचेष्टितम् ॥ १३ ॥
तीर्थाश्रमसुरस्थाने शास्त्रविज्ञानहेतुना।

---

भवानिति किमिहाविदितं युष्माकं चारचक्षुषां, वय त्वात्मव्यापारमात्रविद एवेति ॥ ११ ॥

कुलेन—उदितोदितेन। नाम्ना—दिगन्तरव्यापिना। द्रव्येण—स्वपरोपकारिणा। कर्मणा—सतामनिन्द्येन। उभयोरपि—भर्तुः शत्रोश्च ॥ १२ ॥

अपदेशेन—व्याजेन शङ्कापरिहारार्थम्। उभयवेतनैः, ते हि पूर्वप्रणिहिताः कथयितारः। कृत्यपक्षम्—उपजापार्थम्। तद्भर्तुश्च विचेष्टितं प्रतिविधानार्थं विजानीयात् ॥ १३ ॥

तीर्थस्थानं—पुण्यनदीसमुद्देशः, आश्रमस्थानम्—ऋषीणां निवासः, सुरस्थानं देवायतनम्। तत्र सम्पतेदिति सम्बन्धः। तेषु तपस्विव्यञ्जनस्य सन्निधानात्। शास्त्रविज्ञानहेतुनेति सम्प्रधारणोपायः। तपस्विव्यञ्जनोपेतैरिति—तापसव्यञ्जना-

---

भवानिति ॥ ११ ॥

चित्तरञ्जनार्थं यद्ब्रूयात्तस्यैवार्थमाह—( कुलेनेति। ) विजिगीषुपक्षयातव्यपक्षयोः चतुर्विधं स्तोत्रं तद्यथा—कुलं विजिगीषोरभ्यर्हितं सोमान्वयायातम्। त्वदीयमपि तथैवादित्यसम्भवम्। नाम्ना विजिगीषुः श्लाघ्यतरः। नाम्ना त्वमपि तथैव। द्रव्येण विजिगीषुर्नवनवतिकोटीश्वरस्त्वमपि तथैव। कर्मणा च महीयसा विजिगीषुरुत्खाताशेषप्रतिपक्षाधिगतानेकमण्डलस्त्वमपि। इतिप्रकारं चतुर्विधं स्तोत्रं कुर्यात् मध्यस्थताख्यापनार्थं च ॥ १२ ॥

( विद्येति। ) विद्या आन्वीक्षिक्याद्याः। शिल्पानि चित्रगीतादीनि। तदुपदेशापदेशेन तद्व्याजेन संश्लिष्य सम्बन्धं नीत्वा चोभयवेतनैर्मन्त्रिभिः करणभूतैः कृत्यपक्षं भेद्यपक्षं जानीयात्। तद्भर्तुर्यातव्यस्य विचेष्टितं बुध्येतेति ॥ १३ ॥

( तीर्थेति। ) तीर्थानि वेणीसङ्गमप्रभृतीनि। आश्रमास्तपस्विनां तपो-

तपस्विव्यञ्जनोपेतैः स्वचारैः सह संम्पतेत् ॥ १४ ॥
प्रतापं कुलमैश्वर्यं त्यागमुत्थानसौष्ठवम् ।
अक्षुद्रतां दक्षताञ्च भर्तुर्भेद्येषु दर्शयेत् ॥ १५ ॥
भावमन्तर्गतं व्यक्तं सुप्तो मत्तश्च भाषते ।
तस्मादेकः स्वपेन्नित्यं स्त्रियः पानञ्च वर्जयेत् ॥ १६ ॥
काले व्रजति मेधावी न खिद्येतार्थसिद्धये ।

---

साध्वाचारा यत्र, तत्र परस्परं चाराणां सम्पातो भवति, तद्युक्तैः स्वचारैः सह सम्पतेत्, शत्रुप्रचारज्ञानार्थम् ॥ १४ ॥

उत्थानसौष्ठवमुत्साहसम्पदम् । अक्षुद्रतां सत्सङ्ग्रहशीलताम् । दक्षतामनालस्यम् । भेद्येषु--कृत्यपक्षेषु । तत्र क्रुद्धेषु प्रतापमुत्थानसौष्ठवं दाक्ष्यं च दर्शयेत् । त्रितयमप्यक्षुद्रतायुक्तं भीतेषु । तदेव चतुष्टयं कुलसहितं मानिषु । लुब्धेषु त्यागैश्वर्ये ॥ १५ ॥

सुप्तो मत्तश्चेति । तयोः स्वापमदाभ्यां परवशत्वात् । तस्मादेकः शयीत नान्यैः ॥ १६ ॥

न खिद्येत--इहागतस्य मम बहवो दिवसा वर्तन्त इति । अर्थसिद्धये-यथोपन्यस्तसन्धिविग्रहादिसिद्धये । क्षिप्यमाणं परेण स्वार्थं पश्यता । बुद्ध्येत

---

वनानि । सुराः सोमेश्वरभूतेश्वरस्थानानि । तेषां शास्त्रविज्ञानहेतुना नियुक्तैस्तपस्विव्यञ्जनोपेतैः स्वचरैः सह संवदेत् संवादं कुर्यात् । "त्रयाणामेकवाक्ये सम्प्रत्यय" इति वचनात् ॥ १४ ॥

कृत्यपक्षोपग्रहोपदेशं दर्शयन्नाह–( प्रतापमिति । ) प्रतापं पौरुषम् । कुलमतिश्लाघ्यम् । ऐश्वर्यं विभूतेराधिक्यम् । त्यागं दानशक्तिम् । उत्थानसौष्ठवमुत्साहशक्तिप्रवणत्वम् । अक्षुद्रतामवञ्चकत्वम् । भद्रतां कल्याणबुद्धित्वम् । भर्तुर्विजिगीषोः भेद्येषु विषये दर्शयेत् दूरतो भेद्यानात्मसात्कर्तुम् ॥ १५ ॥

( भावमिति । ) अन्तर्गतं भावं हृद्गतं, कार्यं गोपनीयमपि सुप्तः स्वप्नापन्नः मत्तो मदविस्मृतसंवरणो भाषते । यतः तस्मादेकः स्वपेत्, नित्यं द्यूतं पानं च वर्जयेत् मन्त्रसंवरणार्थं दूत इति शेषः ॥ १६ ॥

( काल इति । ) काले सम्प्रेषणकाले गच्छति दूतः ( न खिद्येत । ) यदि भर्तुरर्थसिद्धिं पश्यति । तदर्थं रक्ष्यमाणं कालं शत्रुणा नानाप्रकारैः मिथ्या-

क्षिप्यमाणं च बुध्येत कालं नानाविलोभनैः ॥ १७ ॥
एतेष्वहस्सु गच्छत्सु तत्र न पृथिवीपतेः ।
पश्यति व्यसनं किञ्चित् स्वयं वा कर्तुमीहते ॥ १८ ॥
स्वान्तःप्रकोपमथवा विनेतुं नीतिवित्तमः ।
सस्यादेः सङ्ग्रहं कर्तुं दुर्गे वा दुर्गसत्क्रियाम् ॥ १९ ॥
स्वपक्षाभ्युदयाकाङ्क्षी देशकालावुदीक्षते ।
उत यात्रां स्वयं दातुं येनास्मान्न समीहते ॥ २० ॥

---

वक्ष्यमाणप्रकारेण । नानाविलोभनैः—स्थीयतां तावदभिमतं ते करिष्यामीति ॥१७॥

नः पृथिवीपतेः अस्माकं राज्ञः । व्यसनं—दैवं मानुषं वा पश्यति । तच्च सन्दध्यात् । स्वयं वा सामन्ताटविकादीनुत्थाप्य व्यसनं कर्तुमीहते अभियोक्ष्यामीति ॥ १८ ॥

स्वान्तःप्रकोपमिति—स्वयं वा मन्त्र्यादिप्रकोपमपनेतुमीहते यथेष्टं सन्धास्य इति । सस्यादेः सङ्ग्रहं कर्तुमीहते परिक्षीणपुराणभक्तमगृहीतनवभक्तं परमभियोक्ष्यामीति । दुर्गसत्क्रियां—भिन्नस्फुटितप्राकारादिसंस्कारं कर्तुमीहते, दुर्गमविषह्यमाश्रित्य परकर्माण्युपहनिष्यामीति ॥ १९ ॥

स्वपक्षो मित्रं, यद्विजिगीषुमभियुञ्जानस्य साहाय्यं दास्यति, तस्य वा वृद्ध्याकाङ्क्षी तदनुगुणौ देशकालावुदीक्षते । स्वयं वा यात्रां दातुं स्वसैन्यव्यायामयोग्यौ देशकालावुदीक्षते, येनास्मान्न समीहते न प्रेषयति । प्रेषिते हि विजिगीषुः प्रतिविधास्यति ॥ २० ॥

---

विलोभनैर्बुध्येत जानीयात् ॥ १७ ॥

तान्येव कालक्षेपकारणानि दर्शयितुमाह-( एतेष्विति । ) एतेषु कालक्षेपाहस्सु गच्छत्सु किमस्मत्पृथिवीपतेः विजिगीषोः पश्यति व्यसनं प्रातिलोम्यादिकम् । नु वितर्क । स्वयं वा कर्तुमीहते पार्ष्णिग्राहप्रोत्साहनादिकम् ॥ १८ ॥

( स्वान्त इति । ) स्वान्तःप्रकोपमपनेतुं सस्यादेः स्वदुर्गे सङ्ग्रहं कर्तुं, दुर्गसत्क्रियां वा, नीतिवित्तमोऽरिरयं, कर्तुमीहते इति शेषः ॥ १९ ॥

( स्वपक्षाभ्युदयाकाङ्क्षीति । ) ... इति प्रतीतम् ॥ २० ॥

यात्राकालक्रियार्थी वा तत्र चायं विलम्बते ।
काले विक्षिप्यमाणे तु तर्कयेदिति पण्डितः ॥ २१ ॥
कार्यकालव्यपेतश्च व्यक्तं ज्ञात्वा विनिष्पतेत् ।
तिष्ठन् वार्ताविशेषार्थी भर्त्रे सर्वं निवेदयेत् ॥ २२ ॥
रिपोः शत्रुपरिच्छेदः सुहृद्बन्धुविभेदनम् ।
दुर्गकोशबलज्ञानं कृत्यपक्षोपसङ्ग्रहः ॥ २३ ॥
राष्ट्राटव्यन्तपालानामात्मसात्करणं तथा ।

---

यात्राकालक्रियार्थी वेति । यात्राकाले यत्परबलापेक्षया बलसमुत्थानकर्म ततोऽपेक्षी ( नार्थी ) वा । तत्र च कर्मण्ययं प्रविलम्बमानो न प्रेषयति ॥ २१ ॥

कार्यकालव्यपेतं--कार्यकालयोरातिक्रमणं, वार्ताविशेषार्थीति । अस्माननादृत्यान्यत्रानेन सन्धिविग्रहादिकं प्रस्तुतं, तत्रास्य किं स्थितमिति निश्चयार्थी चेत् , तदा तत्रैव तिष्ठन् सर्वं यथोक्तं भर्त्रे निवेदयेत् , प्रतिविधानार्थम् ॥२२॥

सङ्क्षेपेण दूतव्यापारमाह । रिपोरित्यादि । शत्रुपरिच्छेदः--एतावन्तोऽस्य शत्रव इति । बलं--सैन्यम् ॥ २३ ॥

अटवी- तात्स्थ्याद्आटविकाः । युद्धापसारभूज्ञानमिति, हस्त्यश्वरथपदाती-

---

( यात्रेति । ) यात्राकालस्य अस्मत्प्रभोरनुगुणस्य क्षयार्थी वा तत्र चायं यातव्यो विलम्बते । काले क्षिप्यमाणे तु तर्कयेत् ( पण्डितो ) दूत इति स्पष्टम् ॥ २१ ॥

( का॰ इति । ) तथा कार्यकालाविपात्तिं भाविनीं प्रभोर्व्यक्तां दृष्ट्वा विनिः तेत् इति दृष्टोऽपि ( अनतिसृष्टोऽपि ? ) गच्छेदित्यर्थः । अथवा तिष्ठन् वार्ताविशेषार्थी तन्मतादेव भर्तुः सर्वं निवेदयेत् सूचयेदिति ॥ २२ ॥

तथान्यदपि दूतकर्माभिधातुमाह–( रिपोरिति । ) रिपोर्यातव्यस्य ये परमार्थतः शत्रवस्तत्परिच्छेदस्तन्निर्णयः आत्मसात्करणार्थम् । सुहृदोऽपि मित्राणि, बान्धवा मातुलादयस्तेषां विभेदनं भिन्नानामात्मसात्करणार्थम् । दुर्गकोशबलज्ञानं– कियन्ति दुर्गाणि, कियन्ति स्वरूपाणि, कियान् कोशः, किं बलं, किं स्वरूपज्ञानं कृत्यपक्षोपसङ्ग्रहश्चेति दूतकर्म ॥ २३ ॥

( राष्ट्रेति । ) चरणद्वयं स्पष्टार्थम् । स्वप्रभोररेश्च भूज्ञानमित्येवंप्रकारम-

युद्धापसारभूज्ञानं दूतकर्मेति कीर्तितम् ॥ २४ ॥
दूतेनैव नरेन्द्रस्तु कुर्यादरिविमर्शनम्।
स्वपक्षे च विजानीयात् परदूतविचेष्टितम् ॥ २५ ॥

इति दूतप्रचारो नामाष्टादशं प्रकरणम्।

---

## १९ अथ चरविकल्पप्रकरणम्।

तर्केङ्गितज्ञः स्मृतिमान् मृदुर्लघुपरिक्रमः।

---

नामेता युद्धयोग्याः भूमयः, एषा च ( भूः ) बलवताभियुक्तस्य कलत्रस्थानमिति ॥ २४ ।

यथा दूतामात्येन यथोक्तं विमर्शनं कुर्यात्, तथा किमन्येनाप्यमात्येने-त्याह- दूतेनैवेति । अन्यस्य परमण्डलगमनासम्भवात् । विजानीयात् परदूतवि-चेष्टितं, यस्मात्परो विजिगीषुपदे च सञ्चारिणं दूतं प्रेषयति ॥ २५ ॥

इति दूतप्रचारो नामाष्टादशं प्रकरणम्।

---

## १९ अथ चरविकल्पप्रकरणम्।

यथा दूतादरिविमर्शनं तथा चरादपीति चरविकल्प उच्यते पञ्चविंशत्या श्लोकैः । तत्र चरः किंगुणः स्यादित्याह—तर्केङ्गितज्ञ इत्यादि । तर्क ऊहः, गूढवस्तुत्प्रेक्षणमिति यावत् । इङ्गितम् अन्यथावृत्तिः । मृदुरनुद्धटः स ह्यनुपल-

---

न्यदपि कौटिल्येनोक्तम् । दूतेनैतद्विधेयमित्यर्थः ॥ २४ ॥

( दूतेनेतीति । ) दूतेनेति दूतेनैव ॥ २५ ॥

इति दूतप्रचारप्रकरणमष्टादशम्।

---

## १९ अथ चरविकल्पप्रकरणम्।

चारविकल्पमभिधातुमाह—( तर्केति । ) तर्क ऊहः प्रज्ञागुणो येन अनुक्त-मप्यूह्यते । इङ्गितमन्यथावृत्तिः पूर्वं प्रवृत्तायाः क्रियायाः अन्यथात्वम् । इङ्गित-माकारस्याप्युपलक्षणार्थं, तज्जानातीति । स्मृतिमानविस्मरणशीलः । मृदुरनिष्ठुर-वचनः । लघुपरिक्रमः शीघ्रगतिः । क्लेशायाससहः क्षुत्तृडादिकृतक्लेशान् तत्कृ-तायासं च सहते । दक्षः कुशलः शीघ्रकारी च चारो गूढपुरुषः स्यात् प्रविप-

क्लेशायाससहो दक्षश्चारः स्यात् प्रतिपत्तिमान् ॥ २६ ॥
तपस्विलिङ्गिनो धूर्ताः शिल्पपण्योपजीविनः ।
चराश्चरेयुः परितः पिबन्तो जगतां मतम् ॥ २७ ॥
निर्गच्छेयुर्विशेयुश्च सर्ववार्ताविदोऽन्वहम् ।
चराः सकाशं नृपतेश्चक्षुर्दूरचरं हि ते ॥ २८ ॥
सूक्ष्मसूत्रप्रचारेण पश्येद् वैरिविचेष्टितम् ।
स्वपन्नपि हि जागर्ति चारचक्षुर्महीपतिः ॥ २९ ॥

---

क्षितो भवति । लघुपरिक्रमः--शीघ्रगमनक्षमः । प्रतिपत्तिमान्—भयस्खलितेष्वा प्रतिविधाता ॥ २६ ॥

तस्य व्यापारमाह—तपस्वीत्यादि । तापसलिङ्गित्वं शिल्पपण्योपजीवित्वं च सञ्चरणोपायः । धूर्ताः परातिसन्धानचतुराः । परितः पिबन्तो विदन्तः, विशेयुर्नृपतेः सकाशमिति सम्बन्धः ॥ २७ ॥

निर्गच्छेयुः तस्यैव सकाशादित्यर्थः । अन्वहं प्रतिदिनम् । चक्षुर्दूरचरं हि ते, इतरत्तु चक्षुरर्वाक्चरम् ॥ २८ ॥

सूक्ष्मसूत्रप्रचारेणाति । चारेणेति शेषः । पटे हूयमानं सूत्रं सञ्चरत् सूक्ष्मत्वान्नोपलक्ष्यते, तस्येव प्रचारोऽस्येति विग्रहः ॥ २९ ॥

---

त्तिमानुत्पन्नप्रतिभः अनालोचितोत्तरदानकुशल इत्यर्थः ॥ २६ ॥

चाराणां वषमभिधातुमाह—( तपस्वीति । ) तपस्विचिह्नाना इति तपस्विनः प्रव्रजितास्त इव व्यज्यन्ते । धूर्ता विदग्धाः । शिल्पानि चित्रादीनि, पण्यानि क्रेयवस्तूनि तान्युपजीवन्तीति । इत्थम्भूताश्चरेयुर्गच्छेयुः । परितः समन्तात् द्वादशराजकमण्डले । जगतामिति जगन्निवासिन उपचर्यन्ते, तेषां मतं पिबन्तो हृदयस्थं कुर्वाणा विजिगीषवे सूचयितुम् ॥ २७ ॥

( निर्गच्छेयुरिति । ) निर्गच्छेयुः राजगृहं विशेयुश्च । सर्ववार्ताविदः सर्वेषां वार्ता प्रवर्तनं क प्रवर्तन्त इति तद्विदोऽन्वहं प्रतिदिनम् । चरा नृपतेः सकाशं चक्षुर्दूरचरं दूरे पि व्यवहितेऽपि चरतीति । इतरच्चक्षुर्दूरचरं न भवति॥२८॥

( सूक्ष्मेति । ) सूक्ष्मं परैरनुपलक्षितं, सूत्रं गूढतरं परवृत्तान्तानां सूचनं, तदर्थं प्रचरणं यद्गूढपुरुषाणां तेन । पश्येज्जानीयात् वैरिविचेष्टितं विजिगीषुः । हि यस्मात् स्वपन्नपि जागर्ति निद्रां गच्छन्नपि जागर्ति चारचक्षुर्महीपतिः । चारचक्षुषा प्रत्यक्षीकृतजगद्वृत्तान्तत्वात् ॥ २९ ॥

विवस्वानिव तेजोभिर्नभस्वानिव चेष्टितैः।
राजा चारैर्जगत् कृत्स्नं व्याप्नुयाल्लोकसम्मतैः ॥३०॥
चारचक्षुर्नरेन्द्रस्तु सम्पतेत् तेन भूयसा।
अनेनासम्पतन् मार्गात् पतत्यन्धः समेऽपि हि ॥ ३१ ॥
सर्वसम्पत्समुदयं सर्वावस्थाविचेष्टितम्।
चारेण द्विषतां विद्यात् तद्देशप्रार्थनादि च ॥ ३२ ॥
प्रकाशश्चाप्रकाशश्च चरस्तु द्विविधः स्मृतः।

---

नभस्वान्—वायुः। चेष्टितैर्गतिभिः। जगत् कृत्स्नं व्याप्नुयात्, तन्मत-परिच्छित्त्यै। लोकसम्मतैरिति—यस्य यद्देशभाषादिष्वभिरतिरस्ति तस्य तदीयदेशादितया सम्मतैः ॥ ३० ॥

तेन भूयसा चरसंज्ञकेन चक्षुषा प्रभूततरेण। तेनासम्पतन्, किन्तु मांसचक्षुषैव प्रवर्तते। स च कृत्स्नलोकतत्त्वापरिज्ञानान्मूढोऽन्धोऽधः पतति, न पश्यति। समेऽपि स्थले विषममार्गे किं पुनरित्यर्थात् ॥ ३१ ॥

वैरिविचेष्टितमिति सामान्येनोक्तं विशेषेणाह—सर्वसम्पत्समुदयमिति। सर्वेषाममात्यादीनां सम्पदं समुदयं च कोशम्। सर्वावस्थाविचेष्टितं सर्वासु व्ययमानव्यवस्थासु विचेष्टितम्। तद्देशप्रार्थनादि चेति, आदिशब्दादर्थकोशप्रार्थनम् ॥ ३२ ॥

यथा चरेण विद्यात्तथा दूतेनापि, तस्यापि चरत्वादित्याह—प्रकाश इति।

---

( विवस्वानिवेत्यादि )......॥ ३० ॥

( चारेति। ) चारा एव चक्षुर्यस्य ( सः ) नरेन्द्रः स्यात्। सम्पतेत् सञ्चरेत् तेन निर्णीय। चारमयेन चक्षुषा अनिर्णीय सम्पतन् गच्छन् मोहात् अज्ञानात् पतति राजा। अन्धश्चारमयचक्षूरहितत्वात् समेऽपि अविषमे पि पतति यस्मात् ततश्चारचक्षुषा भवितव्यमिति ॥ ३१ ॥

( सर्वेति। ) चारेण गूढपुरुषेण द्विषतां सर्वसम्पत्समुदयं कोशदण्डजनपदादीनां या सम्पत् तस्याः समुदयः उदयस्तं सर्वावस्थासु विचेष्टितं विद्यात् तद्देशप्रार्थनानि च जानीयात् ॥ ३२ ॥

प्रसङ्गाद्दूतस्यापि चारत्वं स्थापयन्नाह—( प्रकाश इति। ) प्रकाशः प्रकटः। अप्रकाशः प्रच्छन्नः। चारस्तु द्विविधः स्मृतः पूर्वाचार्यैः। अप्रका-

अप्रकाशोऽयमुद्दिष्टः प्रकाशो दूत उच्यते ॥ ३३ ॥
चरेण प्रचरेत् प्राज्ञः सूत्रेणर्त्विगिवाध्वरे ।
दूते सन्धानमायत्तं चरे चर्या प्रतिष्ठिता ॥ ३४ ॥
संस्थानवत्यः संस्थाश्च कार्याः कार्यसमृद्धये ।
तिष्ठेयुर्यासु सञ्चाराः परचर्योपवेदिनः ॥ ३५ ॥

---

अ मनन्तरोक्तोऽप्रकाशः । प्रकाशो दूतो यः प्रागुक्तः, सोऽपि चरः परचर्यानु चरतीति कृत्वा ॥ ३३ ॥

सूत्रेणेति—कात्यायनीयादियज्ञसूत्रेण । दूते सन्धानमायत्तं, प्राधान्येन तस्य सन्धिविग्रहनियुक्तत्वात् । इतरदानुषङ्गिकं कर्म वेदितव्यम् । चरे चर्या प्रतिष्ठिता, अप्रकाशे चरे परप्रचारज्ञानं निश्चितम् ॥ ३४ ॥

अप्रकाशाश्चराः संस्था नामानश्च सन्तीत्याह—संस्थानवत्य इत्यादि । संस्थानं—वेषश्चरितञ्च, तदुपेताः संस्थाश्चराः कार्याः । सञ्चारा वक्ष्यमाणाः ॥ ३५ ॥

---

शोऽयमनन्तरमुद्दिष्टः तपस्विव्यञ्जनाद्याच्छादितराजपुरुषत्वः । प्रकाशो दूत उच्यते । दूतोऽपि सर्ववार्तावित् भवति, चरति मण्डला तराणीति चारः ॥ ३३ ॥

( चारेणेति । ) चारेण गूढपुरुषेण प्रचरेत् पृथ्वीलाभपालनार्थं व्यवहरेत् । सूत्रेण वेदो( कल्पो ? )क्तवाक्येन ऋत्विगिवाध्वरे "सत्रे । दूते सन्धानमायत्तं दूतसाध्यत्वात्सन्धानस्य, चारे चर्या गत्यागमः प्रतिष्ठित इति ॥ ३४ ॥

गूढपुरुषानेव संस्थासंज्ञकानभिधातुमाह—( संस्थानवत्य इति । ) संस्थानमेकस्मिन्नेव प्रदेशेऽवस्थितिस्तद्वत्यः । तथा च कौटिल्यः—" दुर्गेषु वणिजः संस्था दुर्गान्ते सिद्धतापसाः । कर्षकोदास्थिता राष्ट्रे राष्ट्रान्ते व्रजवासिनः " इति । संस्थाश्च कार्याः कार्यसंसिद्धये इत्यर्थः । तिष्ठेयुर्यत्र सञ्चाराः चराः यत्र च तिष्ठेयुरिति । तथा च कौटिल्यः—" प्रव्रज्याप्रत्यवसितः प्रज्ञाशौचयुक्तः उदास्थितः स वार्ताकर्मप्रदिष्टायां भूमौ प्रभूतहिरण्यान्तेवासी कर्म कारयेत् । कर्मफलाच्च सर्वप्रव्रजितानां च ग्रासाच्छादनावसथान् प्रतिविदध्यात् । वृत्तिकामांश्चोपजापेत् । एतेनैव वेषेण राजार्थश्चरितव्यो भक्तवेतनकाले चोपस्थातव्यमिति" । एवं चराणां यत् संस्थानं तद्वत्यस्तिष्ठेयुर्यासु सञ्चाराः परचर्यापवाहिन इति प्रतीतम् ॥ ३५॥

वणिक् कृषीवलो लिङ्गी भिक्षुकोऽध्यापकस्तथा।
संस्थाः स्युश्चारसंस्थित्यै दत्तदायाः सुखाशयाः ॥३६॥
स्वपक्षे परपक्षे च यावान् कश्चिद् विवक्षितः।
सर्वस्मिंस्तत्र सञ्चारास्तिष्ठेयुश्चित्तवेदिनः ॥ ३७ ॥

---

किंसंस्थानाः संस्थाः स्युरित्याह—वणिगित्यादि । वणिक् वैदेहक इति । द्वितीयनामा । कृषीवलो गृहपतिरिति द्वितीयनामा । लिङ्गी मुण्डो जटिलो वा तापसः । भिक्षुक इति कुत्सायां कन्, तस्य प्रव्रज्याप्रत्यवसितत्वात् । तस्योदास्थित इति द्वितीयं नाम । अध्यापकश्छात्रवृत्त्या स्थितः । तस्य कापटिक इत्यपरं नाम । तथा चोक्तम्, " गूढपुरुषानुत्पादयेत्, कापटिकोदास्थितगृहपतिकवैदेहकतापसव्यञ्जनान् सत्रितीक्ष्णरसदभिक्षुकीश्चेति " ( कौ० अ० — ११–७ ) एषु पञ्चसु सञ्चाराः सन्तिष्ठन्त इति संस्थाः । यदाह—चारसंस्थित्यै इति । सञ्चाराणां हि वैदेहकादिभिर्ग्रासाच्छादनादिसम्पादनात्तैरपि तत्र प्रचारार्पणात् । दत्तदायाः कल्पितवृत्तयः । सुखाशया इति, आशयशब्दोऽत्रावस्थाने वर्तते, सुखावस्थाना इत्यर्थः । तथा ह्याशयाशो वह्निरुच्यते । अन्ये सुखाश्रया इति स्पष्टमेव पठन्ति ॥ ३६ ॥

स्वपक्षे परपक्षे च- स्वविषये परविषये च । यावान् कश्चिद्विवक्षितः कार्ययोगितया तत्र कार्ययोगीन्यष्टादश तीर्थानि सम्भवन्ति । तद्यथा " मन्त्रिपुरोहितसेनापतियुवराजदौवारिकान्तर्वंशिकप्रशास्तृसमाहर्तृसन्निधातृप्रदेष्टृनायकपौरव्यावहारिकपरिषदध्यक्षदण्डदुर्गान्तपालाटविकाः " तत्र—सर्वस्मिंस्तिष्ठेयुः ॥ ३७ ॥

---

( वणिगिति । ) वणिगिति वैदेहकव्यञ्जनः । कृषीवल इति कर्षकव्यञ्जनः । लिङ्गीति मठपतिव्यञ्जनः । भिक्षुकः सिद्धतापसव्यञ्जनः । अध्यापकः उपाध्यायव्यञ्जनः । तथा च कौटिल्यः—" कापटिकोदास्थितगृहपतिकवैदेहकतापसव्यञ्जनाः प्रणिधय " इति संस्थाः स्युश्चिरसंस्थित्यै दत्तदाया दत्तभक्तवेतनाः शुभाशयाः शुद्धचित्ताः स्वामिभक्ता इत्यर्थः ॥ ३६ ॥

( स्वपक्ष इति । ) स्वपक्षे स्वमण्डले । परपक्षे शत्रुमण्डले मित्रोदासीनमध्यमेषु । यावान् कश्चिद्विलक्षितः प्रधानभूतः सर्वस्मिन् तत्र सञ्चारास्तिष्ठेयुश्चित्तवेदिन इति मतीतम् ॥ ३७ ॥

तीक्ष्णः प्रव्राजिता चैव सत्री रसद एव च।
एते प्रधानं सञ्चाराः सर्वे नान्योन्यवेदिनः ॥ ३८ ॥
स्वपक्षे परपक्षे वा यो न वेद चिकीर्षितम्।
जाग्रत्स्वरिषु सुप्तोऽसौ न भूयः प्रतिबुध्यते ॥ ३९ ॥

---

के पुनस्ते सञ्चारा इत्याह—तीक्ष्ण इत्यादि । यः शूरस्त्यक्तात्मा निस्त्रिंशः स तीक्ष्णः । तस्य प्राधान्येन शस्त्रव्यापारे नियोगः । प्रव्राजिता गृहीतलिङ्गा भिक्षुकी । सत्रं छद्म चरितं तेनात्मच्छादनात् । वक्ष्यति च " सत्रं छद्म प्रकीर्तित " मिति । ( स० १९ श्लो० ६८ ) तदस्यास्तीति सत्री । स च स्त्रीपुंसलक्षणाद्यभिज्ञापदेशचारितया परान् विश्वासयति । रसदो विषस्य दाता । एते प्रधानं सञ्चारयन्तीति सञ्चाराः । सर्वे नान्योन्यवेदिन इति, संस्थाः संस्थान्तरवेदिनः सञ्चाराश्च सञ्चारान्तरवेदिनो न स्युः संवादपरिहारार्थम् । एकस्मिन्वा परिज्ञाते मा भूत्सर्वग्रहणमिति ॥ ३८ ॥

यो न वेद चिकीर्षितं, तीर्थप्रणिहितैः सञ्चारैः । जाग्रत्सु—विजिगीषोश्छिद्रान्वेषणतत्परेषु । सुप्तो निश्चिन्तः । न प्रतिबुध्यते न पुनश्चेष्टते, विनाशाभ्युपगतत्वात् ॥ ३९ ॥

---

सञ्चारभेदानाह ( तीक्ष्ण इति । ) तीक्ष्णः क्रूरकर्मा शस्त्रेण घातकः। प्रव्रजितो लिङ्गिव्यञ्जनः । सत्रीति सत्रं छद्म तद्विद्यते । लक्षणानि च—सत्रिणः ये चास्य सम्बन्धिनो वश्यभर्तव्यास्ते लक्षणमङ्गविद्यां जम्भकविद्यां मायागतमाश्रमधर्मं निमित्तमन्तरचक्रमित्यधीयानाः । तीक्ष्णलक्षणं—ये जनपदे शूरास्त्यक्तात्मानो हस्तिनं व्यालं वा द्रव्यहेतोः प्रतियोधयेयुस्ते तीक्ष्णाः । ये च पुनर्बन्धुषु निस्नेहाः क्रूराश्चालसास्ते रसदा विषदायिनः । एते ज्ञेयास्तु सञ्चाराः । सर्वे नान्योन्यवेदिन इति परस्परविज्ञाने एको विधृतस्त्वन्यान् ख्यापयतीति ॥ ३८ ॥

चाराणां संस्थानकरणे प्रयोजनमाह ( स्वपक्ष इति । ) स्वपक्षे स्वमण्डले । परपक्षे परमण्डले । यो राजा न वेद न जानीयात् चिकीर्षितं कर्तुमीप्सितं विरुद्धमित्यर्थादापद्यते; जाग्रद्रिपुषु विनिद्रेषु सावधानेषु इत्यर्थः सुप्तो राजा निरवधानो विरुद्धचिकीर्षितानाभिज्ञो न भूयः प्रतिबुध्यते । दीर्घनिद्रां तत्कृतातिसन्धानैर्याति ॥ ३९ ॥

कारणाकारणक्रुद्धान् बुध्येत स्वपरिग्रहे ।
पापानकारणक्रुद्धांस्तूष्णीं दण्डेन साधयेत् ॥ ४० ॥
ये तु कारणतः क्रुद्धास्तान् वशीकृत्य संविशेत् ।
शमयेद् दानमानाभ्यां छिद्रमण्वप्यरेर्मुखम् ॥ ४१ ॥
कण्टकान् मुखभङ्गेन राज्यस्य प्रशमं नयेत् ।

---

तत्र स्वपक्षे विजिगीषोश्चरैः सह व्यापारमाह—कारणाकारणक्रुद्धानिति । विजिगीषोर्दोषेण वा क्रुद्धान् बुद्ध्येत । सत्रिभिरिति शेषः । स्वपरिग्रहे स्वपक्षे । पापानिति दुष्टान्, अकारणक्रुद्धान्, तूष्णींदण्डेन साधयेत् । तीक्ष्णैरुपांशु हन्यात् । अपापांस्तु कारणक्रुद्धान् कारणनिवृत्त्या परिक्लेशार्थहरणाभ्यां यथायोगं साधयेदित्यर्थोक्तम् ॥ ४० ॥

तान् वशीकृत्य वक्ष्यमाणप्रकारेण संविशेत् सुप्यात्, निश्चिन्तः स्यादित्यर्थः । छिद्रं प्रकृतिदोषाः क्रोधलोभभयमानाख्याः । तच्चारेर्मुखं द्वारम्, तेन तस्य प्रवेशात् । तदल्पमप्युपेक्षितमनर्थाय भवति तत्र क्रुद्धं मानिनश्च दानमानाभ्यां द्वियोगेन शमयेत् । शेषयोः शमनं वक्ष्यति ॥ ४१ ॥

कण्टकान् राज्यस्येति सम्बन्धः । मुखभङ्गेन प्रधानवधेन । हते मुख्ये

---

गूढपुरुषैर्विदितवृत्तान्तस्य विधेयमाह—( कारणेति । ) कारणैः प्रतिश्रुत्यार्थात् विप्रलब्धा इत्यादिकैर्विप्रलब्धा अकृतार्थाः इत इति कारणक्रुद्धान् । अकारणक्रुद्धान् जन्मान्तरशत्रून् । बुद्ध्येत जानीयात् । स्वपरिग्रहे स्वकीयभृत्यवर्गे । पापान् दुष्टान् अकारणक्रुद्धान् जन्मान्तरायातवैरान् तूष्णीमुपांशुवधेन तीक्ष्णरसदादिविहितेन साधयेत् । अकारणक्रुद्धसम्भवोऽपि श्रूयते—

" मुनेरपि वनस्थस्य स्वानि कर्माणि कुर्वतः ।
उत्पद्यन्ते त्रयः पक्षा मित्रोदासीनशत्रवः ॥ "

इति वचनात् ॥ ४० ॥

( य इति । ) ये तु कारणतो राजदोषात् क्रुद्धास्तान् दानमानाभ्यां शमयेत् उपशान्तक्रोधान् कुर्यात्, अनन्तरं तत्पक्षपरिग्रहणेन वशीकृत्य संवसेत् तैः सह संवासं कुर्यात् । नान्यथा कुत इत्यत आह—छिद्रमण्वपि परिजनस्य भर्तरि क्रोधलोभादि रन्ध्रमरेर्मुखं द्वारं तेन प्रविश्यारिरपकरोतीति ॥ ४१ ॥

( कण्टकानिति । ) कण्टका इव ते राज्यस्य राज्ञश्च पीडाकराः कारुकवैदेहकोपनिपाताः । सर्वेऽपि स्वामिद्रोबुद्ध्यो राज्यकण्टकारतान् मुखभङ्गेन;

उद्युक्तः सामदानाभ्यां छिद्रं च परिपूरयेत् ॥ ४२ ॥
अणुनापि प्रविश्यारिश्छिद्रेण बलवत्तरम् ।
निःशेषं मार्जयेद्राज्यं यानपात्रमिवोदकम् ॥ ४३ ॥
जडमूकान्धबधिरच्छद्मानः पण्डकास्तथा ।
किरातवामनाः कुब्जास्तद्विधा ये च कारवः ॥ ४४ ॥
भिक्षुक्यश्चारणा दास्यो मालाकाराः कलाविदः ।

---

शेषाणां प्रशमनात् । छिद्रञ्च परिपूरयेदिति—भीतं लुब्धञ्च सामदानाभ्यां द्वियोगेन परितोषयेत् ॥ ४२ ॥

बलवत्तरं ज्यायांसम् । मार्जयेन्नाशयेत् ॥ ४३ ॥

परपक्षे प्रणिहितानां व्यापारमाह—जडेत्यादि । जडादिच्छद्मानः प(ष)ण्डकादयश्चान्तःपुरप्रवेशार्हा अविश्वा( शार्हा विश्वा ? )स्याश्च भवन्ति । तद्विधा ये च कारवो वामनकुब्जादिरूपा वर्धक्यादयः ॥ ४४ ॥

चारणा नटनर्तकादयः । कलाविदश्चित्रादिकुशलाः, ये छत्रादिधारणे-

---

यथा कण्टको मुखभङ्गे कृते पीडां न करोति, एवं दण्डेन कण्टकत्वे त्याजिते कारुकवैदेहकादयोऽन्येऽपि दण्डभयात् कण्टकत्वं त्यजन्ति । एवं कण्टकान् प्रशमं नयेत् । उद्युक्तः कृतादरो विजिगीषुः सामदानाभ्यां छिद्रं रक्षाशैथिल्यं च पूरयेत् । अच्छिद्रं राज्यं च कुर्यात् ॥ ४२ ॥

छिद्रप्रतिपूरणे प्रयोजनमभिधातुमाह—( अणुनेति । ) अणुनापि छिद्रेण रक्षाशैथिल्यादिना प्रविश्यारिरुदकमिव बलवत्तरं शक्तित्रयेणापि दुर्जयं, यानपात्रमपामिव बलवत्तरं निःशेषमखिलं मज्जयेत्, आपदम्भाधौ निमग्नं कुर्यात्, विनाशयेदित्यर्थः, राज्यं स्वाम्यादिकं सप्ताङ्गमपि ॥ ४३ ॥

स्वपक्षे मुख्यतरेषु चिकीर्षितज्ञानार्थं गूढपुरुषप्रणिधानार्थमाह—( जडेति । ) जडा मूकत्व—बधिरत्वाभ्यां युक्ताः । मूका वक्तुमनभिज्ञाः । बधिराः श्रवणशक्तिरहिताः । अन्धा दृक्शक्तिहीनाः । तच्छद्म विद्यते येषाम् । अत्रापि छद्मशब्दो द्रष्टव्यः । पण्डकाः षण्डाः । किराता निर्गतपृष्ठाः । कुब्जा वक्रावयवाः । वामना असम्पूर्णावयवाः ह्रस्वतराः । तद्विधा इति राजप्रयुक्ताः । कारवः सुवर्णकारादयः ॥ ४४ ॥

( भिक्षुक्य इति । ) भिक्षुक्य इति विश्वासयोगात् भिक्षुक्यङ्गनाः । भि-

अन्तःपुरगतां वार्तां निर्हरेयुरलक्षिताः ॥ ४५ ॥
छत्रव्यजनभृङ्गारयानवाहनधारिणः ।
महामात्रा बहिर्वार्तां विद्युरन्ये च तद्विधाः ॥ ४६ ॥
अन्नव्यञ्जनकर्तारः कल्पकाः स्नापकास्तथा ।
प्रसाधका भोजकाश्च गात्रसंवाहका अपि ॥ ४७ ॥
जलताम्बूलकुसुमगन्धभूषणदायकाः ।
कर्तव्या रसदा ह्येते ये चान्येऽभ्याशवर्तिनः ॥ ४८ ॥
संज्ञाभिर्म्लेच्छितैर्लेख्यैराकारैरिङ्गितैरपि ।

---

नान्तःपुरप्रवेशार्हाः ॥ ४५ ॥

महामात्रा हस्तिशिक्षानियुक्ताः । अन्ये च तद्विधा रथारोहाश्वारोहादयः महाश्वपतिकादयः ॥ ४६ ॥

अन्नव्यञ्जनकर्तारः, भक्तसूपकादिरन्धकाः । कल्पकाः नापिताः । गात्रसंवाहकाः मर्दकाः ॥ ४७ ॥

दायकशब्दो जलादिभिः प्रत्येकं योज्यः । अभ्याशवर्तिनः समीपवर्तिनः ॥ ४८ ॥

अन्तःपुरगतानां बहिरनिष्कासे प्रसारसञ्चारणोपायमाह—संज्ञाभिरिति ।

---

क्षुक्यो वा अहद्बुद्धपरिव्राजिकाः । चारणा नग्ना( नाट्या ? ) चार्यादयः । दास्यो गृहगतां वार्तां प्रवृत्तिं निर्हरेयुः निःसारयेयुः विजिगीषुं प्रतिपादयितुमलक्षिताः केनाप्यविज्ञाता इति ॥ ४५ ॥

( छत्रेति । ) छत्रमातपवारणम् । व्यजनं स्वेदापनयार्थो मयूरपिच्छादिकृतः । भृङ्गारो जलपात्रम् । यानं शिबिकादि । वाहनं हस्त्यश्वादि तद्धारिणः । महामात्राबहिर्वार्ता—महती मात्रा प्रमाणवृद्धिर्येषां ते महामात्रा मन्त्रिपुरोहितादयः तेषां बहिर्गतां वार्तां, विद्युर्विजानीयुः । अन्येऽपि उक्तव्यतिरिक्तास्तद्विधा इत्युभयवेतना इति ॥ ४६ ॥

( सूदेति । ) इति प्रतीतम् ॥ ४७ ॥

( जलेति । ) रसशब्देन विषमभिधीयते, ये चान्ये समीपवर्तिनस्तेषां विपदानं सुकरामिति ॥ ४८ ॥

वार्तायां लब्धायां युक्तिसम्पादनार्थमाह—( संज्ञाभिरिति । ) संज्ञाभिः स-

सञ्चारयेयुरव्यग्राश्चाराश्चर्या परस्परम् ॥ ४९ ॥
समापिबन्तो जगतां मतानि जलानि भूमेरिव सूर्य-
पादाः ।
अनेकशिल्पाध्ययनप्रवीणाश्चाराश्चरेयुर्बहुलिङ्गि-
रूपाः ॥ ५० ॥
येन प्रकारेण परानुपेयात् परावरज्ञः स्वसमृद्धिहेतोः ।

---

पूर्वसङ्केतितवीणादिवाद्यसंज्ञाभिः । म्लेच्छितैः अव्यक्तवचनैः । लेख्यैर्गूढैः । आकारैर्मुखनयनादिविकारैः । इङ्गितैश्चेष्टितैः । सञ्चारयेयुः परस्परामिति सम्बन्धः । अव्यग्राः सावधानाः ॥ ४९ ॥

सङ्क्षेपेण च व्यवहारमाह—अनेकशिल्पाध्ययनप्रवीणाः विश्वासार्थं बहुविधलिङ्गिरूपाः ॥ ५० ॥

मुण्डजटिलादिरूपेण यथा विजिगीषुः सञ्चारान् प्रणिधत्ते तथा परोऽपीति, तत्प्रतिविधानं श्लोकेनाह—येन प्रकारेणेति । तापसव्यञ्जनादिप्रणिधानप्रकारेण । परावरज्ञः -परात्मवित् , तत्प्रकारेण ( तं प्रकारं ) स्वस्थमतिः--सावधानः

---

ङ्केतैरङ्गुलीभिर्वा अक्षरैरवयवसंस्थादिभिः ( याः ) कृतास्ताभिः । आकारैः शरीराकारस्यान्यथात्वैः । इङ्गितैः क्रियाया अन्यथात्वैः । तथा च कौटिल्यः—" इङ्गितमन्यथावृत्तिराकृतिग्रहणमाकार " इति । अव्यग्रा अनाकुलाः । चरा गूढपुरुषाः । चर्या महामात्रादीनामाचरणानि । परस्परामिति तीक्ष्णरसदाः सत्रिषु, सत्रिणः संस्थासु, संस्था अन्तेवासिषु, अन्तेवासिनो राज्ञीति ॥ ४९ ॥

उपसंहरन्नाह—( समापिबन्त इति । ) जगतामित्युपचारात् जगन्निवासिनामभिमतानि चेष्टितानि समन्तात् समापिबन्तः आत्मस्थानि कुर्वन्तः सूर्यरश्मय इव चारा जलानीव जगतां मतानि सूर्य इव विजिगीषौ समर्थयितुं चरेयुरिति सम्बन्धः ॥ ५० ॥

विजिगीषौ परप्रयुक्तगूढपुरुषैरतिसन्धानप्रतीकारार्थमाह—( येनेति । ) येन प्रकारेण, परापरज्ञ --परं नीतिशास्त्रमपरमिति लोकवृत्तं तदुभयं जानातीति सः, येन प्रकारेण गूढपुरुषादिप्रणिधानेः परान् शत्रून् उपेयादित्यतिसन्दध्यात् स्वसमृद्धिहेतोः । तं प्रकारमात्मनि परेण नियुज्यमानं ततस्तज्ज्ञैः गूढपुरुषैः स्वस्थमति-

तन्मात्मनि स्वस्थमतिश्च तज्ज्ञैः प्रयुज्यमानश्च परेण
विद्यात् ॥ ५१ ॥

इति चरविकल्पो नामैकोनविंशं प्रकरणम् ।

इति श्रीकामन्दकीये नीतिसारे दूतप्रचार--चरविकल्पौ नाम
त्रयोदशः सर्गः ।

---

तज्ज्ञैः तत्प्रकारज्ञैः स्वचरैर्विद्यादिति सम्बन्धः ॥ ५१ ॥

इत्येकोनविंशं चरविकल्पप्रकरणम ।

इति शङ्करार्यकृतायां नीतिसारपञ्जिकायां जयमङ्गलायां दूतप्रचार–
चरविकल्पौ नाम त्रयोदशः सर्गः ।

---

भूत्वा विद्यात् जानीयात् ज्ञात्वा प्रतिविदध्यादिति भावः ॥ ५१ ॥

( इति चरविकल्पप्रकरणमेकोनविंशम् । )

इति कामन्दकीयनीतिसारटीकायामुपाध्यायनिरपेक्षायां दूतप्रचारचर-
विकल्पौ नाम त्रयोदशः सर्गः ॥

## अथ चतुर्दशः सर्गः ।

### २० अथ उत्साहप्रशंसाप्रकरणम् ।

अन्वहं चरचर्याभिर्विफले दूतचेष्टिते ।
यायाद् यथोक्तयानस्तु सूक्ष्मबुद्धिपुरःसरः ॥ १ ॥
सूक्ष्मा सत्त्वप्रयत्नाभ्यां दृढं बुद्धिरधिष्ठिता ।

---

## अथ चतुर्दशः सर्गः ।

### २० उत्साहप्रशंसाप्रकरणम् ।

सन्धिवि-हार्थं प्रहितेऽपि दूते यथाभिहिततापसव्यञ्जनादिप्रणिधानप्रकारेण च यथाप्रस्तुतकार्यासिद्धौ स्वयमेव यायादित्याह—अन्वहमित्यादि । चरचर्याभिरिति चारप्रचारैः सह । विफले—इदमुक्तं भवति सन्धाने यो मन्त्रिव्यापारः, चराणाञ्च कृत्यपक्षोपजापादौ येऽन्वहं प्रचाराः, तेषु विफलेषु, यदि वा चैरेव कृतोपजापत्वाद्विफलीकृते दूतचेष्टिते । यथोक्तयानः "उत्कृष्टबलवीर्यस्य विजिगीषोर्जयैषिणः ॥ गुणानुरक्तप्रकृतेर्यात्रा यानमिति" (स० ११ श्लोकः १) अनेन शक्तिदेशकालबलान्वितो यायादित्यर्थः । सूक्ष्मबुद्धिपुरःसरः सूक्ष्मया बुद्ध्या प्राङ्निरूपिताभ्युच्चयत्वात्—तत्पुरस्सरः ॥ १ ॥

अभ्युच्चयश्च व्यसनिनो न सम्भवति इति तत्प्रतीकारार्थं तावत्सर्गद्वयेन षाड्गुण्यशेषभूता व्यसनचिन्ता क्रियते । तत्रास्मिन् सर्गे प्रकरणत्रयम् । उत्साह-

---

## अथ चतुर्दशः सर्गः ।

### २० अथ उत्साहप्रशंसाप्रकरणम् ।

अनन्तरोक्तदूतप्रचारचारविकल्पयोः सम्बन्धं दर्शयन्नुत्साहप्रशंसा—प्रकृतिकर्म—प्रकृतिव्यसनानि च दर्शयन्नाह—( अन्वहमिति । ) अन्वहं प्रतिदिनं चरचर्याभिर्गूढपुरुषगत्यागमैः विफले दूतचेष्टिते निर्णीते इति वाक्यशेषः । दूतचेष्टितवैफल्यञ्च सन्धेरभावात् । तथा चानन्तरमेवोक्तम्—"दूते सन्धानमायत्तम्" इति । ततश्च यायात् विजिगीषुर्यथोक्तयानो यथा अत्रैवोक्तं यानं तद्विद्यते यस्य (सः) । तत् यानाख्यं गुणमातिष्ठेदित्यर्थः । सूक्ष्मबुद्धिपुरःसरः सूक्ष्मातिदुर्लक्ष्या सर्वत्राप्रतिहतप्रवेशा बुद्धिः पुरःसरा ऽस्य स मतिप्रधान इत्यर्थः ॥ १ ॥

सूक्ष्माया बुद्धेः सामर्थ्यं दर्शयन्नाह—( सूक्ष्मेति ।) सूक्ष्मा सत्त्वप्रयत्नाभ्यामिति । सूक्ष्मा अनन्तरोक्तबुद्धिः । सत्त्वप्रयत्नाभ्यामिति । सत्त्वं व्यसनेऽभ्युदये च यदविकारिता, व्यसने विषादमभ्युदये च हर्षं यन्न करोति तत् सत्त्वं नाम गुणः ।

प्रसूते हि फलं श्रीमदरणीव हुताशनम् ॥ २ ॥
धातोश्चामीकरमिव सर्पिर्निर्मथनादिव ।
बुद्धिप्रयत्नोपगताद् व्यवसायाद् ध्रुवं फलम् ॥ ३ ॥
धीमानुत्साहसम्पन्नोऽध्यवसायसमन्वितः ।

---

प्रशंसा, प्रकृतिकर्म, प्रकृतिव्यसनानि च । तत्रोत्साहपूर्वकत्वाद्यानादिचिन्ताया इति तत्प्रशंसोच्यते षोडशभिः श्लोकैः । तत्र सूक्ष्मापि बुद्धिः सत्त्वानधिष्ठिता निष्प्रयत्ना चाफलेत्याह—सूक्ष्मेत्यादि । सत्त्वप्रयत्नाभ्यामिति । सत्त्वं—व्यसनेऽभ्युदये चाविकारकरं, अध्यवसायकरं वा । प्रयत्नो बुद्धेर्व्यापारः ऊहापोहलक्षणः । आभ्यां दृढमत्यर्थम् । अधिष्ठिता सूक्ष्मा बुद्धिः फलं प्रसूते । श्रीमदुत्कृष्टम् ॥२॥

उत्साहोऽपि बुद्धिप्रयत्नपूर्वकः क्रियमाणः फलवानित्याह—धातोरित्यादि । बुद्धिप्रयत्नोपगतादिति । यः सत्त्वाधिष्ठिताया बुद्धेर्व्यापारस्तद्युक्तादित्यर्थः । व्यवसायादिति । समुत्थानमुत्साहो व्यवसाय इत्येकार्थाः । तस्मात्त्रितययोगादेव फलम् ॥ ३ ॥

तदेव स्फुटयन्नाह—धीमानुत्साह...त इति ( अध्यवसायस—( प्रभुशक्त्येति पाठः ) तत्र बुद्धेः कार्यालोचनम् । उत्साहाद्योगक्षेमसाधनम्, सत्त्वात्फलाध्य-

---

येन प्रेरितः इन्द्रियग्रामः प्रवर्तते स प्रयत्नः । ताभ्यां दृढमत्यर्थं बुद्धिरनन्तरोक्ताधिष्ठिता व्याप्ता । प्रसूते निष्पादयति । हि स्फुटम् । फलं पृथिवीलाभपालनादिकम् । श्रीमदिति शोभान्वितम् । अरणीव शम्यादिकाष्ठं यत्राग्निर्निष्पद्यते सेव हुताशनं प्रसूते । तस्माद् बुध्यर्थं प्रयतेतेति भावः ॥ २ ॥

एतदेव दृढयितुमाह—( धातोरिति । ) धातोरिव मृत्पाषाणादेश्चामीकरं सुवर्णमिव । सर्पिर्घृतं निर्मथनाद् दध्न इवेति वर्तते । बुद्धिप्रयत्नोपगतात् व्यवसायादिति । बुद्धिप्रयत्नावुप समीपं गतौ यस्य व्यवसायस्य तस्मात् । एवं बुद्धिप्रयत्नोपष्टम्भितात् व्यवसायात् ध्रुवं फलं तस्मान्निश्चितफलार्थिना पुरुषेण मन्त्रशक्त्युपष्टम्भितोत्साहशक्तिरनुष्ठेयेति भावः ॥ ३ ॥

अत्रैव तृतीयापि प्रभुशक्तिर्भवति चेदधिकं फलं दर्शयन्नाह—(धीमानिति ।) धीमानित्यनेन मन्त्रशक्तिरुक्ता । उत्साहसम्पन्न इत्यनेनोत्साहशक्तिः । प्रभुशक्त्या समन्वित इति त्रिशक्तिसम्पन्न इत्युक्तं भवति । श्रियां स्यात्परमं पात्रमपामिव

भाजनं परमं श्रीणामपामिव महार्णवः ॥ ४ ॥
नलिनीवाम्बुसम्पत्त्या बुद्ध्या श्रीः परिपाल्यते ।
उत्थानाध्यवसायाभ्यां विस्तारमुपनीयते ॥ ५ ॥
लक्ष्मीरुत्साहसम्पन्नाद् बुद्धिशुद्धं प्रसर्पतः ।
नापैति कायाच्छायेव विस्तारं चोपगच्छति ॥ ६ ॥
वीतव्यसनमश्रान्तं महोत्साहं महामतिम् ।
प्रविशन्ति महालक्ष्म्यः सरित्पतिमिवापगाः ॥ ७ ॥

---

वसानमिति ॥ ४ ॥

तमेव व्यापारं दर्शयति नलिनीवेत्यादिना । बुद्ध्या श्रीः परिपाल्यते, तया रक्षणोपायस्य चिन्त्यमानत्वात् । उत्थानाध्यवसायाभ्यां विस्तारमुपनीयते, अनुद्युक्तस्यानध्यवस्यतो भूतिविस्तारासम्भवात् ॥ ५ ॥

तथा त्रितययोगाद्विभूतेस्तद्भावभाविता प्रतीपप्रार्थना चेति श्लोकद्वयेन दर्शयति– लक्ष्मीरित्यादि । बुद्धिशुद्धमिति क्रियाविशेषणम् । प्रसर्पतः लक्ष्मीमध्यवस्यत इत्यर्थः । नापैति च्छायेवेति तद्भावभावितां दर्शयति ॥ ६ ॥

वीतव्यसनं त्रितययोगादेव । अश्रान्तम् असन्तुष्टम्, महासत्त्वम् । महामतिं सूक्ष्मबुद्धिं । प्रविशन्ति लक्ष्म्य इति ता एव प्रतीपं प्रार्थयन्ते इत्यर्थः ॥ ७ ॥

---

महार्णव इति प्रतीतम् ॥ ४ ॥

तदेव दर्शयन्नाह–( नलिनीति । ) नलिनीवाम्बुसङ्गत्या बुध्याः श्रीः परिपाल्यते रक्ष्यते उच्छेदादित्यर्थः । उत्थानाध्यवसायाभ्यां वातातपसमानाभ्यां विस्तारमुपनीयते न हि सर्वमपि बीजं जलसन्निधावपि वातातपवर्जितं विस्तारमुपयाति ॥ ५ ॥

एतदेव पुनरुच्यते आदरप्रदर्शनार्थम्–( लक्ष्मीरिति । ) इति प्रतीतम् ॥ ६ ॥

( वीतेति । ) वीतं विगतं व्यसनं गुणप्रातिलोम्यादि यस्य तम् । अश्रान्तं सततोद्योगेऽपि यस्य श्रमो नास्ति तम् । अत एव महोत्साहम् । महामतिं महती मन्त्रशक्तिर्यस्येति तम् । प्रविशन्ति सदा लक्ष्म्यः सरित्पतिमिवापगाः इति प्रतीतम् ॥ ७ ॥

सत्त्वबुद्ध्युपपन्नोऽपि व्यसनग्रस्तमानसः।
श्रीभिः षण्ड इव स्त्रीभिरलसः परिभूयते ॥ ८ ॥
उत्थानेनैधयेत् सत्त्वमिन्धनेनेव पावकम्।
श्रियो हि सततोत्थायी दुर्बलोऽपि समश्नुते ॥ ९ ॥
भोक्तुं पुरुषकारेण दुष्टां स्त्रियमिव श्रियम्।
व्यवसायं सदैवेच्छेन्नहि क्लीबवदाचरेत् ॥ १० ॥

---

त्रयाणामप्युत्साहः प्रधानं, तस्य साधकतमत्वादित्याह—सत्त्वबुद्ध्युपपन्नोऽपीत्यादि। व्यसनग्रस्तमानसः, उत्साहवैकल्यादेव ॥ ८ ॥

उत्थानेनैधयेत्सत्त्वमिति उत्साहस्यैव प्राधान्यं दर्शयति। सततमुत्साहेन सम्वर्धयेसत्त्वम। अन्यथा तदागन्तुकत्वादपैत्यपि। ततश्चाध्यवसायाभावान्नासौ फलमश्नुते। सततोत्थायितायान्तु नायं दोष इत्याह—श्रियो हीत्यादि। दुर्बलोऽपि कोशदण्डहीनोऽपि ॥ ९ ॥

शौर्यममर्षः शैघ्र्यं दाक्ष्यं चेति उत्साहगुणाश्चत्वारः। तत्र "श्रीभिरलसः परिभूयते" इत्यनेन दाक्ष्यमुदाहृतम्। शेषानपि श्लोकपञ्चकेन दर्शयति—भोक्तुमित्यादि। पुरुषकारेण शौर्येण व्यवसायमिच्छेत्। अन्यथा कथं पुरुषकारं कुर्यात्। तस्योत्साहगुणत्वात् ॥ १० ॥

---

सत्त्वबुध्युपपन्नोऽपीति प्रतीतम्। सत्त्वबुध्युपपन्नेनाव्यसनिना भवितव्यमिति उत्साहप्रशंसा ॥ ८ ॥

तदेवाह—( उत्थानेनेति ) उत्थानेनोद्योगेनैधयेत् वृद्धिं नयेत् सत्त्वमुक्तलक्षणं व्यसनेऽभ्युदये च यदविकारि। इन्धनेनेव काष्ठादिना पावकं वैश्वानरमिव। सततोत्थायी सत्त्वाधिकस्तु श्रियं हि स्फुटं सदैवोद्युक्तो दुर्बलोऽपि प्रभुशक्तिस( र ? ) हितः समश्नुते प्राप्नोतीति ॥ ९ ॥

एतदेव समर्थयन्नाह—( भोक्तुमिति। ) श्रियं लक्ष्मीं भोक्तुं पुरुषकारेणैवेच्छेत्। न दैवापेक्षी स्यात्। तथा च कौटिल्यः—"दैवप्रमाणो मानुषहीनो निरुद्योगो विपद्यत" इति। दुष्टां स्त्रियमिव अविनीतां योषितमिव श्रियम्। व्यवसायमुद्योगं सदैवेच्छेत्। न हि क्लीबवदाचरेत् षण्ढवन्नाचरेदिति ॥ १० ॥

वशे श्रियं सदोत्थायी सैंहीं वृत्तिं समाश्रितः ।
कचग्रहेण कुर्वीत दुर्वृत्तामिव योषितम् ॥ ११ ॥
किरीटमणिचित्रेषु मूर्धसु त्राणधारिषु ।
नाकृत्वा विद्विषां पादं पुरुषो भद्रमश्नुते ॥ १२ ॥
प्रयत्नप्रेर्यमाणेन महता चित्तहस्तिना ।
रूढवैरिद्रुमोत्खातमकृत्वेह कुतः सुखम् ॥ १३ ॥
हेलाकृष्टस्फुरत्तीक्ष्णखड्गांशुपरिपिञ्जरैः ।

---

वशे श्रियं कुर्वीतेति सम्बन्धः । सैंहीं वृत्तिं शौर्यलक्षणाम् ॥ ११ ॥

मूर्धसु विद्विषामिति सम्बन्धः । त्राणधारिषु—शिरस्त्राणप्रधानेषु । अपकारिणां शिरःसु पदमकृत्वा न भद्रमश्नुते, भद्रं कल्याणम् ॥ १२ ॥

तथा "रूढवैरिद्रुमोत्खातमकृत्वा कुतः सुखमिति" परिभवासहिष्णुतालक्षणममर्षं दर्शयति । प्रयत्नप्रेर्यमाणेनेति । यदा चेतसि संरम्भात्मकः प्रयत्नविशेषः उत्पद्यते, तदा तेन प्रेर्यमाणं चित्तं हस्तिस्थानीयं रूढवैरिद्रुमानुत्खातुं प्रवर्तते ॥ १३ ॥

हेलेत्यादिना शीघ्रतां दर्शयति । हेलया क्षिप्रकारितयाऽऽकृष्टाः स्फुरन्तः

---

(वश इति ।) सदोत्थायी सदोद्युक्तः सैंहीं वृत्तिं सिंहो हि अनपेक्षितदेशकालसहायबल उत्पत्य हन्तीत्येवंविधां वृत्तिं समाश्रितः कचग्रहेण केशाकर्षणेनेव वशे श्रियं दुर्वृत्तां पुंश्चलीं योषितमिव कुर्वीत । अयमापत्कल्पः कादाचित्को न्यायाभावे द्रष्टव्य इति ॥ ११ ॥

भूयोऽप्युत्साहप्रशंसामेवाह—(किरीटमणिचित्रेष्विति ।) रक्षार्थं शिरस्त्राणाश्रितेषु स्वखड्गप्रहारैर्भूतलपातितेषु नाकृत्वा विद्विषां पादं पुरुषो भद्रमश्नुते । अपि तु कृत्वैव राज्यसौख्यं प्राप्नोतीत्यर्थः ॥ १२ ॥

एतदेव समर्थयन्नाह—(प्रयत्नेति ।) प्रयत्नोऽपि विहितलक्षण आत्मगुण हस्तिपकसमस्तेन यः प्रेर्यमाणो महांश्चित्तहस्ती तेन करणभूतेन रूढः सुप्रतिष्ठितो यो वैरिद्रुमस्तस्योत्खातमुन्मूलनमकृत्वेह जगति कुतः सुखं वैरिद्रुमोत्खातं कृत्वैव सुखमित्यर्थः ॥ १३ ॥

(हेलेति ।) तथा हेलया निराकुलत्वेनाकृष्टश्चासौ स्फुरद्दीप्तिः खड्गस्तदंशवः किरणास्तत्परिपिञ्जरैः श्रीमत्करिकराकारैराहितये भुजैर्बाहुभिः श्रियो वि-

श्रीमत्करिकराकारैराह्रियन्ते भुजैः श्रियः ॥ १४ ॥
उच्चैरुच्चैस्तरामिच्छन् पदान्यायच्छते महान्।
नीचो नीचैस्तरां याति निपातभयशङ्कया ॥ १५ ॥
प्रमाणाभ्यधिकस्यापि महत् सत्त्वमधिष्ठितः।
करोत्येव पदं मूर्ध्नि केसरी मत्तहस्तिनः ॥ १६ ॥
गतभीर्भीतिजननं भोगं भोगीव दर्शयेत्।
यथाबलं च कुर्वीत रिपोर्दण्डनिपातनम् ॥ १७ ॥

---

तीक्ष्णा ये खड्गाः, तेषामंशुभिः परिपिञ्जरैर्भुजैरिति सम्बन्धः ॥ १४ ॥

इदानीमुत्साहसंवर्धितस्य सत्वस्य माहात्म्यं दर्शयति । उच्चैरित्यादिना । उच्चैः पदान्यायच्छत इति सम्बन्धः । महान् सत्वाधिकः केसरीव । नीचः सत्वहीनः करीव ॥ १५ ॥

तदेव स्फुटयन्नाह—प्रमाणाभ्यधिकस्यापीति । महत्सत्वमधिष्ठितः महति सत्वे स्थित इत्यर्थः ॥ १६ ॥

गतभीरित्यादिना प्रकरणार्थमुपसंहरति । गतभीरिति सत्वाधिष्ठानं दर्शयति । भोगं—शौर्याद्याभोगम् । यथाबलमिति बुद्धिव्यापारं सूचयति । दण्डनिपातनं शस्त्रव्यापारणः ॥ १७ ॥

---

भूतय इति ॥ १४ ॥

( उच्चैरिति । ) महापुरुष रुच्चैः पदमिच्छन् उच्चैस्तरां पदान्यायच्छते आददाति । अत्युच्छ्रिततरं पर्वतशिखरमारुरुक्षुरत्युच्चतरपदविन्यासादभिमतस्थानं प्राप्नोति नान्यथा । निपातभयशङ्कया तु ( नीचो ) नीचैः पदानि प्रयच्छन्नीचैस्तरां प्राति पततीत्यर्थः ॥ १५ ॥

एतदेव समर्थयन्नाह—( प्रमाणेति । )........इति पदं विधत्ते । एवं च महत्सत्वमधिष्ठितो यो भवति स लघीयानपि महान्तमप्यधः करोतीति भावः ॥ १६ ॥

यद्यप्युत्साहप्रशंसापरैरेवमभिधीयते तथापि( स्व )परबलाबलविमर्शपूर्वकं विचेष्टितव्यमिति दर्शयन्नाह—( गतेति । ) गतभीर्निर्भयो भूत्वा भोगीव सर्प इव भोगं फटाटोपं भीतिजननं दर्शयेत् । यथाबलं च स्वबलापेक्षया प्रकुर्वीत रिपोर्दण्डनिपातनं नान्यथेति ॥ १७ ॥

इत्युत्साहप्रशंसा नाम विंशं प्रकरणम् ।

---

## २१ अथ प्रकृतिकर्मप्रकरणम् ।

**प्रकृतिव्यसनं यस्मात् तत् प्रशाम्य समुत्पतेत् ।**

---

इत्युत्साहप्रशंसा नाम विंशं प्रकरणम् ।

---

### २१ अथ प्रकृतिकर्म नामैकविंशं प्रकरणम् ।

एवं दर्शितोत्साहेन विजिगीषुणा व्यसनी परो यातव्यः । यदा तु स्वं प्रकृतिव्यसनापन्नः स्यात्, तदैवोत्साहमेवास्थायैँ तत्प्रतिकृत्य यायात् अन्यथा प्रकृतयो व्यसनापन्ना न स्वकर्माणि कुर्युरिति प्रकृतिकर्म प्रकृतिव्यसनानि चेति प्रकरणद्वयमुच्यते । तत्र व्यसनानां कारणनिवचनभेदप्रतीकारान् श्लोकपञ्चकेनाह—प्रकृतिव्य नमित्यादि । समुत्पतेद्यायात् । कुतश्चैतत्स्यादित्याह—अनयापनयाभ्यामित्यादि । दैवं मानुषश्च कर्म लोकं पालयति । तत्र दैवमनयो नाम, मानुषमपनयो नाम । यत्पूर्वजन्मकृतं कर्म तद्दैवम् । तस्मिन्निष्टेन फलेन योगोऽयः, अनिष्टेनानयः । यदिह क्रियते तन्मानुषम् । अस्मिन् योगक्षेमनिष्पत्तिर्नयः, विपत्तिरपनयः । तत्रानयापनयाभ्यां संयुक्ताभ्यां प्रकृतीनां व्यसनमुत्पद्यते । दैवतोऽपि चेति, अपिशब्दान्मानुषतोऽपि। इदमुक्तं भवति- दैवाद्वा केवलादनयलक्षणान्मानुषाद्वा केव-

---

इति विंशमुत्साहप्रशंसाप्रकरणम् ।

---

### २१ अथ प्रकृतिकर्मप्रकरणम् ।

उत्साहप्रशंसामभिधाय प्रकृतिकर्म प्रकृतिव्यसनानि चाभिधातुं प्रकृतीनां कर्माणि प्रस्तौति—( प्रकृतीति । ) स्वाम्यादिप्रकृतीनां व्यसनं यस्मात्तत्प्रशम्य समुत्पतेत् यात्रां दद्यात् । व्यसनं च कुतो भवतीत्याह—अनयापनयाभ्यां तद्व्यसनं जायते । अनयापनयलक्षणं च कौटिल्योक्तं तद्यथा- मानुषं नयापनयौ । मानुषं विजिगीष्वादिमनुष्यकृतम् । तच्च दृष्ट( कारित )मित्युच्यते । तच्च द्विविधं नयापनयभेदात् । एवं षाड्गुण्यस्य यथावस्थानं( तस्मिन् योगक्षेमनिष्पत्तिः ) नयः; तद्विपर्ययोऽपनयः । दैवमयानयौ । अदृष्टकारितं ( तदुच्यते ) । तस्मिन्निष्टेन फलेन योगः अयः, आनिष्टेनानयः । एवमनयापनयाभ्यां व्यसनं जायते । दैव-

अनयापनयाभ्यां तज्जायते दैवतोऽपि च ॥ १८ ॥
यस्मात् तद्व्यस्यति श्रेयस्तस्माद्व्यसनमुच्यते ।
व्यसत्यधो वा व्रजति तस्मात् तत् परिवर्जयेत् ॥ १९ ॥
हुताशनो जलं व्याधिर्दुर्भिक्षं मरकस्तथा ।
इति पञ्चविधं दैवं व्यसनं मानुषं परम् ॥ २० ॥

---

लादपनयलक्षणादिति ॥ १८ ॥

कथं तत उत्पन्नं व्यसनमित्युच्यते इत्याह—यस्मादित्यादि । व्यस्यति क्षिपति श्रेयः—अभिमतमर्थमिति व्यसनम् । अधो वा व्रजतीति । अस गतिदीप्त्यादानेष्वित्यस्य धातोः प्रयोगं दर्शयति । विशब्दोऽधःशब्दार्थे नाशे वा । अधो नाशं वा असति व्रजत्यनेनेति व्यसनम् ॥ १९ ॥

पञ्चविधं दैवमिति । यदा पूर्वजन्मकृतमनवदातं कर्म स्वानुरूपकार्याभिमुखं, तदा तत्प्रेरिता हुताशनादयः पीडाहेतुत्वाद्दैव व्यसनमित्युच्यते । मानुषं परं दैवादन्यत् । तथा ह्युक्तं "गुणप्रातिलोम्यमभावः प्रदोषः प्रसङ्गः (सम्प्रयोगः) पीडा वा व्यसनम्" इति । (कौ० अ० ८–१९–.२८)तत्र पीडा दैवी मानुषी च, दैवी हुताशनादिका, मानुषी स्वपरचक्रादिका । तत्र दैवं पीडनं मुक्त्वा अन्यत् सर्वं मानुषम् ॥ २० ॥

---

तोऽपि दैवादग्न्यादिदैवभयाद्वक्ष्यमाणात् ॥ १८ ॥

व्यसनशब्दं व्याख्यातुमाह—( यस्मादिति । ) हि स्फुटम् । अस्यति दूरं क्षिपति श्रेयः परमाभ्युदयं यस्मात् तस्माद्व्यसनमुच्यते । व्यसनी पुरुषः अधोधः श्रियः पदात् पतित्वा अधोधो व्रजति तावद्यावद्रसातलम् । तस्मात्तत्परिवर्जयेदिति ॥ १९ ॥

यदुद्दिष्टं दैवमिति तद्भेदानाह—( हुताशन इति । ) हुताशनो वैश्वानरः । कारणं विनैव यदुद्भूतो ग्रामं दहति तदेकं दैवम् । तथैव वरुणो जलेन प्लावयति तत् द्वितीयं जलाख्यम् । व्याधी रोगः । दुर्भिक्षं सस्यानामनिष्पत्त्या तदिति । मरक इन्द्रयमकोपादिति । पञ्चविधमपि दैवम । मानुषं परमिति यदवशिष्टमनयापनयलक्षणं तन्मानुषम् । यदिह जन्मनि अपनयाख्यं कृतं तद् दृष्टं, यज्जन्मान्तरे कृतं तदपि मनुष्यकृतमिति द्विविधमपि ( अवशिष्टं ) मानुषमिति भावः ॥ २० ॥

दैवं पुरुषकारेण शान्त्या वा प्रशमं नयेत्।
उत्थायित्वेन नीत्या वा मानुषं कार्यतत्त्ववित् ॥ २१ ॥
स्वाम्यादिमित्रपर्यन्तं प्राकृतं मण्डलं हि यत्।
तस्य कर्म प्रवक्ष्यामि व्यसनञ्च यथाक्रमम् ॥ २२ ॥
मन्त्रो मन्त्रफलावाप्तिः कार्यानुष्ठानमायतिः।

---

तत्प्रशाम्य समुत्पतेदित्युक्तं, तस्य शमनोपायमाह–दैवमिति। पुरुषकारेण मानुष्या प्रतिक्रियया वह्न्यादिप्रतिपक्षोपकरणसम्पादनेनेत्यर्थः। शान्त्या दैव्या अथर्ववेदविहितया। उत्थायित्वेन दुर्गादिकर्मसु चेष्टया। नीत्या सन्ध्यादीनां सामादीनाञ्च यथोद्देशप्रयोगेण। कार्यतत्त्वविदिति यथोपेयमपायप्रयोगं दर्शयति ॥२१॥

इदानीं प्रकृतिकर्म तद्व्यसनान्यभिधित्सुराह–स्वाम्यादीत्यादि। प्राकृतं मण्डलं–सप्तप्रकृतिकं राज्यं, यदुक्तं प्राक् स्वाम्यादिप्रकृतिमण्डलम् ॥ २२ ॥

तत्र षट्त्रिंशता श्लोकैः प्रकृतिकर्माह–मन्त्र इत्यादि। बहुत्वात्, स्वामिकर्म प्रकृतिकर्मणः पश्चाद्वक्ष्यति। मन्त्रः कार्यनिश्चयो मन्त्र्यायत्तः। मन्त्रफलावाप्तिः, दूरादेवामित्रानुत्सार्य या साध्यस्य फलस्य प्राप्तिर्दूतायत्ता। कार्यानुष्ठानं दुर्गादिकर्मप्रवर्तनमध्यक्षाधीनम्। आयतिः प्रभावोऽमात्यैः क्रियते। आयव्ययौ

---

व्यसनोपशममभिधातुमाह–(दैवमिति।) दैवं पञ्चविधमपि हुताशनादि पुरुषकारेण हुताशनादीनां जलादिभिरुपशमनलक्षणपुरुषकारेण शान्त्या चाथर्ववेदोक्तया प्रशमं नयेत्। तथा उत्थायित्वेनोत्साहशक्त्या शौर्यामर्षदाक्ष्यलक्षणेन नीत्या च षाड्गुण्ययथोद्देशावस्थापनलक्षणया मानुषमनयापनयलक्षणम्। कार्यतत्त्वविद् विजिगीषुरिति ॥ २१ ॥

स्वाम्यादिप्रकृतिसप्तकस्यानुष्ठानानि व्यसनानि चाभिधातुमाह–(स्वामीति।) इति प्रतीतम् ॥ २२ ॥

बहुवक्तव्यत्वात् स्वामिकर्म व्यसनं च पश्चाद्वक्ष्यति। अमात्यकर्म व्यसनं चाभिधातुमाह–(मन्त्र इति।) अमात्यस्य मन्त्रः पञ्चाङ्गः। तस्योपलब्धिलक्षणं प्रयोगपर्यन्तं कर्म मन्त्रशब्देन गृह्यते। मन्त्रफलावाप्तिरिति पृथिवीलाभपालनलक्षणम्। कार्यानुष्ठानमेतदेव कार्यं क्रियतामिति अनवरतं प्रेरणम्। आयतिरागामिनि काले यद् भविष्यति तस्याप्युपपत्तिः। आयः कोशोत्पत्तेर्निरूपणम्। व्ययः इति सव्ययकरणम्। दण्डनीतिर्दण्डस्य, वधः परिक्लेशोऽर्थहरणं (वेत्यस्य)

आयव्ययौ दण्डनीतिरमित्रप्रतिषेधनम् ॥ २३ ॥
व्यसनस्य प्रतीकारो राजराज्याभिरक्षणम् ।
इत्यमात्यस्य कर्मेदं हन्ति तद्व्यसनान्वितः ॥ २४ ॥
अमात्यैर्व्यसनोपेतैर्ह्रियमाणो हि भूपतिः ।
अशक्त एवोत्पतितुं छिन्नपक्ष इवाण्डजः ॥ २५ ॥
[ कोशो दण्डश्च कुप्यश्च विष्टिर्वाहनमेव च ]
हिरण्यवस्त्रधान्यादि वाहनादि तथैव च ।

---

अक्षपटलिकाधीनौ । दण्डनीतिः—वधादीनां दण्डसाध्येषु यथार्हं नयनं धर्मस्थायत्तम् । अमित्रप्रतिषेधनं, मित्राधीनम् ॥ २३ ॥

व्यसनस्य प्रकृतीनां प्रतीकारो मन्त्रिपुरोहिताधीनः । तथा राजराज्याभिरक्षणं मन्त्रिपुरोहिताधीनमेव ॥ २४ ॥

ह्रियमाणः श्रेयसः सकाशात् । छिन्नपक्ष इव पक्षस्थानीयत्वादमात्यादीनाम् ॥ २५ ॥

[कोशो दण्डश्च कुप्यश्च विष्टिर्वाहनमेव च—मू० पा०] हिरण्यं सुवर्णरजतादि । वस्त्रं त्वक्फलकृमिरोमभेदाच्चतुर्विधम् । तदुभयं कोशप्रवेश्यं, धान्यं पूर्वमध्यापरवापकं कोष्ठागारप्रवेश्यम् । वाहनं गजाश्वादि दण्डौपयिकम् । द्रव्यनिचयाः

---

दण्डयं प्रति यथाशास्त्रं नयनम् । अमित्राणां बुध्यतिशयेनैव प्रतिषेधनं विग्रहत्याजनम् ॥ २३ ॥

( व्यसनस्येति । ) व्यसनस्य सकलस्य प्रतीकार उपशमनम् । राजराज्ययोः बुद्ध्यैवाभिरक्षणमित्यमात्यस्य कर्मेदं हन्ति स मन्त्री व्यसनेन वक्ष्यमाणलक्षणेनान्वितः ॥ २४ ॥

अमात्यस्य व्यसनं स्वामिन एव व्यसनं भवतीति दर्शयन्नाह—( अमात्य इति । ) अमात्ये मन्त्रिणि व्यसनोपेते धूर्तैरारिभिर्ह्रियमाणोऽतिसन्धीयमानो महीपतिः स्वामी अशक्त एवोत्पतितुं अतिसन्धानप्रतीकारं कर्तुं छिन्नपक्ष इवाण्डजः पक्षीव । सहायसाध्यं राजत्वमिति वचनादिति ॥ २५ ॥

राष्ट्रस्य कर्म व्यसनं चाभिधातुमाह—( हिरण्येति । ) हिरण्यं सुवर्णादि । धान्यं पूर्वमध्यावरवापं शाल्यादि । वस्त्राणि चीनपट्टादीनि । वाहनानि हस्त्य-

तथान्ये द्रव्यनिचयाः प्रजातः सम्भवन्ति हि ॥ २६ ॥
वार्तां प्रजा साधयति वार्ता वै लोकसंश्रया ।
प्रजायां व्यसनस्थायां न किञ्चिदपि सिध्यति ॥ २७ ॥
प्रजानामापदि त्राणं रक्षणं कोशदण्डयोः ।
पौराश्चैवोपकुर्वन्ति संश्रयायेह दुर्गिणाम् ॥ २८ ॥
तूष्णींयुद्धं जनत्राणं मित्रामित्रपरिग्रहः ।

---

सारदार्वादयो दुर्गौपयिकाः, प्रजातो जनपदात् ॥ २६ ॥

साधयति सम्पादयति । वार्ता लोकसंश्रया तत्प्रतिबद्धत्वात् लोकस्थितेः ॥ २७ ॥

आपदि—पराभियोगे जनपदस्य त्राणम् । रक्षणं कोशदण्डयोः, अन्यथा दुर्गाभावे कोशदण्डौ परेषामेव स्यातामित्याह—पौराः तन्निवासिनः । उपकुर्वन्ति कोशादिना । दुर्गिणां—राज्ञाम् ॥ २८ ॥

तूष्णींयुद्धं—योगगूढोपजापादिना । जनत्राणं दुष्टनिग्रहेण । मित्रामित्रपरिग्रहः प्रोत्साहेन । मध्यमोदासीनलिप्सा । हि दुर्गसंश्रयात्तदेव मित्रामित्रानुत्साहयेत् । आबाधा पीडा तस्या ( धिरोह ? निरोधः ) । दुर्गसंश्रयाद्दुर्गे सर्व-

---

श्वादीनि । तथान्ये द्रव्यनिचयाः कांस्यलोहताम्रादयः । प्रजातो राष्ट्रनिविष्टायाः सकाशात् सम्भवन्ति नान्यत इति ॥ २६ ॥

एतदेव स्पष्टयन्नाह—( वार्तामिति । ) वार्ता कृषिपाशुपाल्यवाणिज्यलक्षणाम् । प्रजा साधयति । वार्ता वै लोकसंश्रयः तया विना लोको न वर्तेत इत्यर्थः । शेषं प्रतीतम् ॥ २७ ॥

दुर्गस्य कर्म व्यसनं चाभिधातुमाह—( प्रजानामिति । ) प्रजानां चातुर्वर्ण्यानामापदि कुलायां स्थानं रक्षानिमित्तव्यवस्थितिः । तथैव रक्षणं कोशदण्डयोः । पौराः पुरे भवाः स्वजनाः कोशादिभिरुपकुर्वन्ति संश्रयाय । दुर्गिणां संश्रिताः पौरा निराबाधा व्यवहरन्तीति दुर्गं विद्यते यस्य विजिगीषोस्तमाश्रिताः पौराः कोशादिभिरुपकुर्वन्तीति ॥ २८ ॥

( तूष्णीमिति । ) दुर्गे स्थित्वा परैरविज्ञातोऽयं सहसा परिनः पतित्वा युद्धं करोति तत् तूष्णींयुद्धम् । जनानामापन्नानां त्राणम् । मित्रामित्रयोर्व्यापन्नयोर्ग्रहो दुर्गबलादेव । सामन्ता संस्कृतस्त आटविकाः प्रतीतास्तत्कृताबाधानि

सामन्ताटविकाबाधानिरोधो दुर्गसंश्रयात् ॥ २९ ॥
स्वपक्षैः परपक्षैश्च दुर्गस्थः पूज्यते नृपः।
एतद्धि दुर्गव्यसनात् सर्वमेव विपद्यते ॥ ३० ॥
भृत्यानां भरणं दानं भूषणं वाहनक्रियाः।
स्थैर्यं परोपजापश्च दुर्गसंस्कार एव च ॥ ३१ ॥
सेतुबन्धो वणिक्कर्म प्रजामित्रपरिग्रहः।

---

मेवैतत्कर्मोच्यते ॥ २९ ॥

स्वपक्षैः पूज्यते कालेऽस्माकं मताश्रय इति। अशक्योच्छेदोऽयमिति परपक्षैः स्तूयते ॥ ३० ॥

भरणं पोषणम्। दानं भृत्येभ्य एव तुष्टिकाले। स्थैर्यं कोशात्, सर्वापत्प्रतरणहेतुत्वात्त.य। परोपजापः अ( परोपजापत्वात्तत्रा )लब्धप्रकृतिभेदः ॥ ३१ ॥

सेतुबन्धः—सस्यार्थं जलाधारबन्धः। वणिक्कर्म वाणिज्यम्। प्रजापरिग्रहः—शून्यनिवेशकाले। मित्रपरिग्रहः—पराभियोगकाले। धर्मसिद्धिः पात्रेभ्यः प्रदानात्। कामसिद्धिः शरीरपरिभोगकरणात्। अर्थसिद्धिः "अर्थैरर्था निब-

---

रोधो दुर्गेणैव क्रियते। एतत्सर्वं दुर्गेणैव विधीयत इति उपचारात् दुर्गमुच्यते ॥ २९ ॥

( स्वपक्षैरिति। ) स्वपक्षैः परपक्षैश्च दुर्गस्थो विजिगीषुः पूज्यते दुर्गबलेन निग्रहानुग्रहक्षम इति। एतदनन्तरोक्तदुर्गव्यसनात् निचयसंस्कारााद्यभावलक्षणात् सर्वमेव न विद्यते ॥ ३० ॥

कोशप्रकृतेः कर्मव्यसने आह—( भृत्यानामिति। ) भृत्यानां चतुरङ्गबलादीनाम् भरणं सर्वेषामिति। भरणं भृतिः दानमिति कर्म कामाभिसम्बन्धिनाम्। भूषणमलङ्करणम्। वाहनानां हस्त्यश्वादीनां क्रयो मूल्येन ग्रहणम्। स्थैर्यं कोशबलात् स्थिरत्वम्। परोपजापश्च शत्रुबलानां सम्भेदनम्। कोशदानाशाप्रदर्शनपूर्वकोपजापात्। दुर्गसंस्कार एव च कोशव्ययसाध्यः ॥ ३१ ॥

( सेतुबन्ध इति। ) सेतुबन्धोऽखिलैशाल्यादिधान्यनिष्पत्तये तडागखननम् ( उपलक्षितम्। ) वणिक्कर्म वाणिज्या कोशमूलैव। प्रजामित्रपरिग्रहः क्षीणप्रजामित्राणि कोशेनैव परिगृह्यन्ते। धर्मकामार्थसिद्धिश्च त्रिवर्गनिष्पत्तिश्च कोशादेतत्प्र-

धर्मकामार्थसिद्धिश्च कोशादेतत् प्रवर्तते ॥ ३२ ॥
कोशमूलो हि राजेति प्रवादः सार्वलौकिकः ।
एतत् सर्वं जहात्याशु कोशव्यसनवान् नृपः ॥ ३३ ॥
क्षीणं बलं वर्धयति स्वतो गृह्णाति च प्रजाः ।
कोशवान् पृथिवीपालः परैरप्युपजीव्यते ॥ ३४ ॥
मित्रामित्रहिरण्यानां भूमीनाञ्च प्रसाधनम् ।
दूरकार्याशुकारित्वं लब्धस्य परिपालनम् ॥ ३५ ॥
परचक्रविघातश्च स्वदण्डस्य परिग्रहः ।
दण्डादेतत् प्रभवति याति तद्व्यसने क्षयम् ॥ ३६ ॥

---

ध्यन्ते " इति न्यायात् ॥ ३२ ॥

कोशमूल इति । अन्यथा हि कोशविकलः कथं स्वामीत्युच्यते ऐश्वर्याभावात् ॥ ३३ ॥

क्षीणं बलं वर्धयति । स्वतो वित्तात्, अन्यथा कोशाभावे दण्डः परं गच्छति । स्वतो गृह्णाति, प्रजाः क्षीणाः । परैरपि शत्रुभिः ॥ ३४ ॥

मित्रामित्राणामपचिकीर्षतां, हिरण्यानां दुरसाधनानाञ्च । भूमीनां सामन्ताटविकादिभिराक्रान्तानाम् । प्रसाधनं दण्डेनात्मसात्करणम् । दूरकार्याशुकारित्वं देशान्तरितस्य द्रुतसम्पादनशीलता । लब्धस्य कोशादेः ॥ ३५ ॥

परचक्रविघातः प्रबलस्याभियुञ्जानस्य व्याघातः । स्वदण्डस्य परिग्रहः स्वस्य दण्डैकदेशस्य पराभवशङ्कायां परिरक्षणेन परिग्रहः ॥ ३६ ॥

---

वर्तते ॥ ३२ ॥

( कोशमूल इति । ) कोशस्य व्यसनं क्षीणत्वम् ॥ ३३ ॥

( क्षिणं बलमिति । )......॥ ३४ ॥

दण्डकर्मव्यसने चाभिधातुमाह—( मित्रामित्रहिरण्यानामिति । ) मित्राणि बान्धवाः, अमित्राः शत्रवः, हिरण्यानि च भूमयश्च तासां सिद्धयो, यातव्यसाधनम्; दूरकार्येषु कारित्वं—व्यवहितेष्वपि प्राप्यकारित्वं, लब्धस्य भूम्याद्यर्थस्य परिपालनं दण्डसाध्यमेव ॥ ३५ ॥

( परचक्रविघात इति । ) परचक्रविघातश्च परसम्बन्धिचतुरङ्गबलविनाशः स्वदण्डस्य परेण पीड्यमानस्य परिग्रहो रक्षणम् । दण्डादेतदनन्तरोक्तं प्रकर्षेण भवति; तद्व्यसने क्षयं याति ॥ ३६ ॥

अरयोऽपि हि मित्रत्वं यान्ति दण्डवतो ध्रुवम्।
दण्डप्रायो हि नृपतिर्भुनक्त्याक्रम्य मेदिनीम् ॥ ३७ ॥
संस्तम्भयति मित्राणि शत्रूनुत्सादयत्यपि।
भूकोशदण्डैर्व्रजति प्राणैश्चाप्युपकारिताम् ॥ ३८ ॥
तत्तत् करोति सुबहु मित्रं स्नेहनिबन्धनम्।
तस्मिन् व्यसनमापन्ने मित्रकर्म न विद्यते ॥ ३९ ॥
उपकाराद्दृतेऽप्याशु मित्रं श्रेयसि तिष्ठति।
मित्रवान् साधयत्यर्थान् दुस्साध्यानप्यनादरात् ॥ ४० ॥
अन्वीक्षणञ्च विद्यानां सद्वर्णाश्रमरक्षणम्।

---

अरयोऽपि मित्रत्वं यान्ति दण्डवतः। दण्डप्रायो दण्डबहुलः ॥ ३७ ॥

मित्रकर्माह- संस्तम्भयति मित्राणि विजिगीषोर्यानि बलाधिकान्यरिमित्राणि भवन्ति विजिगीषुभयाद्वाऽमित्रानाश्रयन्ति। प्राणैः पराभियोगकाले ॥ ३८ ॥

तत्तत्करोति यद्यद्विजिगीषोरनुकूलम्। स्नेहनिबन्धनं, तद्व्युपकारनिरपेक्षं भवति ॥ ३९ ॥

तदेव स्फुटयन्नाह-उपकाराद्दृत इति। श्रेयसि विजिगीषुहिते ॥ ४० ॥

स्वकर्मसु स्वामिकर्माह-अन्वीक्षणमालोचनम्। सद्वर्णाश्रमरक्षणमिति।

---

(अरयो पीति।) शत्रवोऽपि भयान्मित्रत्वं यान्ति दण्डवतो नृपतेर्ध्रुवं निश्चयेन। दण्डप्रायो हि नृपतिर्भुनक्त्याक्रम्य मेदिनीमिति प्रतीतम् ॥ ३७ ॥

मित्रप्रकृतेः कर्माभिधातुमाह—(संस्तम्भयतीति।) मित्राणि विचलन्ति संस्तम्भयति स्थिरस्नेहानि करोति। अमित्रांस्तु विजिगीषोः शत्रून्नाशयत्यपि। भूकोशदण्डैर्व्रजतीति प्रतीतम् ॥ ३८ ॥

(तदिति।) तत्तद्विजिगीषोर्हितं सुबहु तदभिलषितादेवाधिकं करोति। मित्रं स्नेहनिबन्धनं स्नेह एव मित्रस्य संश्लेषकृत्। तस्मिन्निति मित्रे व्यसनमापन्ने मित्रसाध्यं कर्म न विद्यत इति ॥ ३९ ॥

(उपकारादिति।) उपकारं विनापि मित्रभावेन यन्मित्रम् तत् श्रेयसि विजिगीषोस्तिष्ठति। श्रेयस्करं भवतीत्यर्थः। तथा मित्रवान् साधयत्यर्थान् इति प्रतीतम् ॥ ४० ॥

स्वामिप्रकृतेः कर्माभिधातुमाह—(अन्वीक्षणामीति।) विद्यानां त्रयीवार्ता-

ग्रहणं शस्त्रशास्त्राणां युद्धमार्गोपशिक्षणम् ॥ ४१ ॥
व्यायामः शस्त्रविज्ञानं वर्मणां लक्षणानि च ।
गजाश्वरथपृष्ठेषु यथावत् सम्प्रवर्तनम् ॥ ४२ ॥
नियुद्धकौशलं माया परचित्तप्रवेदनम् ।
धूर्तता शाठ्ययुक्तेषु सत्सु सद्वृत्तदर्शनम् ॥ ४३ ॥

---

ये स्थिताः वर्णाश्रमाः ते सन्त उच्यन्ते । ग्रहणं शस्त्रशास्त्राणाम् अध्ययनं धनुर्वेदानाम् । युद्धमार्गोपशिक्षणमिति– शास्त्रज्ञानेऽपि योद्धुं न जानातीति तद्विन्यासशिक्षणम् ॥ ४१ ॥

व्यायामः—प्लवनलङ्घनादिः । वर्मणां लक्षणानि तद्द्रव्याणां परिज्ञानानि । गजाश्वरथपृष्ठेषु यथावत्सम्प्रवर्तनम्, गजादिवाहिकाकौशलमित्यर्थः॥४२॥

नियुद्धकौशलं—मल्लयुद्धशिक्षणम् । माया तत्प्रवर्तनमिति, मायामुपायविकल्पे वक्ष्यति । परचित्तप्रवेदनं इङ्गिताकारैः । धूर्तता शाठ्यं, सत्सु सज्जनेषु ॥४३॥

---

दण्डनीतीनाम् अन्वीक्षणं प्रत्यक्षादिनेक्षितस्यानु पश्चादीक्षणमनुमानैः परामर्शः। किमेतत्प्रत्यक्षं प्रत्यक्षाभासो वा ? किमयमागमो विधिवादको विपरीतको वेति विचार्य न्यायवैशेषिकोक्तन्यायेन विद्यानामन्वीक्षणं विजिगीषो राज्ञः कर्म । सद्वर्णाश्रमरक्षणं सन्तो ये सदाचारत्वात् वर्णाश्रमास्तद्रक्षणम् । शस्त्रविषये यानि शास्त्राणि धनुर्वेदादीनि ( तेषां ग्रहणम् ) युद्धमार्गोपशिक्षणमिति युद्धानि प्रकाशकूटतूष्णींयुद्धादीनि तन्मार्गाणां तदनुष्ठानन्यासानामुपशिक्षणं क्षत्रियाणां प्रधानमिदं कर्मेति ॥ ४१ ॥

( व्यायाम इति । ) व्यायामः शास्त्रोक्तन्यायेन आलीढप्रत्यालीढादिस्थानकरणादिष्वभ्यासः । शस्त्रविज्ञानं लोहाकरपरिज्ञानादि । वर्मणां कवचावरणादीनां लक्षणानि । वर्मशब्देन फलकस्फुरकादिवामहस्तग्राह्यशरीरावरणं तल्लक्षणानि च । गजाश्वरथपृष्ठेषु यथावत्सम्प्रवर्तनं जितश्रमत्वापादनार्थम् ॥ ४२ ॥

( नियुद्धेति । ) नियुद्धं मल्लयुद्धं तत्कौशलम् । माया कृत्तलवणादि( कर्णादि ? )रूपपरावर्त्तादिका । पराचित्तप्रवेशनं परचित्तप्रवेशस्तद्भावभावित्वेन भवति । तथा चोक्तम्–

"यस्य यस्य हि यो भावस्तेन तेन हि तं नरम् ।
अनुप्रविश्य मेधावी क्षिप्रमात्मवशं नयेत् ॥" इति ।
......॥ ४३ ॥

मन्त्रोद्योगोऽनुमन्त्रत्वं तद्रक्षा तात्स्थ्यमेव च।
उपेक्षा साम दानञ्च भेदो दण्डश्च साधनम् ॥ ४४ ॥
प्रशास्तृसूतसेनानीमन्त्र्यमात्यपुरोधसाम्।
सम्यक् प्रचारविज्ञानं दुष्टानां चावरोपणम् ॥ ४५ ॥
गतागतपरिज्ञानं दूतसम्प्रेषणानि च।
प्रकृतिव्यसनापोहः क्रुद्धप्रशमनानि च ॥ ४६ ॥

---

मन्त्रोद्योगोऽनुमन्त्रत्वमिति। मन्त्रार्थं ज्ञानवृद्धसंयोगः। मन्त्रिभिः सह सम्मन्त्र्य पश्चात्स्वयमेकैकस्य मन्त्रणम् अनुमन्त्रत्वम्। तद्रक्षा मन्त्ररक्षा। तात्स्थ्यं मन्त्रतात्पर्यम्। उपेक्षा उपायविकल्पे वक्ष्यमाणा साधनमिति उपेक्षादिपञ्चकस्य कर्मण उपायसाधनत्वात् ॥ ४४ ॥

प्रशास्ता बलाध्यक्षः, सूतः सारथ्यकर्मनियुक्तः, सेनानीश्चतुरङ्गस्य नेता, मन्त्री बुद्धिसचिवः, अमात्यः सन्निधातृसमाहर्त्रादिः, पुरोधाः पुरोहितः। प्रचारविज्ञानं स्वकर्म किं केन अनुष्ठितमिति। दुष्टानामवरोपणम्—तेषां कर्मसु विकुर्वाणानां पदात्प्रच्यावनम् ॥ ४५ ॥

गतागतपरिज्ञानमिति। किमयं कारणादकारणाद्वा गत आगतश्चेति। क्रुद्धप्रशमनानि कारणादकारणाद्वा क्रुद्धानां सामादिभिः प्रशमनानि ॥ ४६ ॥

---

(मन्त्र इति।) मन्त्रे पञ्चाङ्गे सर्वदा उद्योगः। अनुमन्त्रत्वं मन्त्रिभिः कृते मन्त्रेऽनु पश्चात् मन्त्रत्वम्। तद्रक्षेति मन्त्ररक्षा। तात्स्थ्यमेव च मन्त्र एव सर्वदा स्थानम्। उपेक्षा साम दानं च भेदो दण्डश्च (तेषां) प्रसाधनम् ॥ ४४ ॥

(प्रशास्त्रिति।) प्रशास्ता सैन्यप्रसाधकः। अध्यक्षः उक्तव्यतिरिक्तो नियोगी। सेनानीः सेनापतिः। मन्त्र्यमात्यौ प्रसिद्धौ। पुरोधाः पुरोहितः। तेषां प्रशास्त्रादीनां यः प्रचारः सञ्चारः स्वामिहितः तद्विपरीतो वा। तस्य सम्यग्विज्ञानम्। दुष्टानामहितकारिणां वा अध्यक्षाणामपरोपणं नियोगादपनयनम् ॥ ४५ ॥

(गतागतपरिज्ञानमिति।) यः कारणादकारणाद्वा गतश्चागतश्च तत्परिज्ञानम्। (दूतसम्प्रेषणानि च प्रकृतिव्यसनापोहः।) क्रुद्धानां प्रशमनानि महीपतेर्वृत्तमित्युत्तरेण सम्बन्धः ॥ ४६ ॥

गुरूणामनुवृत्तिश्च पूज्यानामनुपूजनम् ।
धर्मासनप्रतिष्ठानं राज्यकण्टकशोधनम् ॥ ४७ ॥
भृताभृतपरिज्ञानं कृताकृतपरीक्षणम् ।
तुष्टातुष्टविचारश्च सर्वेषामनुजीविनाम् ॥ ४८ ॥
मध्योदासीनचरितज्ञानं तात्सिद्धिपालनम् ।
प्रतिग्रहश्च मित्राणाममित्राणां च निग्रहः ॥ ४९ ॥
पुत्रदारादिगुप्तिश्च बन्धुवर्गपरिग्रहः ।
खनिद्वीपवनादीनां स्ववृत्तीनां प्रवर्तनम् ॥ ५० ॥

---

गुरूणां सगन्धानामसगन्धानां च । पूज्यानां विद्यावृद्धानाम् । धर्मासनप्रतिष्ठानं—धर्माधिकरणप्रवर्तनं धर्मस्थैः । राज्यकण्टकशोधनं प्रदेष्टृभिः ॥ ४७ ॥

भृताभृतपरिज्ञानं भृत्यभरणाये ( न ? षु ) कृताकृतपरीक्षणं कर्मसु नियुक्तेन किं केन कृतमिति, ( तुष्टातुष्टविचारः ) भृत्यस्य तुष्टिरतुष्टिर्वेति विचारः ॥ ४८ ॥

तात्सिद्धिपालनामिति । मध्यमोदासीनयोः साधनं रक्षणञ्च । प्रतिग्रहः स्वीकरणम् ॥ ४९ ॥

पुत्रदारादिगुप्तिः पुत्राणां कर्कटकसधर्मत्वात्, दाराणां चासन्नवृत्तित्वात् । खनिद्वीपवनादीनामिति, आदिशब्दाद्दुर्गसेतुवणिक्पथशून्यनिवेशद्रव्यवनपरिग्रहः । ता एव राज्ञो वृत्तयः ॥ ५० ॥

---

( गुरूणामिति । ) उपाध्यायादीनामनुवृत्तिरनुकूलत्वेन प्रवर्तनम् । पूज्यानामिष्टदेवतानां च पूजनम् । धर्मस्थैः सह विवादपदविचारार्थं सम्प्रतिष्ठानमास्थानोपवेशनम् । राज्यकण्टकाः दूष्यात्मानः चौरपारदारिकादयः, तच्छोधनं हिरण्यदण्डेन वा वधदण्डेन वा ॥ ४७ ॥

( भृतेति । ) अस्य व्याख्यानं सुगमम् ॥ ४८ ॥

( मध्योति । ) सुगममेतत् ॥ ४९ ॥

( पुत्रेति । )पुत्र(ादि)गुप्तिः पारदारिकत्व(ादि)निषेधार्थम् । राज्ञा स्ववृत्तीनां प्रवर्तनं कोशवृद्ध्यर्थं चेति ॥ ५० ॥

असताञ्च परिक्षेपः सताञ्च परिगूहनम् ।
अभूतानां च हिंसानामधर्माणाञ्च वर्जनम् ॥ ५१ ॥
अकार्यप्रतिषेधश्च कार्याणाञ्च प्रवर्तनम् ।
प्रदानञ्च प्रदेयानामदेयानामसङ्ग्रहः ॥ ५२ ॥
अदण्डनमदण्ड्यानां दण्ड्यानां चापि दण्डनम् ।
अग्राह्याग्रहणं चैव ग्राह्याणां ग्रहणं तथा ॥ ५३ ॥
अर्थयुक्तस्य करणमनर्थस्य च वर्जनम् ।
न्यायतश्च करादानं स्वयञ्च प्रतिमोक्षणम् ॥ ५४ ॥

---

असतामिति । प्रज्ञाशौचशौर्यादियुक्ताः सन्तः, तद्विपर्ययेणासन्तः, तेषां परिक्षेपो दानमानव्यपरोपणम् । परिगूहनं—पूजया स्वीकरणम् । अभूतहिंसा—अप्रवर्तितपूर्वा शास्त्रविगर्हिता अधर्म्या यज्ञादन्‍त्र या हिंसा ॥ ५१ ॥

कार्यं करणार्हमिन्द्रमहादि । प्रदेया दानार्हाः क्षेत्रादयः । अदेयाः अदानार्हाः श्रोत्रियादीनामर्थाः, तेषामसङ्ग्रहोऽसाधनम् ॥ ५२ ॥

अदण्ड्याः फल्गुक्रीडादिष्वपि शिष्टाचाराः । दण्ड्याश्चोरादयः । अग्राह्याः पूर्वविरोधिताः प्रकृतिविद्विष्टा वा । ग्राह्याः प्रज्ञादियुक्ताः स्निग्धा वा ॥ ५३ ॥

अर्थयुक्तं—हीनविग्रहादि । अनर्थो बलवद्विग्रहादिः । न्यायतः पूर्वप्रसिद्ध्या । स्वयं मतिमोक्षणं धनानामनतिलोभेन ॥ ५४ ॥

---

( असतामिति । ) असतां दुर्वृत्तानां परिक्षेपः परित्यागः । सतां सत्पुरुषाणां परिगूहनं संवरणम् । अभूतानां शास्त्रनिषिद्धाना( मू हिंसाना )मधर्माणां च वर्जनम् ॥ ५१ ॥

( अकार्येति । ) प्रदेयानां दानार्हाणाम् । अदेयानां कुलधनादीनाम् । ( शेषं प्रतीतम् । ) ॥ ५२ ॥

( अदण्डनमिति । ) अदण्ड्यानां निर्दोषाणाम् । अग्राह्याणां ब्रह्मदेवादीनां दण्डकरादि तदग्राह्यं, तस्याग्रहणम् । ( ग्राह्याणां ) स( द्रु ? )द्रव्यादीनां ग्रहणम् ॥ ५३ ॥

( अर्थयुक्तस्येति । ) अर्थोऽत्र त्रिवर्गस्तद्युक्तो यस्तस्य करणं तथा अनर्थस्य निरर्थस्य । स्वयं वा अर्जितकादेः । प्रतीतम् ॥ ५४ ॥

समर्थनं प्रधानानां निरस्यानां निराकृतिः ।
वैषम्याणां प्रशमनं भृत्यानां चाविरोधनम् ॥ ५५ ॥
अविज्ञातस्य विज्ञानं विज्ञातस्य च निश्चयः ।
आरम्भः कर्मणां शश्वदारब्धस्यान्तदर्शनम् ॥ ५६ ॥
अलब्धलिप्सा न्यायेन लब्धस्य च विवर्धनम् ।
परिवृद्धस्य विधिवत् पात्रे सम्प्रतिपादनम् ॥ ५७ ॥
अधर्मप्रतिषेधश्च न्यायमार्गेण वर्तनम् ।
उपकार्योपकारित्वमिति वृत्तं महीपतेः ॥ ५८ ॥
एतत् सर्वममात्यादि राजा नयपुरस्सरः ।
नयत्युन्नतिमुद्युक्तो व्यसनी क्षयमेव च ॥ ५९ ॥

---

समर्थनम्–गुणाध्यारोपणम् । प्रधाना मुख्याः । निरस्या दूष्याः । वैषम्याणां प्रशमनम् असमानां समीकरणम् । विरोधनं परस्परदोषाख्यानेन ॥ ५५ ॥
आरम्भः कर्मणः अनारब्धस्येत्यर्थात् । अन्तदर्शनं समापनेन ॥ ५६ ॥
लिप्सा आर्जनम् । सम्प्रतिपादनं–यदि प्राक् परिरक्षितं भवति । तस्मादरक्षितस्य रक्षणं चेत्यर्थाद्बोद्धव्यम् ॥ ५७ ॥
न्यायमार्गः धर्मशास्त्रविहितः । उपकार्योपकारित्वं उपकर्तव्येषूपकारिता ॥ ५८ ॥
सप्तानामपि स्वामिप्रकृतिः प्रधानमिति दर्शयन्नाह–एतदित्यादि । नयत्युन्नतिमतिवृद्धिम् । कूटस्थस्थानीयो हि स्वामी तदायत्तत्वादमात्यादीनाम् ॥ ५९ ॥

---

( समर्थनमिति । ) प्रधानानां समर्थकरणम् । निर्हेतिर्निर्धारणम् । वैषम्याणां देवमानुषकृतानां व्याधिदुर्भिक्षमरणादीनाम् ॥ ५५ ॥
( अविज्ञातस्य । ) निश्चयस्तत्त्वाभिनिवेशः । तथा चोक्तं–शुश्रूषाश्रवणग्रहणधारणविज्ञानोहापोहनिविष्टं विद्या विनयति, रमयति । कर्मणां पृथ्वीलाभपालनादीनामन्तदर्शनमसमाप्य नावस्थातव्यम् ॥ ५६ ॥
( अलब्धेति । ) ( पात्रे सम्प्रतिपादनमिति ) ब्राह्मणादिषु धर्माभिसन्धिना महामात्येष्वर्थाभिसन्धिना, सत्कलत्रादिषु कामाभिसन्धिना ॥ ५७ ॥
( अधर्मेति । )......॥ ५८ ॥
( एतदिति । ) एतत्सर्वमनन्तरोक्तममात्यादि राज्यं च नयपुरस्सरो राजा नयत्युन्नतिमुद्युक्तः सन् । व्यसनी तु क्षयमेव नयति ॥ ५९ ॥

तस्मिन् धर्मार्थयोर्व्यग्रे तथैवास्वस्थचेतसि ।
सर्वमेतद्विशेषेण मन्त्री सन्नेतुमर्हति ॥ ६० ॥

इति प्रकृतिकर्म नामैकविंशं प्रकरणम् ।

---

## २२ अथ प्रकृतिव्यसनप्रकरणम् ।

वाग्दण्डयोश्च पारुष्यमर्थदूषणमेव च ।
पानं स्त्री मृगया द्यूतं व्यसनानि महीपतेः ॥ ६१ ॥

---

अस्यापवादमाह—तस्मिन्निति राज्ञि धर्मार्थयोर्व्यग्रे, व्यसनप्रवृत्ते तु मन्त्र्यपि तद्विद्वान्न शक्नोति सन्नेतुमुन्नतिम् । स यच्छीलस्तच्छीला हि प्रकृतयो भवन्तीति । अस्वस्थचेतसि—परवशशरीरे ॥ ६० ॥

इति प्रकृतिकर्म नामैकविंशं प्रकरणम् ।

---

२२ अथ प्रकृतिव्यसनप्रकरणम् ।

येषु व्यसनेषु प्रकृतिकर्म न विद्यते, तानि व्यसनान्येकत्रिंशता श्लोकैराह—वागित्यादि । एतानि सप्त महाव्यसनानि कोपकामजानि विस्तरतो द्वितीयसर्गे वक्ष्यति ॥ ६१ ॥

---

( तस्मिन्निति । ) राजनि धर्मोपार्जनार्थोपार्जनयोर्व्यग्रे तथाचास्वस्थचेतसि सर्वमेतदशेषं मन्त्री सन्नेतुमर्हति सम्यक्करोतीत्यर्थः ॥ ६० ॥

इति प्रकृतिकर्म नामैकविंशं प्रकरणम् ।

---

२२ अथ प्रकृतिव्यसनप्रकरणम् ।

एवं प्रकृतिसप्तकस्य प्रत्येकं कर्म प्रतिपादितं, व्यसनमिदानीं प्रतिपाद्यते—( वागिति । ) वाक्पारुष्यं वचनैः परदुःखोत्पादम् । दण्डपारुष्यं तीक्ष्णदण्डता । अर्थदूषणमिति—“ अदानमादानं विनाशः परित्यागो वार्थस्येत्यर्थदूषणम् ” आह ( कौ० ८–३–१२९ ) कौटिल्यः । अदानं पूर्वदत्तस्य पुनरदानं तेन पूर्वदत्तोऽप्यर्थो विनष्टो भवति । आदानमिति दत्तस्य पुनराच्छेदनमपि तथैवानर्थाय भवति। इत्येवं नाशोऽपि चौरादिभिरपहारोऽपि । त्याग इत्युपनतस्यार्थस्य परित्यागः । द्यूतमक्षक्रीडा। दूषणमुच्यते । पानं मद्यपानम् स्त्री तदासक्तिः । मृगया पापर्द्धिः। इत्यादि व्यसनं पृथिवीपतेरिति । उपलक्षणमेतत् सामान्यजनस्यापि यथा ॥

आलस्यं स्तब्धता दर्पः प्रमादो वैरकारिता ।
इति पूर्वोपदिष्टञ्च सचिवव्यसनं स्मृतम् ॥ ६२ ॥
अतिवृष्टिरनावृष्टिर्मूषकाः शलभादयः ।
असत्करश्च दण्डश्च परचक्राणि तस्कराः ॥ ६३ ॥
राजानीकप्रियोत्सर्गो मरकव्याधिपीडनम् ।
पशूनां व्यसनं रोगो राष्ट्रव्यसनमुच्यते ॥ ६४ ॥
विशीर्णयन्त्रप्राकारपरिखात्वमशस्त्रता ।
क्षीणघासेन्धनान्नत्वं दुर्गव्यसनमुच्यते ॥ ६५ ॥

---

स्तब्धता मानः । दर्पो मदः । प्रमादोऽनवधानता । पूर्वोपदिष्टं वाक्पारुष्यादि ॥ ६२ ॥

मूषिकाः शलभादय इति । आदिशब्दादग्निदुर्भिक्षोपग्रहः । असत्करः अशोभनः करः अतिमहत्त्वात् । परचक्राणि परबलं पीडाहेतुत्वात् ॥ ६३ ॥

राजानीकप्रियोत्सर्गं इति । राज्ञो यत्सैन्यं, ये च वल्लभाः, तेषामनियमनमुत्सर्गः । मरकव्याधिपीडनं मनुष्याणाम् ॥ ६४ ॥

यन्त्रं सर्वतोभद्रादि । परिखा—खातकम् ॥ ६५ ॥

---

मन्वादिपठिता यपि व्यसनान्यभिधातुमाह—( आलस्यमिति । ) आलस्यमनुद्योगः । स्तब्धता गुरुष्वप्रश्रयः । दर्पः शौर्याद्यहङ्कारः । प्रमादो गीतादिषु श्रोत्रेन्द्रियाद्यासक्तिः । वैरकारिता कारणं विनैव बहुभिः सह वैरकरणम् । अतिदेशमभिधातुमाह—इति पूर्वोपदिष्टमिति । इत्येतदालस्यादि पञ्चसङ्ख्यं पूर्वोपदिष्टं च वाक्यारुष्यादि सप्तसङ्ख्यं यथा महीपतेस्तथा सचिवस्यापि व्यसनमिति ॥ ६२ ॥

राष्ट्रव्यसनमभिधातुमाह—( अतिवृष्टिरिति । ) तस्करा आटविकादयः । शेषं सुगमम् ॥ ६३ ॥

( राजानीकेत्यादि । ) राजानीकानां स्वामिबलानां, प्रियाणां च स्वामिवल्लभानां राष्ट्रे उत्सर्गः स्वयंग्राहप्रवर्तनं राष्ट्रव्यसनमुच्यते ॥ ६४ ॥

दुर्गव्यसनमभिधातुमाह—( विशीर्णेति । ) यन्त्राणि बहुमुखसर्वतोभद्रजामदग्न्यादीनि । प्राकारपरिखे प्रतीते । तद्विशीर्णं भग्नं यत्र तत्त्वम् । अशस्त्रता धनुरादिशस्त्ररहितत्वम् । घासो हस्त्यादीनामाहारः । इन्धनान्ने प्रतीते । तत्क्षीणत्वं दुर्गव्यसनमुच्यते ॥ ६५ ॥

व्ययीकृतः परिक्षिप्तो भक्षितोऽसञ्चितस्तथा।
मुषितो दूरसंस्थश्च कोशव्यसनमुच्यते ॥ ६६ ॥

उपरुद्धं परिक्षिप्तं विमानितममानितम्।
अभृतं व्याधितं श्रान्तं दूरायातं नवागतम् ॥ ६७ ॥

परिक्षीणं प्रतिहतं प्रहताग्रजवं तथा।
आशानिर्वेदभूमिष्ठमनृतप्राप्तमेव च ॥ ६८ ॥

कलत्रगर्भ्यतिक्षिप्तमन्तःशल्यं तथैव च।
भिन्नगर्भं ह्यपसृतमेवमुक्तं तथैव च ॥ ६९ ॥

क्रुद्धमौलारिमित्रश्च निविष्टं चापि विद्विषा।
दूष्ययुक्तं स्वविक्षिप्तं मित्रविक्षिप्तमेव च ॥ ७० ॥

विच्छिन्नवीवधासारं शून्यमूलं तथैव च।
अस्वामिसङ्गतं चैव भिन्नकूटं तथैव च ॥ ७१ ॥

दुष्पार्ष्णिग्राहमन्धं च बलव्यसनमुच्यते।

---

व्ययीकृतः असद्व्ययेन। परिक्षिप्तः मण्डलस्थानेषु खण्डखण्डेनावस्थितः। भक्षितः कामिभिः। असञ्चितः दुर्न्यस्तः। मुषितः सामन्ताटविकादिभिः। दूरसंस्थो विजिगीषुप्रदेशात् ॥ ६६ ॥

दण्डव्यसनमाह—उपरुद्धमित्यादि ॥ ६७—७१ ॥

अत्र किञ्चिदिति। त्रयस्त्रिंशद्बलव्यसनेषु। तदुच्यते यत्साध्यमसाध्यञ्च

---

कोशव्यसनमभिधातुमाह—( व्ययीकृत इति। ) व्ययीकृतो भृत्यादिभ्यो दत्तः। परिक्षिप्तो बहुधा विक्षिप्तः। भक्षितो रक्षकादिभिः। असञ्चितस्तथा असङ्गृहीतः। मुषितश्चौरादिभिः। दूरसंस्थो व्यवहितः। प्रस्तावे कोशसाध्यस्य कार्यस्याकरणात् इत्येतत्कोशव्यसनम् ॥ ६६ ॥

बलव्यसनोद्देशमभिधातुमाह—( उपरुद्धमित्यादि। ) सुगममेतत् ॥ ६७, ६८, ६९, ७०, ७१ ॥

( दुष्पार्ष्णिग्रहमिति। दुष्पार्ष्णिग्रहमन्धं चेति बलव्यसनोद्देशः। बलव्यसनान्युद्दिश्य यथाक्रमं तत्सङ्ख्यां साध्यासाध्यतां च व्याख्यातुमाह—अत्र किञ्चिदसाध्यमित्यादि। अत्रैतेषां बलव्यसनानां मध्ये किञ्चिदसाध्यं न किञ्चित्साध्यं

अत्र किञ्चिदसाध्यं तु किञ्चित् साध्यं तदुच्यते ॥७२॥
उपरुद्धं तु युध्येत निर्गत्यान्यत ऊर्जितम् ।
परिक्षिप्तं न निर्मार्गं सर्वतः परिवेष्टितम् ॥ ७३ ॥
अमानितं हि युध्येत कृतमानार्थसङ्ग्रहम् ।
न विमानितमत्यर्थं प्रदीप्तक्रोधपावकम् ॥ ७४ ॥
युध्येताभृतमत्यर्थं तदात्वकृतवेतनम् ।
न व्याधितमकर्मण्यं व्याधितं परिभूयते ॥ ७५ ॥
परिश्रान्तं हि युद्ध्येत विश्रान्तं सुविधानतः ।

---

॥ ७२ ॥

अन्यत इति अनुपरुद्धेन मार्गेण निर्गत्य । सर्वतः परिवेष्टितं निर्गमाभावात् कथं युध्येत ॥ ७३ ॥

कृतमानार्थसङ्ग्रहं–कृतो मानार्थाभ्यां स्वीकारो यस्येति विग्रहः । विमानितं–वाक्पारुष्यादिना । क्रोधपावकः क्रोध एव पावकः ॥ ७४ ॥

तदात्वकृतवेतनं–समुत्पन्नकार्यकाले दत्तवेतनम् । अकर्मण्यं व्याधिपीडितत्वाद्युद्धादिकर्मासमर्थं परिभूयते च ॥ ७५ ॥

विश्रान्तं सुविधानतः स्नानभोजनस्वप्नादिभिः । हतमाणं दूराध्वपरिपीडि-

---

तदुच्यते ॥ ७२ ॥

( उ रुद्धमिति । उपरुद्धं शत्रुणा कृतोपरोधम् । निर्गत्यान्योय( ना )दिना यदूर्जितं बलवद्भवति तदा युध्येत । परिक्षिप्तं नेति परि समन्तात् वेष्टितं (सर्वतः निर्मार्गं ) न युध्येत ॥ ७३ ॥

( अमानितमिति । ) कृतो मानार्थाभ्यां सङ्ग्रहो यस्य । न विमानितमिति विगतमानं न युध्येत; यतः प्रदीप्तक्रोधपावकम् ॥ ७४ ॥

( युध्येतेति । ) युध्येताभृतामिति अकृतभरणं तत्कालकृतात्यर्थवेतनं युध्येत । न व्याधितं व्याधिपीडितं युध्येत । अकर्मण्यं यतो यतो युद्धायोग्यं भवति तथा अरिभिर्व्याप्तं परिभूयते ॥ ७५ ॥

( परिश्रान्तमिति । ) अध्वनि परिश्रमगतं युध्येत । विश्रान्तं सुविधानतः स्नानभोजनादिना प्रहतश्रमम् । दूरायातामिति दूरात् मित्रकार्यप्रसिध्यायातम् । हत-

दूरायातं हतप्राणं न शस्त्रग्रहणे क्षमम् ॥ ७६ ॥
नवागतं हि युध्येत तद्देश्यैर्मिश्रितं नयात् ।
हतमुख्यप्रवीरं तु परिक्षीणं न युध्यते ॥ ७७ ॥
युध्यते हि प्रतिहतं प्रवीरैः सह सङ्गतम् ।
हताग्रवेगं शक्तं न प्रमाथितपुरस्सरम् ॥ ७८ ॥
आशानिर्वेद्यलब्धार्थं पूर्णाशत्वात्तु युध्यते ।
अभूमिष्ठं प्रसारे न निरुद्धेऽल्पतया भुवः ॥ ७९ ॥
युध्येतानृतसम्प्राप्तं यथार्हायुधवाहनम् ।

---

त्वात् ॥ ७६ ॥

नवागतं—अन्यदेशादागतम् । तद्देश्यैस्तत्रत्यैर्बलैः । मिश्रितं नयात् तद्देश्योपलब्धदेशम् । हतमुख्यप्रवीरम् अन्यत्राहवे । ( परिक्षीणं ) क्षीणवाहनयोधम् ॥ ७७ ॥

प्रतिहतं—प्रथमसम्पातभग्नम् । प्रमाथिपुरस्सरं निहताग्रवीरं शूराभावान्न तच्छक्तम् ॥ ७८ ॥

आशानिर्वेदीति । प्रत्याशाया निर्वेदो भङ्गोऽस्यास्तीति मत्वर्थीयः । अभूमिष्ठमयुद्धयोग्यभूमिमाप्तम् । प्रसारो व्यायामः, तस्मिन् भूमेरल्पत्वात् निरुद्धे ॥ ७९ ॥

यथार्हायुधवाहनम्—यथाकालैरायुधवाहनैर्युक्तम् । कलत्रगर्भि चेति अयु-

---

प्राणं निष्प्राणम् । न शस्त्रग्रहणक्षमं यतः ॥ ७६ ॥

( नवागतमिति । ) नवागतमिति अभिनवागतम् । तद्देश्यैस्तद्देशभवैः बलैर्मिश्रं युध्येत तन्नयात् तद्देश्योपदेशात् । हतमुख्यप्रवीरं त्विति हता मारिता मुख्यप्रवीरा युद्धधुरन्धरा यस्य तत्परिक्षीणं न युध्यते ॥ ७७ ॥

( युध्येतेति । ) प्रतिहतमन्यैर्वीरैर्भग्नम् । सहसङ्गतं ( प्रवीरैः ) मिलितमिति । ( हताग्रवेगं । ) हताग्रजवं नो शक्तं योद्धुं प्रविविद्धपुरस्सरं यस्मात् ॥ ७८ ॥

( आशेति । ) ( अभूमिष्ठमिति ) युध्यत इत्यनुवर्तते ॥ ७९ ॥

( युध्येतेति । ) सत्वानुरूपसम्पादितायुधवाहनं युध्येत । कलत्रगर्भमिति कलत्रं कुलस्त्री गर्भे विद्यते यस्य बलस्य तत् उचितकलत्रं सङ्गरक्षमं समरसमर्थ

कलत्रगर्भि चोज्झितकलत्रं संमरक्षमम् ॥ ८० ॥
अनेकराज्यान्तरितमतिक्षिप्तं न युध्यते ।
अन्तर्गतामित्रशल्यमन्तःशल्यं हि न क्षमम् ॥ ८१ ॥
अन्योन्यस्माद्विनिर्भिन्नं भिन्नगर्भं न युध्यते ।
तथैवापसृतं शक्तं नैकराज्यान्तरीकृतम् ॥ ८२ ॥
एवमुक्तमपक्रान्तमुख्यं तन्न क्षमं युधि ।
पितृपैतामहं मौलं तत् क्रुद्धं सान्त्वितं क्षमम् ॥ ८३ ॥
मित्रं शत्रुभिरेकस्थं तदाक्रान्ततयाऽक्षमम् ।

द्धयोग्यः स्त्रीकर्मकरवर्गः कलत्रं, तेनान्तः प्रविष्टेन युक्तम् । समरं युद्धम् ॥८०॥
अनेकराज्यान्तरितं–शत्रुमित्रादिराज्यातिक्रान्तम् । अमित्र एव शल्यम् ॥ ८१ ॥

अन्योन्यस्माद्विनिर्भिन्नं परस्परभयान्न युध्येत । नैकराज्यान्तरीकृतमिति शत्रुराज्यैनैकान्तारितं न युध्यते । एतच्चातिक्षिप्ताल्लघुव्यसनम् ॥ ८२ ॥

अपक्रान्तमुख्यमिति । शौर्यादियुक्ता मुख्याः, तेऽपसृता यस्मात्तद्बलमपक्रान्तमुख्यम् । तन्न क्षमं युधि । मुख्येषु हि युद्धं न क्षुद्रेषु । सान्त्वितं क्षममिति, यत्र मौलं कुपितं, तत्सान्त्वित युधि क्षममिति योज्यम् ॥ ८३ ॥
एकस्थमिति–शत्रुभिः सह यात्रायामेकस्थानास्थितम् । तदरिमित्रं बलम् । तदाक्रा-

भवति ॥ ८० ॥

( अनेकेति । ) अनेकराज्यान्तरितामिति मित्रादिसाहाय्यार्थं प्रेषितमनेकै राज्यैरन्तरितं भूत्वा यदायातम् । आतिक्षिप्तं सुदूरं प्रेषितं न युध्यते, अत्यर्थं श्रान्तत्वात् । अन्तर्गतामित्रशल्यमन्तःशल्यमुच्यते तदुपकाराक्षमं युद्धस्य ॥८१॥

( अन्योन्यस्माद्विनिर्भिन्नामिति । ) भिन्नगर्भं न युध्यते । नैकराज्यान्तरीकृतमिति । एकमण्डलेनान्तरितस्वमण्डलव्यवहितं तदपसृतमुच्यते । स्वभूमेरपध्या-( सृ ? ) तत्वात् ॥ ८२ ॥

( परिक्रुष्टमिति । ) परिक्रुष्टमपक्रान्तमुख्यमुच्यते । तन्न क्षमं युद्धे । अनार्यत्वात् । पितृपैतामहं मौलमित्युच्यते, यच्चेत्क्रुद्धं स्वामिनि तत्सान्त्वितमपनीतक्रोधं क्षमं युध्यते ॥ ८३ ॥

( मिश्रमिति । ) शत्रुभिरेकस्थं तदाक्रान्ततया शत्रुभिर्निरुद्धायामतया

शत्रोरुपनिविष्टं चासामर्थ्यान्न क्षमं युधि ॥ ८४ ॥
दूष्ययुक्तं तदुद्धाराद् युध्येतोद्धृतकण्टकम् ।
प्रधानयोधसङ्गुप्तं दूष्ययुक्तं समुत्पतेत् ॥ ८५ ॥
स्वाविक्षिप्तं स्वविषये क्षिप्तमापद्युदाहृतम् ।
प्रकृष्टदेशकालत्वान्मित्रक्षिप्तमयौगिकम् ॥ ८६ ॥
धान्यादेर्वीवधः प्राप्तिरासारस्तु सुहृद्बलम् ।

---

न्ततयेति, अरिमित्रापगृहीतत्वादक्षमम् । उपनिविष्टं शत्रोः समीपे निविष्टम् । पृथग्यानावस्थितं, प्राधान्यानवस्थानादाक्रान्तं भवति । ततश्चासामर्थ्यान्न क्षमं युधि ॥ ८४ ॥

तदुद्धारादिति । शल्योद्धारात् उद्धृतकण्टकं भवति । अनुद्धारे वा गत्यन्तरमाह–प्रधानयोधसङ्गुप्तमिति । आप्तयोधाधिष्ठितं हि दूष्ययुक्तं समुत्पतेद्युध्येत् ॥ ८५ ॥

स्वाविक्षिप्तं–आपद्युदाहृतम् । कौटिलीये तथा ह्युक्तं “स्वविक्षिप्तं स्वभूमौ विक्षिप्तं सैन्यमापदि शक्यमावाहयितुं, न मित्रविक्षिप्तं (वि)प्रकृष्टदेशत्वात्” इति (कौ०अ० ८–५–१३३–१३४) मित्रविक्षिप्तं असाध्यसाधनार्थं मित्रेषु दत्तम् ॥ ८६ ॥

धान्यादेरिति, आदिशब्दात्स्नेहक्षारलवणभैषज्यादिपरिग्रहः । स्वदेशाच्चेषां

---

युद्धस्याक्षमम् । शत्रोरुपनिविष्टं समी(प)कृतशिबिरनिवेशं सामर्थ्याभावात्तदप्यक्षमम् ॥ ८४ ॥

(दूष्ययुक्तमिति । दूष्ययुक्तं शिबिर(रे ?)युक्तं न युध्येत । तदेवोद्धृतकण्टकमपनीतदूष्यं युध्येत । पक्षान्तरमाह–प्रधानयोधसङ्गुप्तं दूष्ययुक्तमपि युद्धार्थं समुत्पतेत् ॥ ८५ ॥

(स्वविक्षिप्तमिति ।) स्वविषये क्षिप्तं यदाऽऽपत्कर्षणात् हतमङ्गीकृतं तत्सम्पतेत् युद्धायेत्यनुवर्तते । प्रकृष्टदेशकालत्वात् मित्रकार्यप्रसाधनार्थमुत्क्षिप्तमयौगिकं युद्धयोगाय न भवति ॥ ८६ ॥

(धान्यादेरित्यादि ।) आदिग्रहणात् स्नेहवस्त्रादिकं सर्वं स्कन्धावारोपयोगि गृह्यते । तस्य प्राप्तिर्वीवध उच्यते । आसारः सुहृद्बलम् । विच्छिन्नवीवधा-

विच्छिन्नवीवधासारं बलं युद्धाय नेष्यते ॥ ८७ ॥
कृतजानपदारक्षं शून्यमूलं युधि क्षमम् ।
पितृपैतामहं मौलं तेन शून्यं हि न क्षमम् ॥ ८८ ॥
युध्यते शून्यमूलं हि यत्नान्मौलेन पालितम् ।
अस्वामिसङ्गतं नैवं स्वामिना यद्विनाकृतम् ॥ ८९ ॥
न युध्यते भिन्नकूटं भिन्नकूटमनायकम् ।
पश्चात्कोपातिसन्तप्तं दुष्पार्ष्णिग्राहमक्षमम् ॥ ९० ॥
अदेशिकं स्मृतं ह्यन्धं तन्मूढत्वात् क्रियाऽक्षमम् ।

---

पृष्ठतः माप्तिर्वीवधः, मित्रबलमासारः, तदुभयं विच्छिन्नं यस्य, तदाहारादिवैकल्यान्न युद्धाय ॥ ८७ ॥

शून्यमूलमिति । शून्यं स्थानीयं यस्य तज्जानपदैः कृतमूलरक्षणं सर्वसन्दोहेन युध्येत ॥ ८८ ॥

स्वामिना यद्विनाकृतमिति । यन्नापद्यधिष्ठितं तदस्वामिसङ्गतं नैव युधि क्षमम् ॥ ८९ ॥

भिन्नकूटमनायकं—विनष्टात्मीयस्वामिपदम् । ( सति स्वामिपदे ? ) तदर्द्धवधामर्षितं भर्तृपिण्डेन निर्वेशार्थं युध्येत । दुष्पार्ष्णिग्राहमिति । दुष्टः पार्ष्णिग्राहो यस्य तत्, किमयं करिष्यतीति पृष्ठाभिघातत्रस्तं, न तत्क्षमम् ॥ ९० ॥

अदेशिकमिति, देशिक उपदेष्टा । स्वयं तावद्बलमदेशकुशलं, तस्योपदे-

---

सारं सैन्यं युद्धाय नेक्ष्यते । आहारप्रतिबलाभावात् ॥ ८७ ॥

( पितृपैतामहमिति । ) युद्धस्य भवतीति शेषः । कृतजानपदारक्षं शून्यमूलं, जानपदैः कृता मूलस्य बलकलत्रादिस्थानस्य रक्षा यस्य तत् युधि क्षमं भवति ॥ ८८ ॥

( युध्यत इति । ) ( स्वामिना यद्विनाकृतं ) तदपि युद्धाक्षमं भवति ॥ ८९ ॥

( न युध्यत इति । ) न युध्यते भिन्नकूटमस्यैव व्याख्या भिन्नकूटमनायकम् । बलसहस्राधिष्ठाता नायक उच्यते, तद्रहितमपि न युद्धक्षमम् । पश्चात्कोपाभिसन्तप्तं दुष्पार्ष्णिग्रहं तदप्यक्षमम् ॥ ९० ॥

( अदेशिकमिति । ) देशानभिज्ञं तदन्धं स्मृतं; तन्मूलत्वाद्युद्धक्रियाया

बलव्यसनमित्यादि तत्समीक्ष्य समुत्पतेत् ॥ ९१ ॥
दैवोपपीडितं ग्रस्तं मित्रं शत्रुबलेन च।
कामक्रोधसमुत्थैश्च दोषैः सम्परिकीर्तितैः ॥ ९२ ॥
नरेन्द्राद्याः प्रकृतयः सप्त याः परिकीर्तिताः।

---

ष्टापि नास्तीत्यदेशिकम्। मूढत्वादन्धत्वादस्य सर्पवत्प्रवर्तनं क्रियास्वक्षमम्। बल-व्यसनमित्यादि। आदिशब्दात्कामकोपजव्यसनोपग्रहः। तत्समीक्ष्य साध्यासाध्य-तया ॥ ९१ ॥

मित्रव्यसनमाह—दैवोपपीडितमिति। दैवव्यसनाभिभूतं, कामक्रोधसमुत्थितै-र्मृगयादिभिर्वाक्पारुष्यादिभिश्च स्वदोषैर्ग्रस्तम् ॥ ९२ ॥

अरिविजिगीष्वोः प्रकृतिव्यसनयौगपद्ये सौकर्यतो यातव्यं चेति दर्शयितु-माह—नरेन्द्राद्या इति। पूर्वं पूर्वं गुरुतरामिति, तत्र मित्रव्यसनाद्दण्डव्यसनं गरीयः। दण्डेन मित्रामित्राणां साधनात्। दण्डवतो मित्राणि मित्रभावे तिष्ठन्ति, अमित्राश्च मित्रभावे। ततोऽपि कोशव्यसनं गरीयः, कोशेन हि क्षीणं बलं वर्धते। कोशा-भावे च दण्डः परं गच्छति। ततोऽपि दुर्गव्यसनं—तत्र हि कोशदण्डयोः संश्र-यात्। तदभावे च कोशः परेषामेव स्यात्। ततोऽपि जनपदव्यसनं, तन्मूलत्वाद्दु-र्गकोशदण्डमित्राणाम्। तस्मादप्यमात्यव्यसनं गरीयः, जनपदे हि सर्वारम्भाणाम-मात्यपूर्वकत्वात्सर्वकर्मसिद्धीनां तद्व्यसनप्रतीकारस्य च। ततोऽपि स्वामिव्यसनं, स्वामिना हि शेषप्रकृतीनामसम्पन्नानां सम्पादनात्, सम्पन्नानां चाभिवर्धनात्

---

अक्षमम्। उपसंहरन्नाह—बलव्यसनमित्यादीति। अत्र बलग्रहणादन्यान्यपि द्यूत-स्त्रीपानादीनि गृह्यन्ते। तत्समीक्षणं प्रतीकारपर्यवसानं द्रष्टव्यम्। पश्चाद्युद्धार्थं समुत्पतेदिति ॥ ९१ ॥

मित्रव्यसनमभिधातुमाह—(दैवेति।) दैवान्युपपीडनानि उक्तप्रकाराणि व्याधिमरकादीनि तैर्ग्रस्तमाक्रान्तं मित्रं, शत्रुबलेन चाक्रान्तं तथा कामक्रोधादि-समुत्थैश्च दोषैः—मृगयाक्षाः स्त्रियः पानमिति कामजश्चतुर्वर्गः वाक्पारुष्यं दण्डपारु-ष्यमर्थदूषणमिति क्रोधजस्त्रिवर्गः एभिर्दोषैरनन्तरं सम्परिकीर्तितैर्ग्रस्तं (इति) मित्रव्यसनमुच्यते इति भावः ॥ ९२ ॥

(नरेन्द्रेति।) आचार्यैः (इति शेषः) मित्रव्यसनाद्दण्डव्यसनं ततोऽपि कोशव्यसनं ततोऽपि दुर्गव्यसनं ततोऽप्यमात्यव्यसनममात्यव्यसनात् स्वामिव्यसनं

पूर्वं पूर्वं गुरुतरं तासां व्यसनमुच्यते ॥ ९३ ॥
इत्यादि सर्वं प्रकृतेर्यथावद् बुध्येत राजा व्यसनं प्रयत्नात्।
बुद्धया च शक्त्या व्यसनस्य कुर्यादकालहीनं व्यवरोपणं सः ॥ ९४ ॥
प्रकृतिव्यसनानि भूतिकामः समुपेक्षेत न हि प्रमाददर्पात्।
प्रकृतिव्यसनान्युपेक्षते यो न चिरात्तं रिपवः पराजयन्ते ॥ ९५ ॥
इदमिदामिति सम्यक् कर्मणा योजनीयं
नियतमिति विचिन्त्य प्रापयेदीहमानः।

---

॥ ९३ ॥

व्यसनप्रदर्शनफलमाह—इत्यादीति। अकालहीनं व्यवरोपणं, कालातिक्रमे हि तदप्रतीकार्यमपि स्यात् ॥ ९४ ॥

यदाह—प्रकृतिव्यसनानीत्यादि। प्रमादाद्दर्पात्कामासङ्गात् शौर्यावलेपाच्च ॥ ९५ ॥

इदमिति वस्तुमात्राभिधानान्नपुंसकलिङ्गता। इतिशब्दस्तस्मादर्थे। प्रकृतिव्यसने यस्मादयं दोषस्तस्मादियं प्रकृतिरनेन कर्मणा योजनीया, तेन चेयमिति

---

गरीयो भवति ॥ ९३ ॥

(इतीति।) इत्यनन्तरोक्तक्रमेण प्रकृतं प्रस्तुतं सर्वं वाग्दण्डयोश्च पारुष्यमित्यादिबलव्यसनपर्यन्तं यथावत्तत्त्वतो बुध्येत जानीयात् राजा प्रजारञ्जनप्रवणः व्यसनं प्रयत्नात्। बुध्या च शक्त्या व्यसनस्य कुर्यादकालहीनं व्यपरोपणमपनयनम्। कालात्यये हि व्याधिरिवासाध्यं स्यादिति ॥ ९४ ॥

व्यसनोपेक्षणे दोषं दर्शयन्नाह—(प्रकृतीति।) इन्द्रियार्थेषु गीतवाद्यादिषु प्रसक्तिरत्र प्रमादोऽभिधीयते। दर्पः पौरुषादिजनितः। तस्मात् प्रकृतिव्यसनान्युपेक्षते यो राजा न चिरात्तं रिपवः पराभवन्तीति प्रतीतम् ॥ ९५ ॥

(इदमिति।) इदं चेदं कार्यं स्वविषये दुर्गादिकं पराविषये सन्ध्यादिकं विचिन्त्य मन्त्रपूर्वकं निश्चित्य कर्मणा योजनीयम्। मन्त्रपूर्वकत्वादनुष्ठानस्य। नि-

सुनयपिहितरन्ध्रः प्राकृतो यस्य वर्गः
क्षितिपतिरुपभुङ्क्ते स त्रिवर्गं चिराय ॥ ९६ ॥

इति प्रकृतिव्यसनं नाम द्वाविंशं प्रकरणम् ।

इति श्रीकामन्दकीयनीतिसारे उत्साहप्रशंसा प्रकृति-
कर्म-प्रकृतिव्यसनानि नाम चतुर्दशः सर्गः ।

---

सम्यग्विचिन्त्य पश्चाच्चे मानस्तान्नियतं कर्म प्रापयेत् प्रकृतिम् ॥ ततः किं स्या-दित्याह—सुनयपिहितरन्ध्र इति, कर्मप्रापणलक्षणेन सुनयेन प्रच्छादितव्यसनः । प्राकृतः सप्तप्रकृतिको वर्गः ॥ ९६ ॥

इति प्रकृतिव्यसनं नाम द्वाविंशं प्रकरणम् ।

इति शङ्करार्यकृतायां नीतिसारपञ्जिकायां जयमङ्गलायामुत्साह-
प्रशंसा—प्रकृतिकर्म—प्रकृतिव्यसनानि नाम
चतुर्दशः सर्गः ।

---

यतं निश्चयेन प्रापयेत् समाप्तिमिति वाक्यशेषः । सुनयेन शास्त्रानुष्ठानेन पिहितं रन्ध्रं व्यसनं यस्य प्रकृतीनां स्वाम्यादीनां वर्गः समूहो यस्य क्षितिपतेः सोऽत्र भुङ्क्ते त्रिवर्गं धर्मार्थकामाख्यं चिराय चिरकालम् ॥ ९६ ॥

( इति द्वाविंशं प्रकृतिव्यसनप्रकरणम् । )

इति कामन्दकीयनीतिसारटीकायामुपाध्यायनिरपेक्षायाम्
उत्साहप्रशंसा—प्रकृतिकर्म—प्रकृतिव्यसनानि नाम
चतुर्दशः सर्गः ॥

## अथ पञ्चदशः सर्गः ।

### २३ सप्तव्यसनवर्गप्रकरणम् ।

अमात्याद्याः प्रकृतयो मित्रान्ता राज्यमुच्यते ।
अशेषराज्यव्यसनात् पार्थिवव्यसनं गुरु ॥ १ ॥
राजा त्वव्यसनी राज्यव्यसनापोहनक्षमः ।
न राजव्यसनापोहसमर्थं राज्यमूर्जितम् ॥ २ ॥
आत्मामात्यप्रजादुर्गकोशानां दण्डमित्रयोः ।

---

## अथ पञ्चदशः सर्गः ।

### २३ सप्तव्यसनवर्गप्रकरणम् ।

प्रकृतिव्यसनेषु सप्तवर्गस्य महाव्यसनत्वात्तद्दोषदर्शनार्थमस्मिन्सर्गे सप्तव्यसनवर्ग उच्यते । तत्रेदं विचिन्त्यते " पूर्वं पूर्वं गुरुतर " मित्युक्तं ( सर्गः १४-श्लो० ९३ ) तत्र राज्ञो राज्यस्य चोभयोर्व्यसने कतरद्गुर्वित्याह अमात्याद्या इति । अशेषराज्यव्यसनात् पार्थिवव्यसनं गुर्वीति सप्तप्रकृतिकं राज्यमिति नेह द्रष्टव्यमिति । अशेषराज्यव्यसनादिति । अमात्यानां बहुत्वात्तद्व्यसनमेव गुर्वीति पूर्वपक्षवादिनोऽभिप्रायः ॥ १ ॥

राज्यव्यसनापोहनक्षमः, स्वयमव्यसनित्वाद्राज्यव्यसनापोहनसमर्थः । राज्यमूर्जितमपि । स यच्छीलस्तच्छीलास्तस्य प्रकृतयो भवन्ति, उत्थाने प्रमादे च तदायत्तत्वात् । कूटस्थानीयो हि स्वामीति ॥ २ ॥

तस्मादात्मीयव्यसनापोहे स एव दक्ष इत्याह–आत्मेत्यादि । तत्र द्विधा राजा चक्षुष्मानचक्षुष्मांश्च । चक्षुष्मानपि द्विविधः सुगृहीतशास्त्रोऽगृहीतशास्त्रश्च ।

---

## अथ पञ्चदशः सर्गः ।

### २३ सप्तव्यसनवर्गप्रकरणम् ।

व्यसनसमस्तदोषाद् राजराज्ययोर्दोषपरमार्थमभिधातुमाह–( अमात्येति । ) अमात्यः आद्यो यासां ताः षडपि मित्रान्ता राज्यमुच्यते । शेषं प्रतीतम् ॥ १ ॥

एतदेव समर्थयन्नाह–( राजेति । ) ऊर्जितं बलवदपि ॥ २ ॥

( आत्मेति । ) आत्मनः अमात्यानां प्रजाया दुर्गस्य कोशस्य दण्डमित्रयोश्च व्यसनेभ्यः समुन्नेता वियोजको राजा यः स त्रिवर्गभाक् धर्मार्थकामभाजनं

व्यसनेभ्यः समुन्नेता राजा यः स त्रिवर्गभाक् ॥ ३ ॥
अशास्त्रचक्षुर्नृपतिरन्ध इत्यभिधीयते ।
वरमन्धो न चक्षुष्मान् मदादाक्षिप्तसत्पथः ॥ ४ ॥
मन्त्रिभिर्मन्त्रकुशलैरन्धः सन्तार्यते नृपः ।
चक्षुष्मांस्तु मदान्धः सन्नात्मानं हन्त्यशेषतः ॥ ५ ॥
शास्त्रचक्षुर्नृपस्तस्मान्महामात्रमते स्थितः ।
धर्मार्थप्रतिघातीनि व्यसनानि परित्यजेत् ॥ ६ ॥
वाग्दण्डयोश्च पारुष्यमर्थदूषणमेव च ।

---

तत्र यः सुगृहीतशास्त्रश्चक्षुष्मान् स व्यसनेभ्यः समुन्नेता समुत्थापयिता ॥३॥

अशास्त्रचक्षुरिति । शास्त्रमेव चक्षुस्तदस्य नास्तीति कृत्वा अन्ध उच्यते । वरमन्धो न चक्षुष्मानिति । चलितशास्त्रस्त्वचक्षुष्मान् । स हि शास्त्रादन्यथाभिनिविष्टबुद्धिर्ज्ञानमदाक्षिप्तसन्मार्गो भवति ॥ ४ ॥

तदेव स्फुटयन्नाह—मन्त्रिभिरिति—अन्धः सन्तार्यते पथि निवेश्यते नृपः धर्मादि " त्याचार्यरविगुप्तपादैः ( वादैः ? ) अशेषतः सह राज्येन हन्तीत्यर्थः ॥ ५ ॥

यस्मादन्धेऽपि न दोषः, तस्मात्सुगृहीतशास्त्रचक्षुषा भवितव्यं, तस्यैव व्यसनापोहनसामर्थ्यात् । यदाह शास्त्रचक्षुरिति, महामात्रमते स्थितः नृपामात्ययोर्हि परस्परानुकूलयोः सर्वसम्पत्सम्भवात् । धर्मार्थप्रतिघातीनीति, धर्मार्थयोः प्रधानत्वात्तदुपघातीनि त्यजेत् ॥ ६ ॥

तानि व्यसनान्याह—वागित्यादि । क्रोधजं व्यसनत्रयं, वाक्पारुष्यादीनां

---

भवति । नेतर इति ॥ ३ ॥

( अशास्त्रचक्षुरिति । ) शास्त्रं नीतिशास्त्रं चक्षुर्यस्य स तथा न शास्त्रचक्षुरशास्त्रचक्षुः सोऽन्ध इत्यभिधीयते । वरमन्धो लोचनरहितः न चक्षुष्मान् सलोचनो मदाद्गर्वादाक्षिप्तः परित्यक्तः सत्पथः सन्मार्गः ( येन ? ) ॥ ४ ॥

( मन्त्रिभिरिति । ) अशेषतः सराज्यमपीत्यर्थः ॥ ५ ॥

( शास्त्रचक्षुरिति । ) ॥ ६ ॥  वाग्दण्डयोश्च पारुष्यव्यसनविभागमभिधातुमाह—( वाग्दण्डयोरिति । )

स्मृतं व्यसनतत्त्वज्ञैः क्रोधजं व्यसनत्रयम् ॥ ७ ॥
कामजं मृगया द्यूतं स्त्रियः पानं तथैव च ।
व्यसनं व्यसनार्थज्ञैश्चतुर्विधमुदाहृतम् ॥ ८ ॥
वाक्पारुष्यं परं लोक उद्वेजनमनर्थकम् ।
न कुर्याद् विप्रियां वाचं प्रकुर्याज्जनमात्मसात् ॥ ९ ॥
अकस्मादेव यः कोपात् परुषं बहु भाषते ।
तस्मादुद्विजते लोकः सस्फुलिङ्गादिवानलात् ॥ १० ॥
हृदये वागसिस्तीक्ष्णो मर्मच्छिन्निपतन् मुहुः ।
तेजस्विनं दीपयति स दीप्तो याति वैरिताम् ॥ ११ ॥
नोद्वेजयेज्जगद्वाचा रूक्षया प्रियवाग् भवेत् ।
प्रायेण प्रियवाक्कर्मा कृपणोऽपि हि सेव्यते ॥ १२ ॥

---

कोपसमुत्थत्वात् ॥ ७ ॥

कामजं व्यसनं चतुर्वर्गं मृगयादीनामिच्छाप्रभवत्वात् ॥ ८ ॥

तत्रैकादशभिः श्लोकैः कोपजस्य दोषानाह—वाक्पारुष्यमित्यादि । अपवादः कुत्सनम। अभिभर्त्सनं चेति वाक्पारुष्यम् । तदनर्थकं न कुर्यात् । कार्यापेक्षया क्रियमाणं न व्यसनमिति ॥ ९ ॥

कथं तदुद्वेजनमित्याह—अकस्मादित्यादि । बहुभाषणं दुरुक्तमित्यर्थात्। तस्मादुद्विजते लोको दुर्वचनदण्डत्वात् ॥ १ ॥

दोषान्तरमाह—हृदय इत्यादि ॥ ११ ॥

नोद्वेजयेत् जगत् यथोक्तदोषपरिहारार्थम् । प्रियवाक्कर्मा प्रियाभिधायी, कृपणः अदाता ॥ १२ ॥

---

मिति प्रतीतम् ॥ ७ ॥

( कामजमिति । ) इति प्रतीतम् ॥ ८ ॥

( वाक्पारुष्यमिति । ) वाचां पारुष्यं तीक्ष्णत्वं अत एवोद्वेजनमनर्थकं अनर्थमपायं करोतीति । तस्मात्तन्न कुर्यात् इति । केवलं प्रियया वाचा कुर्यां जनमात्मसादिति प्रतीतम् ॥ ९ ॥

( अकस्मादिति । ) इति प्रतीतम् ॥ १० ॥

( हृदय इति । ) इति सुगमम् ॥ ११ ॥

( नेति । ) कृपणो लुब्ध उच्यते ॥ १२ ॥

असिद्धसाधनं सद्भिः शासनं दण्ड उच्यते।
तं युक्त्यैव नयेद्दण्डं युक्तदण्डः प्रशस्यते ॥ १३ ॥
उद्वेजयति भूतानि दण्डपारुष्यवान् नृपः।
भूतान्युद्वेज्यमानानि द्विषतां यान्ति संश्रयम् ॥ १४ ॥
आश्रिताश्चैव लोकेन समृद्धिं यान्ति विद्विषः।
समृद्धाश्च विनाशाय तस्मान्नोद्वेजयेत् प्रजाः ॥ १५ ॥
लोकानुग्रहकर्तारः प्रवर्धन्ते महीभुजः।
लोकवृद्ध्या नरेन्द्राणां वृद्धिस्तत्सङ्क्षये क्षयः ॥ १६ ॥

---

दण्डपारुष्यमाह "असिद्धसाधनमिति। अर्थहरणं ताडनं, वधश्चैतन्नित-यमसिद्धार्थसाधनादनुशासनं दण्डः। तं युक्त्यैव नयेदनुशास्ये यथार्हमेव प्रवर्त-येत्। युक्तदण्डस्य राज्ञः प्रशस्यत्वात्। तेनैवंविधो न व्यसनमिति ॥ १३ ॥

अयुक्तो दण्डचे चादण्डचे च प्रवर्तमानो दोषावहत्वाद्व्यसनमिति आह उ-द्वेजयतीत्यादि ॥ १४ ॥

आश्रिता विद्विष इति सम्बन्धः। लोकेनोद्वेजितेन। विनाशाय विजिगी-षोः ॥ १५ ॥

लोकानुग्रहकर्तार इति। धान्यपशुहिरण्योपसङ्ग्रहैर्लोकमनुगृह्णन्तो वर्धन्ते, दण्डवाक्पारुष्याच्च निगृह्णन्तः क्षीयन्ते, यदाह लोकवृद्ध्येति। अनुगृहीते लोके जनवृद्ध्या राज्ञां वृद्धिः। निगृहीते तु तत्सङ्क्षयात्क्षयः ॥ १६ ॥

---

दण्डपारुष्यमभिधातुमाह—( असिद्धेति। ) दण्डो द्विविधः असिद्धस्य प्र तिपक्षादेर्दण्डनक्रियया साधनं दण्डः तथा शासनं शिक्षणमपि दण्ड उच्यते। तथा च कौटिल्यः—" वधः परिक्लेशोऽर्थहरणं च दण्ड " इति। तं युक्त्यैव शास्त्रोक्तप्रमाणेन नयेत्। दण्डचे शासनीये जने। युक्तदण्डः प्रशस्यते ॥ १३॥

( उद्वेजयतीति। ) इति सुगमम् ॥ १४ ॥

[ संश्रयाच्चैव लोकस्य विवृद्धिं यान्ति विद्विषः।
विवृद्धिस्तु विनाशाय तस्मान्नोद्वेजयेत्प्रजाः ॥
]

( संश्रयादिति। )

( आश्रिता इति। ) इति प्रतीतम् ॥ १५ ॥

( लोकेति। ) अस्य व्याख्या सुगमा ॥ १६ ॥

महत्स्वप्यपराधेषु दण्डं प्राणान्तिकं त्यजेत् ।
ऋते राज्यापहारात्तु तत्र दण्डः प्रशस्यते ॥ १७ ॥
दूष्यस्य दूषणार्थं हि परित्यागो महीयसः ।
अर्थस्य नीतितत्त्वज्ञैरर्थदूषणमुच्यते ॥ १८ ॥
तदकस्मात् समाविष्टः कोपेनातिबलीयसा ।
नित्यमात्महिताकाङ्क्षी न कुर्यादर्थदूषणम् ॥ १९ ॥

---

दण्डेष्वपि वधाख्यं दण्डं लोकजिघृक्षार्थं त्यजेदित्याह–महत्स्वपीति । बन्धताडने तु अनुशासनार्थं प्रवर्तयेदेव । ऋते राज्यापहारादिति, राज्यापहारे त्वपराधे वधाख्य एव दण्डः प्रशस्यते, तदर्थत्वात्प्रयासस्य ॥ १७ ॥

अर्थदूषणमाह–दूष्यस्येत्यादि । अर्थदूषणमर्थस्योपघातः । तथाह्युक्तम् " अदानमादानं विनाशः परित्यागश्चार्थस्येत्यर्थदूषणम् " ( कौ० अ० ८-३-१२९ ) तत्र पूर्वप्रवृत्तस्यार्थस्योच्छेदाददानम् । तस्य पण्यागारादिनाऽऽकर्षणमादानम् । स्वयमार्जितस्याग्न्यादिना विध्वंसनं विनाशः । कुताश्चिल्लभ्यमानस्य विघातनेन परित्यजनं परित्यागः । तदिदं क्रोधोत्कर्षसन्दर्शनार्थं परित्यागादर्थदूषणमुक्तम् । दूषणार्थमपकारार्थम् । यद्दूष्योऽन्यस्तस्मान्महीयांसमर्थं प्राप्स्यति । तस्यार्थस्य विघातनेन परित्यजनमर्थदूषणम् ॥ १८ ॥

तच्च दूष्ये क्रियमाणमव्यसनं अन्यत्र तु व्यसनमेवेत्याह–तदकस्मादिति । कार्यं विनेत्यर्थः । कोपेनातिबलीयसेति महतः कोपात्परित्यागाख्यमर्थदूषणमुत्पद्यत इति दर्शयति, यस्मादन्यस्मादपि लभ्यमानमर्थं घातयति ॥ १९ ॥

---

( महत्स्विति । ) अत्रापि प्रतीतम् ॥ १७ ॥

अर्थदूषणमभिधातुमाह–( दूष्यस्येति । ) कौटिल्येनाप्युक्तम् । ' अदानमादानं विनाशस्त्याग " इति ( ८–३–१२९ ) तदपि कोपेनैव यन्न दीयते तत्कृतार्थदूषणमुच्यते । कोपेनैव यदादीयते तत्कृतार्थक्षतिर्विनाशोऽपि कोपेनैवोपलक्षितार्थस्य त्यागो विदूष्य वधार्थं यद्बहु दीयते; इत्येकमेव तत्कौटिल्यशिष्ययोर्मतम् ॥ १८ ॥

( तादीति । ) इति स्पष्टार्थम् ॥ १९ ॥

यानक्षोभो यानपातो यानाभिहरणं तथा ।
क्षुत्पिपासाश्रमायासशीतवातोष्णपीडनम् ॥ २० ॥
अभियानस्य सम्पत्त्या यानव्यसनजं महत् ।
दुःखं प्रतप्तसिकताकुशकण्टकभूमयः ॥ २१ ॥
वृक्षसङ्कटजा देशा लताकण्टकपाटनम् ।
शैलपातशिलाजालस्थाणुवल्मीकपीडनम् ॥ २२ ॥
प्रच्छन्नोपहितैः शैलसरिद्विपिनकुक्षिषु ।
वधबन्धपरिक्लेश आसन्नाटविकादिभिः ॥ २३ ॥

---

इदानीं सप्तचत्वारिंशता श्लोकैः कामजस्य दोषा उच्यन्ते । तत्र मृगयामधिकृत्याह—यानेत्यादि । यानक्षोभः यानकृतोऽङ्गसङ्क्षोभः । यानात्प्रधावतः पातः । यानेन प्रजविना, अभिहरणम् अनभिमतदेशप्रापणम् । पीडनशब्दः क्षुदादिभिः प्रत्येकं योज्यः । आयासः पण्यादीनां व्यापारक्लेशः ॥ २० ॥

अभियानस्य सम्पत्त्येति । अभिमुखीभूतस्यान्यदीयाश्वस्य सम्पातेनात्मीयाश्वयानस्याघातः, पातो वा व्यसनं, तस्माज्जातं महद्दुःखं भवति, अश्ववराणाक्रम्य तस्य सम्पतनात् । प्रतप्तसिकतादिभिः कुशकण्टकैश्च चितभूमयो दुःखहेतवः ॥ २१ ॥

वृक्षसङ्कटजा देशाः, तत्र हि प्रविष्टस्य दुःखेन निर्गमनम् । तत्र कम्भारीकण्टकारिकादिलताकण्टकैः पाटनम् । तथा शैलात्पातो मृगमनुसरतः शिलाजालादिभिः पीडनम् ॥ २२ ॥

प्रच्छन्नोपहितैरिति । अवस्कन्दादिदानार्थं शैलादिकुहरेषु प्रच्छन्नलीनैः । आसन्नाटविकादिभिरिति । आदिशब्दात् स्तेनावरुद्धाद्युपग्रहः ॥ २३ ॥

---

मृगयाव्यसनदोषानभिधातुमाह—( यानक्षोभ इति । ) यानमत्राश्वाद्यभिधीयते । शेषं प्रतीतम् ॥ २० ॥

( अभियानस्येति । ) एतत्प्रतीतम् ॥ २१ ॥

( वृक्षेति । ) अत्रापि सुगमम् ॥ २२ ॥

( प्रच्छन्नेति । ) प्रच्छन्नोपगतैर्निभृतायातैः । सामन्ताटविकादिभिः कृता वधबन्धपरिक्लेशाः सम्भवन्ति ॥ २३ ॥

स्वसैन्यैश्च स्वकुल्यैश्च परभिन्नैश्च मारणम् ।
ऋक्षाजगरमातङ्गसिंहव्याघ्रभयादि च ॥ २४ ॥
दवाग्निधूमसंरोधो दिङ्मोहभ्रमणानि च ।
इत्यादि पृथिवीन्द्राणां मृगयाव्यसनं स्मृतम् ॥ २५ ॥
जितश्रमत्वं व्यायाम आममेदःकफक्षयः ।
चलस्थिरेषु लक्ष्येषु बाणसिद्धिरनुत्तमा ॥ २६ ॥
मृगयायां गुणानेतानन्ये प्राहुर्न तत् क्षमम् ।
दोषाः प्राणहराः प्रायस्तस्मात् तत् परिवर्जयेत् ॥२७॥
आमादयो हि जीर्यन्ति योग्ययैव दिवानिशम् ।

स्वकुल्यैः परभिन्नैरिति । राज्यार्हा यूयं, कथं विजिगीषुणैकेनाक्रम्य भुज्यमानमुपेक्षन्ते भवन्तः, वयं च सहाया इति परेण भिन्नैर्विजिगीषुसैन्यैश्च मृगयां गतस्य प्रमापणमाघातः ( तैः ? ) । साक्षादृक्षादिभ्यः प्राणोपघातिभ्यो भयादीति ॥ २४ ॥

अरण्यमध्यवर्तिनो वनाग्निधूमाभ्यां प्राणोपघाती संरोधः । दिङ्मोहभ्रमेण रिपुविषयगमनमपि स्यादित्यादिदोषजातं मृगयाव्यसने स्मृतम् । आदिशब्दात् दशरथादिवच्छापादेरपि भयं द्रष्टव्यम् ॥ २५ ॥

राज्ञो गुणानावहति मृगयेत्यन्ये, यदाह—जितश्रमत्वमिति । चलस्थिरेष्विति, धावत्सु तिष्ठत्सु च बाणसिद्धिर्लक्ष्यसाधनात् ॥ २६ ॥

न तत्क्षममिति, न तन्मृगयाव्यसनं युक्तम् ॥ २७ ॥

कुतस्तर्हि तद्गुणा इत्याह—आमादय इति, योग्यया आयुधवाहनशिक्ष-

( स्वसैन्यैरिति । ) ॥ २४ ॥

( दावाग्नीति । ) दोषजातमिति वाक्यशेषः ॥ २५ ॥

( जितश्रमत्वमिति । ) अनुत्तमेति यस्या अन्या उत्तमा नास्तीति ॥ २६ ॥

( मृगयाया इति । ) महत् महादोषकरमित्यर्थः । शेषं स्पष्टम् ॥२७॥

मृगयोक्तगुणा अन्यथा सम्पद्यन्ते इति दर्शयन्नाह—( आमादय इति । ) आममेदःकफादयः योग्यया शस्त्रवाहनाभ्यासयोग्यतयैव क्षीयन्ते । अहर्निशं चलेषु

चलेषु यन्त्रलक्ष्येषु बाणसिद्धिश्च जायते॥ २८॥
अथ चेन्मृगयाक्रीडावाञ्छा तन्नगरान्तिके।
कारयेन्मृगयारण्यं क्रीडाहेतोर्मनोहरम्॥ २९॥
परिक्षिप्तं परिखया दुर्गया मृगगम्यया।
आयामपरिणाहाभ्यामर्धयोजनसम्मितम्॥ ३०॥
गिरेरुपान्ते नद्या वा पर्याप्तजलशाद्वलम्।
अकण्टकलतागुल्मं विषपादपवर्जितम्॥ ३१॥
पादपैः पुष्पफलदैः प्रज्ञातैश्चित्तहारिभिः।
स्निग्धनीलघनच्छायैर्विरलैरुपशोभितम्॥ ३२॥
पांसुपूरितनिश्छिद्रश्वभ्रप्रदरकन्दरम्।
दलितस्थाणुवल्मीकपाषाणसमभूतलम्॥ ३३॥

---

या। यन्त्रलक्ष्येषु यन्त्रघटितेषु मृगादिलक्ष्येषु॥ २८॥

तन्नगरान्तिके, राजनगरसमीपे। मृगयारण्यं—मृगयावनम्॥ २९॥

परिक्षिप्तं—परिवेष्टितं, दुर्गया मनुष्यागम्यया। मृगगम्ययेति आगतमृगवधार्थम्। आयामो दैर्घ्यम्। परिणाहो विस्तारः॥ ३०॥

गिरेर्नद्या वेति, उभयोर्मृगाश्रयत्वात्॥ ३१॥

प्रज्ञातैर्लोकप्रतीतैः। विरलैः यानवाहनानुपरोधकैः॥ ३२॥

पांसुभिः पूरितत्वान्निश्छिद्राः अश्वादिसञ्चरणार्थं श्वभ्रा यत्रेति विग्रहः। प्रदरो भूमेः स्फुटितम्। दलितस्थाण्वादित्वात्समभूतलम्॥ ३३॥

---

यन्त्रलक्ष्येषु धावत्प्लुतकमृगादिषु बाणसिद्धिश्च जायते॥ २८॥

पक्षान्तरमाह—( अथ चेदित्यादि। ) व्याख्या सुगमा॥ २९॥

( परिक्षिप्तमिति। ) परिक्षिप्तं वेष्टितं, परिखया खातिकया, परिखा माकैरमप्यपेक्षते रक्षणार्थम्। मृगाणामप्यगम्यया, अन्यथा मृगा निस्सरन्तीति। आयामपरिणाहाभ्यामर्द्धयोजनं द्विगव्यूतिप्रमाणमित्यर्थः॥ ३०॥

( गिरिरित्यादि। ) इति सुगमम्॥ ३१॥

( पादपैरिति, पांसुपूरितेत्यादि। )॥ ३२, ३३॥

शोधितग्राहसलिलमगम्भीरजलाशयम् ।
नानापुष्पसमाकीर्णं नानाविहगसेवितम् ॥ ३४ ॥
सुपात्यमृगसम्पूर्णं हास्तिनकलभान्वितम् ।
भग्नदंष्ट्रनखव्यालं छिन्नशृङ्गविषाणि च ॥ ३५ ॥
सुखसंसेव्यलतया पुष्पपर्णावनद्धया ।
वनराज्या परिक्षिप्तं परिखातटजातया ॥ ३६ ॥
बहिर्दूरान्तराभोगनिर्वृक्षस्तम्भभूतलम् ।
अगम्यं रिपुसैन्यानां मनःप्रीतिविवर्धनम् ॥ ३७ ॥
तद्वनेचरचित्तज्ञैः क्लेशायाससहैर्दृढैः ।
रक्षितं रक्षिभिः स्वाप्तैर्भूभुजामभिवृद्धये ॥ ३८ ॥

---

ग्राहो नक्रादिः । तदपनयनात् परिभोग्यं जलं भवति । अगम्भीरत्वाच्च तदवगाहनयोग्यो जलाधारः ॥ ३४ ॥

सुपात्यः सुखव्यापाद्यः । कलभः पोतः । व्यालाः व्याघ्राः । विषाणिनो गण्डकादयः । ते तु भग्ननखदंष्ट्रत्वात्कलितमृगत्वाच्च नाभिभवन्ति ॥ ३५ ॥

सुखसंसेव्यलतयेति । अकण्टकिनी निर्विषा च लता सुखसंसेव्या भवति । वनराज्या परिक्षिप्तं मोहार्थं विश्रमार्थञ्च ॥ ३६ ॥

बहिर्दूरान्तराभोगेति—परिखाया इत्यर्थात् । दूरे क्रोशमात्रान्तरे यो वनाभोगो वनवैस्तार्यं समन्तात् , तत्र समन्तान्निर्वृक्षं निस्तम्भञ्च भूतलं यस्य । एवं च निराश्रयत्वात्तदगम्यं रिपुसैन्यानाम् ॥ ३७ ॥

तद्वनेचरचित्तज्ञैरिति । तस्मिन् वने मृगाणां दुष्टादुष्टपरिज्ञानार्थं ये वनेचराः पुलिन्दादयो निवासिकाः तदनुकूलै रक्षिभिरिति सम्बन्धः । दृढैः स्थिरैः । स्वाप्तैः परस्याभेद्यैः ॥ ३८ ॥

---

( शोधितेत्यादि । ) ( नानाविहग ) शोभितं सङ्कुलमिति ॥ ३४ ॥

( सुपात्येति, सुखसंसेव्येति । ) ॥ ३५, ३६ ॥

( बहिर्दूरान्तराभोगमिति । ) (निर्वृक्षसमभूतलमिति) निर्वृक्षः ( निः ) क्षुप उच्यते । शेषं सुगमम् ॥ ३७ ॥

( तद्वनेचरचित्तज्ञैरिति । ) वने मृगयावने । शेषं सुगमम् ॥ ३८ ॥

तत्कर्माप्तो नरेन्द्रस्य जनो जितपरिश्रमः ।
क्रीडनायात्र विविधा मृगजातीः प्रवेशयेत् ॥ ३९ ॥
अन्यकार्याविरोधेन प्रातश्चङ्क्रमणक्षमः ।
क्रीडनाय विशेद्राजा तदाप्तैः सहितो मितैः ॥ ४० ॥
यदा च प्रविशेद्राजा क्रीडनार्थं तदा बहिः ।
सन्नद्धं यत्नतास्तिष्ठेत् सैन्यं दूरान्तगोचरम् ॥ ४१ ॥
सद्भिर्यो मृगयायाने गुणः साधु प्रकीर्तितः ।
क्रीडाप्रीतिर्निरपातिस्तं तत्र स्वयमाप्नुयात् ॥ ४२ ॥
विधिरेष समुद्दिष्टो मृगयाक्रीडने परः ।
न गच्छेदन्यथा राजा मृगयां मृगयुर्यथा ॥ ४३ ॥

---

तत्कर्माप्तः मृगप्रवेशनकर्मकुशलः । जनो नरेन्द्रस्य नरेन्द्रानुरक्त इत्यर्थः, दुष्टमृगप्रवेशनिषेधार्थम् ॥ ३९ ॥

अन्यकार्याविरोधेन, अन्यकार्यविरोधित्वाद्व्यसनमेव स्यात्, प्रातः प्रविशेदिति सम्बन्धः । चङ्क्रमणक्षमः शरीरपाटवात् । तदाप्तैरिति, तन्मृगयारण्यम् । मितैः स्तोकैः ॥ ४० ॥

सन्नद्धं यत्नतास्तिष्ठेत् परावस्कन्दनपरिहारार्थम् । दूरान्तगोचरं दूरदेशवर्ति ॥ ४१ ॥

यथोक्तानुष्ठानफलमाह—सद्भिरिति । गुणः जितश्रमत्वादिः ॥ ४२ ॥

न गच्छेदन्यथा, यथोक्तदोषसम्भवात् । मृगयुर्व्याधः ॥ ४३ ॥

---

( तत्कर्माप्त इति । ) तत्कर्माप्तः तस्मिन् मृगयाकर्मणि आप्तः । शेषं सुगमम् ॥ ३९ ॥

( धर्मार्थाद्यविरोधेनेति । ) प्रातरिति न भुक्तोत्तरकालम् । चङ्क्रमणक्षमः अश्वाद्यभावेऽपि धावनादिसमर्थः । तदिति मृगयारण्यम् । मितैः परिमितैरिति ॥ ४० ॥

( यदा चेति, सद्भिर्य इति । ) ॥ ४१, ४२ ॥

( विधिरेष इति । ) मृगयुर्व्याधः ॥ ४३ ॥

महतोऽपि क्षणान्नाशो धनस्य ह्रीविमुक्तता ।
निस्सत्यता निष्ठुरता क्रोधो वाक्छस्त्रखण्डनम् ॥ ४४ ॥
लोभो धर्मक्रियालोपः कर्मणामप्रवर्तनम् ।
सत्समागमविच्छित्तिरसद्भिः सह वर्तनम् ॥ ४५ ॥
अर्थनाशक्रियावश्यं नित्यं वैरानुबन्धिता ।
सत्यप्यर्थे निराशत्वमसत्यपि च साशता ॥ ४६ ॥

विच्छेदः

द्यूतदोषानाह—महत इत्यादि । क्षणान्ना० एकेनैव पणेन । ह्रीविमुक्तता असभ्याचरणात् । निस्सत्यता—असमपाते विषमपात इत्यभिधानात् । निष्ठुरता द्यूतापहृतस्य धनस्य कृते परस्परव्यापादनात् । क्रोध इति । द्यूतासक्तमना हि केनाचित्कृच्छ्रे पृष्टः कुप्यति ।तथा परस्परकलहाद्वाचा खण्डनमाक्रोशनं शस्त्रखण्डनञ्च ॥ ४४ ॥

लोभः परद्रव्येषु द्यूतहृतेषु । कर्मणां सदा क्रियमाणानाम् । सत्समागमविच्छित्तिः, तत्प्रसंयुक्तस्य हि विद्यावृद्धानामनुपयोगात् । असद्भिः द्यूतकारिभिः ॥ ४५ ॥

अर्थनाशक्रिया केनचिन्निक्षिप्तस्याप्यर्थस्याहृतामीति नाशकरणम् । वैरानुबन्धिता अहमनेन संरुद्धो बद्ध इति । निराशत्वं निराशता पुनरपि जेष्यतीति । साशता समत्याशता जेष्यामीति ॥ ४६ ॥

द्यूतव्यसनदोषानभिधातुमाह—( महत इति । ) ह्रीविमुक्तता वसने हारिते नग्नो दीव्यतीति । ( निःसत्यता ) सत्यरहितत्वं पराजयभयात् । निष्ठुरता मातर्यपि मृतायां दीव्यतीति । क्रोधः हारितः पार्श्ववर्तिनामपि क्रुध्यतीति । वाक्शस्त्रखण्डनं क्रोधान्धो वाक्पारुष्यं करोतीति ॥ ४४ ॥

( लोभ इति । ) हारिते लोभात् चौर्ये बुद्धिः । द्यूतादरात् धर्मक्रियालोपः । प्रारब्धकर्मण्यप्रवर्तनम् । द्यूतासक्तं सन्तः परिहरन्तीति । असन्तः कितवाः तैः सह वर्तनम् ॥ ४५ ॥

( अर्थनाशक्रियेति । ) अवश्यमर्थनाशक्रिया जितोऽर्थमनुबध्नातीति । हारितवित्तो वैरिभवति । सत्यप्यर्थे( निराशत्वं )वित्तनाशात् । प्रतिक्षणं जयः पराजयो वा भाविष्यतीति( वि ? )त्तानुकूलो भाव ॥ ४६ ॥

प्रतिक्षणं क्रोधहर्षौ सन्तापश्च प्रतिक्षणम्।
प्रतिक्षणं च संक्लेशः साक्षिप्रश्नः प्रतिक्षणम्॥ ४७॥ साक्षिणि प्रश्नः।
स्नानादिगात्रसंस्कारपरिभोगेष्वनादरः।
अव्यायामोऽङ्गदौर्बल्यं शास्त्रार्थप्रत्युपेक्षणम्॥ ४८॥
गूहनं मूत्रशकृतोः क्षुत्पिपासोपपीडनम्।
इत्यादींस्तन्त्रकुशला द्यूतदोषान् प्रचक्षते॥ ४९॥
पाण्डवो धर्मराजस्तु लोकपाल इवापरः।

---

क्रोधो जीयमानस्य। हर्षो जयतः। सन्तापो हतार्थस्य। संक्लेशः संरोधादिः। साक्षिप्रश्नो विवादे साक्षिपृच्छा॥ ४७॥

स्नानादीति—आदिशब्दादभ्यङ्गदानाद्युपसङ्ग्रहः। अङ्गदौर्बल्यं भोजनवेलातिक्रमात्। यत्पूर्वमधीतं शास्त्रं तस्यार्थानिरूपणम्॥ ४८॥

गूहनं मूत्रशकृतोर्वेगप्राप्तयोरनिस्सारणाद्विधारणम्। इत्यादीनित्यादिशब्दात् स्तयापवादाद्युपसङ्ग्रहः॥ ४९॥

धर्मराजो युधिष्ठिरः। द्यूतेनासता कपटद्यूतेनेत्यर्थः। तथाहि तस्य प्राप्तराज्यस्य दुर्योधनो महीयसीं विभूतिं दृष्ट्वा तदतिसन्धानोपायं चिन्तयन् मातुलेन शकुनिनाऽक्षहृदयविदा द्यूतं कारितस्तद्देशश्च यदृच्छया युधिष्ठिरमागच्छन्तं देवनायाहूतवान्। सोऽप्याहूतेन क्षत्रियेण द्यूताद्रणाच्च न निवर्तितव्यमिति विधानं मत्वा अनेन सह देवितुमारेभे। तयोश्चेदमध्यवसितं "यदि दुर्योधनेन जितं, तदा युधिष्ठिरेण राज्यं त्यक्त्वा द्वादशवर्षाणि वने स्थातव्यं, त्रयोदशे वर्षे च अज्ञात-

---

(प्रतिक्षणमिति।) (साक्षिप्रश्नः) सन्दिग्धे क्षपातने साक्षिग्रहणम्॥ ४७॥

(स्नानादीति।)......अप्रत्यवेक्षणमनालोचनम्॥ ४८॥

(गूहनमिति।) गूहनं प्रच्छादनं मूत्रशकृतोः द्यूतान्तरायो मा भवत्विति। क्षुत्पिपासोपपीडनमिति द्यूतासक्त्या भवतीति। इत्यादीन् नीतिशास्त्रप्रवीणा द्यूतदोषान् प्रचक्षते॥ ४९॥

(पाण्डव इति।) पाण्डवः पाण्डुपुत्रो युधिष्ठिरः साक्षाद्धर्मराजः तद्व-

यास्यन् पुरो रक्ष्यमनेकवर्गमनेकमुख्यं च बलं विदध्यात् ।
अनेकमुख्यस्य हि नैकमत्यमनैकमत्यं द्विषतामभेद्यम् ॥ १७ ॥
अवश्ययातव्यतयोद्यतः सन् पश्चात्प्रकोपाहितयानशङ्कः ।
सेनापतिं वाप्यथवा कुमारं बलैकदेशेन पुरो निदध्यात् ॥१८॥
आभ्यन्तराद् बाह्यकृताच्च कोपादाभ्यन्तरस्त्वेव तयोर्गरीयान् ।
आदाय गच्छेदवहिः प्रचारान् बाह्यांश्च कृत्वा विहितार्थक-
ल्पान् ॥१९॥

---

यस्मान्मा भूत् पार्ष्णिभेद इति, तस्मात्पृष्ठारक्षं बलं निदध्यादित्याह– यास्यन्नित्यादि । पुरोरक्ष्यं–स्थानीयारक्षम् । शतको द्विशतको वा वर्गः, सोऽनेको यस्य । अनेकमुख्यमनेकवर्गस्वामि ॥ १७ ॥

यदा तु स्वयं जातशङ्कः, तदा द्वौ प्रेषयेदित्याह––पश्चात्प्रकोपाहितयानशङ्कः किं यायामह( हं )नेति । कुमारं युवराजम् । बलैकदेशेन तृतीयेन चतुर्थेन वांशेन पुरो निदध्यात्, पुरस्ताद्यातुं नियोजयेत् । स्वयं तु पश्चात्तिष्ठेदित्यर्थोक्तम् ॥ १८ ॥

कोपश्च बाह्याभ्यन्तरभेदेन द्विविध इत्याह––आभ्यन्तरादित्यादि । आभ्यतरो गरीयान् । बहिर्भावात् । आदाय सामादिभिः प्रसाध्य । अबहिः प्रचारानाभ्यन्तरान् कुपितान् । विहितार्थकल्पान् कृतप्रतिविधानत्वान्निर्दोषान् ॥१९॥

---

( यास्यन्निति ) विजिगीषुर्गन्तुमिच्छन् पुरो रक्ष्यं स्थानीयं रक्षकमनेकवर्गमिति अष्टवर्गैकप्रदशवार्गिकादयो वर्गा यस्मिन्( तत् ) अनेकवर्गं हस्त्यश्वाद्यनेकप्रधानं बलं विदध्यात् । कस्मादित्याह––अनेकमुख्यस्य हि नैकमत्य अभिन्नमतं अनैकमत्यं द्विषतामभेद्यं भवतीति ॥ १७ ।

( अवश्येत्यादि ) इति स्पष्टार्थम् । निदध्यात्कोशादिरक्षार्थमिति ॥१८॥

बाह्याभ्यन्तरकोपयोर्गुरुलाघवमभिधातुमाह––( अभ्यन्तरादिति ) अभ्यन्तरात्पुरोहितादिकृताद् बाह्यैरन्तपालाटविकादिभिः कृताच्च कोपादाभ्यन्तरस्त्वेव तयोर्गरीयान् । अहेरिवाभ्यन्तरात्कोपाद् भयं भवतीति । तस्मादाभ्यन्तरकोपशङ्कायामवहिःप्रचारानाभ्यन्तरानित्यर्थः । तानादाय पुरस्कृत्य गच्छेत् । बाह्यांस्तु वक्ष्यमाणप्रकारान् राष्ट्रान्तपालादीन् विहितार्थमानान् कृत्वा गच्छेदिति सम्बन्धः ॥ १९ ॥

पुरोहितामात्यकुमारकुल्याः सेनाभि(धि)गोप्तार इमे प्रधानाः ।
एषां हि मध्येऽन्यतमप्रकोपमन्तःप्रकोपं समुपादिशन्ति ॥२०॥
राष्ट्रान्तपालाटविकानतानां बाह्यप्रकोपोऽन्यतमप्रकोपः ।
उत्पाद्यमानं विपुणप्रचारैस्तं सत्रिभिः सम्यगुपाददीत ॥ २१ ॥
सामादिभिः संशमयेत् प्रकोपं परस्परावग्रहभेदनैश्च ।
तथा च धीरः शमयेत्प्रकोपं यथा भजेरन्न परान् प्रतप्ताः ॥२२॥

---

अमात्यो मन्त्री । कुल्यो विजिगीषू राज्यार्हः । सेनाभिगोप्ता—सेनापतिः । एषां स्कन्धावारान्तर्वर्तित्वात्तत्प्रकोपमन्तः प्रकोपम् ॥ २० ॥

राष्ट्रपालो राष्ट्रमुख्यः । अन्तपालो विषयान्तरक्षाधिकृतः । आटविका वनेचराः राजसधर्माणः । आनता दण्डोपनताः । एषां वहिर्वर्तित्वात् तत्प्रकोपो बाह्यप्रकोपः । तमिति बाह्यमाभ्यन्तरं वा । सत्रिभिः सञ्चारविशेषैः । सम्यगुपाददीत प्रसाधयेत् ॥ २१ ॥

कथमित्याह—सामादिभिरित्यादि । बाह्यमाभ्यन्तरञ्च कोपं सामादिभि प्रशमयेत् । परस्परावग्रहभेदनैश्च बाह्येनैव बाह्यान्, आभ्यन्तरेणैव( रेण ) चाभ्यन्तरान् अन्योन्येनावग्राहयेत् । अन्योन्यस्माच्च भेदयेदित्यर्थः । प्रतप्ता इति, नात्यर्थमुपताप्य कोपं शमयेत् । अन्यथा प्रवप्ताः परान् गच्छेयुः ॥ २२ ॥

---

बाह्याभ्यन्तरकोपप्रतिशममभिधातुं ( तत्स्वरूप ) माह—( पुरोहितामात्येत्यादि ) पुरोहितामात्यकुमाराः ( प्रतीताः ) । कुल्या विजिगीषुकुलभवाः । सेनाधिगोप्तारश्चतुरङ्गबलाधिष्ठातारः । इमे प्रधानाः । एषां हि मध्येऽन्यतमप्रकोपमन्तःप्रकोपं समुपादिशन्तीति प्रतीतम् । २० ॥

बाह्यकोपमभिधातुमाह—( राष्ट्रेत्यादि ) राष्ट्रपालाः समाहर्तृप्रजामुख्यादयः । अन्तपाला विषयसन्धिरक्षणनियुक्तदण्डनायकाः । आटविकाः अटवीभोक्तारः । अन्त्यजा म्लेच्छमुख्यादयः । तेषां मध्ये अन्यतमप्रकोपो बाह्यप्रकोपः । उत्पद्यमानं द्विविधमपि कोपं निपुणप्रचारैर्मन्त्रिभिस्तमुपाददीत जानीयात् प्रतीकारार्थम् ॥ २१ ॥

( सामादिभिरित्यादिः ) सामादिभिरुपायैर्द्विप्रकारं कोपं शमयेत् । परस्परावग्रहैः संरोधैर्भेदनैर्विश्लेषणैश्च तथा धीरो विजिगीषुः ( शमयेद् ) विकारं, यथा भजेरन्न परान् प्रतप्ताः । तथा च कोपं शमयेत् ॥ २२ ॥

मनुष्ययुग्यापचयः क्षयो हि हिरण्यधान्यापचयो व्ययस्तु ।
तस्वादिमां नैव विदग्धबुद्धिः क्षयव्ययायासकरीमुपेयात् ॥२३॥
अवश्यनिष्पत्तिमहाफलाढ्यामदीर्घसूत्रां परिणामकल्याम् ।
कामं व्ययायासकरीमुपेयान्न त्वेव जातु क्षयदोषयुक्ताम् ॥२४॥

---

क्षयव्ययापेक्षया यात्रां दर्शयितुमाह—मनुष्येत्यादि । मनुष्यः क्षुद्रो मुख्यश्च । युग्यं वाहनम् । हिरण्यं सुवर्णादि । तस्मादिमां यात्रामित्यर्थात् क्षयव्ययासकरीं नोपेयात् ॥ २३ ॥

( य ) तत्र क्षयव्ययाभ्यां बहुगुणविशिष्टो लाभः स्वल्पश्चायासः, तामुपेयादेव, यदाह—अवश्येत्यादि । अवश्यम्भाविभिर्महद्भिश्च फलैः स्फीतां क्षयव्ययकरीमपि । अदीर्घसूत्रां यानमात्रसाध्यफलाम् । तत्र हि स्वल्प आयासः । परिणामे कल्यां निराबाधामुपेयात् । कामं व्ययायासकरीमिति । एका क्षयकरी यात्रा । द्वितीया व्ययकरी । तृतीया चोभयकरी । तत्रोभयकरीं यथोक्तामुपेयादेव । शेषयोर्महाफलतादियोगेऽपि व्ययकरीमुपेयात्, नेतरां, व्ययात्क्षयस्य गरीयस्त्वात् ॥ २४ ॥

---

कीदृशीं यात्रां न यायादित्याह—( मनुष्येत्यादि ) क्षयव्ययायासकरीं यात्रां न यायादिति सम्बन्धः । क्षयव्ययायासलक्षणमभिधातुमाह—मनुष्याः पुरुषगुणोपेताः । युग्यानि युगे साधूनि वाहनानि । तेषामपचयो यः स क्षय इत्युच्यते । हिरण्यं सुवर्णादि । धान्यानि पूर्वमध्यावरवापानि । तेषामपचयो यः स व्यय उच्यते । आयासः अध्वखेदादिः । तस्माद्विदग्धबुद्धिर्विजिगीषुरेवंविधां यात्रां न यायादिति ॥ २३ ॥

यातव्या च यादृशी तादृशीमभिधातुमाह—( अवश्यनिष्पत्तीत्यादि ) अवश्यमभाविनी निष्पत्तिर्यस्य महाफलस्य तेनाढ्यां सम्पन्नाम् । अदीर्घसूत्रामप्यदीर्घकालाम् । प्रसमाप्तपरिणामां निर्दोषाम् । काममिति वरम् । वरशब्दश्चात्र शोभायां वर्तते । वरं व्ययायासकरीमुपेयात् । न त्वेव जातु नैव कदाचित् क्षयदोषयुक्तां मनुष्ययुग्यविनाशयुक्ताम् । यतस्तत्क्षयात् यात्राफलमेव न सम्पद्यते ॥ २४ ॥

वस्तुष्वशक्येषु समुद्यमश्च शक्येषु मोहादसमुद्यमश्च ।
शक्येष्वकालेषु समुद्यमश्च त्रिधैव कार्यव्यसनं वदन्ति ॥ २५ ॥
कामोऽक्षमा दक्षिणतानुकम्पा ह्रीः साध्वसं क्रौर्यमनार्यता च ।

---

पुरस्ताच्च लाभेप्सुना कार्यव्यसनादयो लाभविघ्नाः परिहर्तव्या इति । तद्दर्शनार्थमाह—वस्तुष्वित्यादि ॥ २५ ॥

कामो मृगयादिष्वासक्तिः । अक्षमा परगुणेषु । दक्षिणता सानुक्रोशता । अनुकम्पा दीनोऽयमिति । साध्वसमतर्कितात्भयम् । क्रौर्यं दौरात्म्यम् । अनार्यता साधुत्वानपेक्षणम् । दम्भो विसंवादकत्वम् । अभिमानोऽभ्युन्नतमन_

---

कार्यव्यसनमभिधातुमाह—( वस्तुष्वित्यादि ) वस्तुषु कार्येषु त्रिवर्गफलेषु, अशक्येष्वसाध्येषु समुद्यमः परमभियोगः । शक्येषु साध्येषु मोहादज्ञानादसमुद्यमोऽभियोगाभावः । शक्येष्वकालेषु समुद्यमश्च । चकारादेशेषु एवंविधस्यैव कार्यस्य व्यसनं वदन्त्याचार्याः । व्यसत्येनं श्रेयस इति व्यसनलक्षणम् । कार्यस्य फलं श्रेयस्तद्व्यस्यतीति कार्यासिद्धिस्तस्माद्व्यसनम् ॥ २५ ॥

अन्यान्यपि कार्यव्यसनान्यभिधातुमाह—( काम इत्यादि ) कामः श्रोत्रत्वगादीन्द्रियाणां शब्दादिष्वासक्तिः स्त्रीजने च । द्यूतमद्यमृगयादिषु च अक्षमा कोपः, तज्ज व्यसनत्रयम्—वाक्पारुष्यं दण्डपारुष्यमर्थदूषणमिति । एवमक्षमापि लाभविघ्नम् । दक्षिणता सानुक्रोशता । तत्पक्षानुरोधादनैष्ठुर्यम् । अनुकम्प कारुण्यम्—कार्ये साधितेऽस्य विपत्तिः स्यादिति । ह्रीरिति लज्जा, तद्वशाद्यथोचितानामकरणात् लाभविघ्नम् । साध्वसमप्रागल्भ्यम्—अप्रागल्भ्यात् कार्यं नाशयतीति । क्रौर्यं—क्रूरो ह्यनाश्रयणीयो भवतीति कार्यं न साधयति । अनार्यता चेति । आर्याः शिष्टास्तद्विपर्यया ये अशिष्टा अनार्याः सत्कार्याकरणाल्लाभविघ्नम् । मानो गर्वः—गर्वितो ह्यनाश्रयणीयो भवतीति लाभविघ्नम् । ( धार्मिकत्वम् ) परलोकापेक्षया भीरुत्वम्—तस्य परातिसन्धानं न सम्भवतीति लाभविघ्नम् । दम्भः परवञ्चकत्वम्—तस्याविश्वसनीयत्वाल्लाभविघ्नम् । अभिमानो मान एव । मानाच्च केवलं लाभविघ्नं क्षयहेतुत्वाद्धानिरेवेति । तथा च कौटिल्यः—“मानाद्रावणः परदाराप्रयच्छन्, दुर्योधनो राष्ट्राणि, क्षयमवाप ।” दैन्यमत्यल्पेच्छता । अल्पे-

दम्भोऽभिमानोऽर्थे च धार्मिकत्वं दैन्यं स्वयूथस्य विमाननञ्च ॥ २६ ॥

द्रोहो भयं शश्वदुपेक्षणञ्च शीतोष्णवर्षास्वसहिष्णुता च ।
एतानि काले समुपाहितानि कुर्वन्त्यवश्यं खलु सिद्धिविघ्नम् ॥ २७ ॥

निजोऽथ मैत्रश्च समाश्रितश्च सम्बन्धजः कार्यसमुद्भवश्च ।

---

स्कता । धार्मिकत्वं परलोकापेक्षणम् । दैन्यमल्पसंतुष्टता । स्वयूथस्य स्वपक्षस्य ॥ २६ ॥

द्रोहः प्रतिकूलाचरणम् । भयं स्वतो भीरुता । उपेक्षणं हस्तगतावधीरणम् । एतानि काल इति लाभकाले विहितानि ॥ २७ ॥

यियासुश्च विजिगीषुः पक्षवान् गुणवान् उत्पन्नपौरुषोऽनुकूलदैवश्च यायादिति दर्शयितुमाह—निज इत्यादि । निजो मौलः । मैत्रो मित्रसबन्धी । समाश्रितः आत्मरक्षाद्यर्थम् । सम्बन्धजः कन्यादानादिना कृतः । कार्यसमु-

---

च्छस्य हि महारम्भाणामप्रवृत्तेर्लाभविघ्नम् । स्वयूथ्यस्य विमाननमिति । सामुदायिकानां विमानन मानाकरणम् २६ ॥

( द्रोह इत्यादि ) द्रोहो मित्रद्रोहादिकं लाभविघ्नम् । भयमिति । सङ्कोशाधर्मानर्थभीरुर्भयेनेति कौटिल्या ( कौ० २–२५–७ ) भयमपि ( लाभविघ्नम् ) भयात् साध्यमपि ४ साधयति । शश्वदुपेक्षणं चेति । सिद्धानामप्यर्थानामन्यायाद्युपद्रवो( व उ ? ) पेक्षणमिति । शीतोष्णवर्षास्वसहिष्णुता च। असहिष्णुकथ काय साधयतीति लाभविघ्नम् । एतान्यन्यान्यपि काले, देशे चेत्यर्थात् : उपार्जितानि कुर्वन्त्यवश्यं खलु लाभविघ्नमिति ॥ २७ ॥

साहाय्यार्थं सप्तविधं पक्षमभिधातुमाह—( निजोऽथेति ) निज इति सुभृकबन्धुवर्गः । मैत्र इति निर्निमित्तपक्षः । समाश्रितः इति प्रतिपक्षभयाद्दाश्रयं गतः । सम्बन्धज इति यौनमौखस्रौचोदितः । यौनः कन्यादानग्रहणकृतः । मौखः मुखकृतश्च व्याख्यानादिभिः शिष्योपाध्यायकृतः । स्रौच इति यज्ञोपकरणं स्रुगित्युच्यते । तया होमेन दीक्षोत्तरकालं गुरुशिष्यलक्षणः ( ऋत्विग्यजमानयोः ) स्रौच इत्यभिधीयते । कार्यसमुद्भवश्च कार्यार्थे समुदिते तेन समुत्पन्नसख्यः । भृत

भृत्यो गृहीतो विविधोपचारैः पक्षं बुधाः सप्तविधं वदन्ति ॥२८॥
सदानुसृत्या गुणकीर्तनेन निन्दासहत्वेन च रन्ध्रगुप्त्या।
तदर्थशौचोद्यमसङ्कथाभिः पक्षोऽनुरागीति स वेदितव्यः ॥२९॥
कुलीनमार्यं श्रुतवाद्विनीतमलोलुपं सत्यमहार्यमन्यैः।
कृतज्ञतोर्जमतिसत्त्वयुक्तं सद्वृत्तपक्षं खलु तञ्च विद्यात् ॥३०॥
उद्योगमेधाधृतिसत्त्वसत्यत्यागानुरागस्थितिगौरवाणि।

---

द्भवः सामवायिकः। भृत्यः भृतिप्रतिबद्धः। गृहीतो विविधैरुपचारैर्भृतः ॥ २८ ॥

एषु सप्तसु योऽनुरागी सद्वृत्तश्च, ताभ्यां सह यायादित्यनयोः स्वरूपमाह—सदेत्यादि। अनुसृत्या अनुगमनेन। विजिगीषु कृता स्वनिन्दा तस्याः सहिष्णुत्वेन। रन्ध्रगुप्त्या विजिगीषुदोषप्रच्छादनेन। तदर्थशौचोद्यमसङ्कथाभिरिति—विजिगीष्वर्थेषु शौचमुद्यमः सङ्कथा च ॥ २९ ॥

अलोलुपमलुब्धम्। अहार्यमप्रतार्यम्। ऊर्जा बलम्। मतिः प्रतिभा। सद्वृत्तपक्षमिति। सद्वृत्तं पक्षं विद्यादिति सम्बन्धः ॥ ३० ॥

उद्योगः उद्यमः। मेधा बुद्धयुपलक्षणार्था। धृतिरनुद्विग्नता। अनुरागो विजिगीषोः प्रकृतीनाञ्च। स्थितिर्व्यवस्था। गौरवं विद्यावृद्धेषु। प्रसहिष्णुता च

---

इति भरणेनात्मसात्कृत इति। गृहीतो विविधोपचारैरिति भोजनाच्छादनादिभिः एवं पक्षं सहायवर्गं बुधाः सप्तविधं वदन्तीति प्रतीतम् ॥ २८ ॥

पक्षस्य विजिगीष्वनुरागलिङ्गान्यभिधातुमाह- (सदेति) सदा सर्वदैवानुसृत्यानुसरणेन। गुणकीर्तनेन विजिगीषुगुणानां ख्यापनेन। निन्दासहत्वेन च, रन्ध्रगुप्त्या छिद्रगोपनेन। तदर्थं शौर्योद्यमश्च तथार्थसङ्कथाश्चैताभिः पक्षः सप्तविधोऽनुरागीति वेदितव्यः ॥ २९ ॥

पक्षस्य गुणानभिधातुमाह—(कुलीनमित्यादि) कुलीनमुभयकुलविशुद्धम्। आर्यं कृतलक्षणम्। श्रुतं शास्त्रं श्रवणं च तद्विद्यते यस्यासौ श्रुतवांश्चासौ विनीतश्चेति तम्। अलोलुपं परस्त्रीधनादिष्वलम्पटम्। सत्यममृषावादिनम्। आहार्यमन्यैः प्रतिपक्षाभिहरणीयम्। कृतज्ञता, ऊर्जा बलं, मतिः प्रज्ञा, सत्वं व्यसनेऽभ्युदये च यदविकारि। तैर्युक्तं सद्वृत्तपक्षं सदाचारपक्षं खलु तं हि विद्यात् ॥ ३० ॥

उक्तापि विजिगीषोरात्मसम्पद् यानप्रसङ्गात् पुनरुच्यते अत्यादरार्थम्।

जितेन्द्रियत्वं प्रसहिष्णुता ह्रीः प्रागल्भ्यमित्यात्मगुणप्रवेकः ॥३१॥
मन्त्रस्यशक्तिंसुनयप्रचारंस्वंकोशदण्डौप्रभुशक्तिमाहुः ।
उत्साहशक्तिंबलवद्विचेष्टांत्रिशक्तियुक्तोभवतीह जेता ॥ ३२ ॥
शैघ्र्यं सुदाक्ष्यं व्यसनेष्वदैन्यमुत्साहसम्पद्युधि धीरता च ।

---

शीतादीनाम् । आत्मगुणप्रवेक इति, आत्मगुणानामयं प्रधानो गुणः । तेनाऽन्यगुणाभावेऽप्यभियास्यता तत्रादरः कार्यः ॥ ३१ ॥

सुनयप्रचारः——सन्ध्यादीनां सामादीनाञ्च यथावदवस्थापनम् । तच्च ज्ञानबलाद्भवतीति कार्यद्वारेण मन्त्रशक्तिरत्रोक्ता । कौटिलीये तु स्फुटमेवोक्तम् । "ज्ञानबलं मन्त्रशक्तिरिति" ( कौ० अ० ६–२–९७ ) स्वकोशद डाविति । स्वसम्पदुपेतौ कोशदण्डौ, प्रभुशक्तिः, तयोरेव प्रभुशक्तिनिष्पादने सामर्थ्यात् । तथा चाह——"कोशदण्डबलं प्रभुशक्तिरिति" । बलवद्विचेष्टां बलवतीं विक्रमचेष्टाम् । तथा चाह——"विक्रमबलमुत्साहशक्ति" रिति । त्रिशक्तियुक्तो जेता । अन्यथा ज्ञानविकलोऽप्रभावो निरुत्साहः कथं शत्रुं जयेत् ॥ ३२ ॥

उत्साहज्ञानयोर्भेदानाह-—शैघ्र्यमित्यादि । व्यसनेष्वदैन्यं परकृतेष्वभियोगादिषु व्यसनेषु सामर्षता । अतिधीरता अतिशौर्यम् । पुनरुत्साहगुणाख्यानम-

---

आह——( उद्योगेत्यादि ) उद्योगः उत्साहः । मेधाप्रज्ञा । धृतिरविषादिता । सत्यसत्त्वे कृतलक्षणे । त्यागः पात्रेषु दानम् । अनुरागो गुणेष्विति द्रष्टव्यम् । स्थितिरविचलनम् । गौरवं महिमा । एतानि, जितेन्द्रियत्वं कृतलक्षणम् । प्रसहिष्णुता च क्लेशायासादीनाम् । ह्रीर्लज्जा । प्रागल्भ्यं जितसभत्वम् । इतिप्रकारः आत्मगुणप्रवेकः आत्मसम्पदुक्तगुणानामेतेषां मध्ये एते गुणा विविक्ता इत्यर्थः ॥ ३१ ॥

शक्तित्रयस्वरूपमभिधातुमाह----( मन्त्रस्य शक्तिमित्यादि ) मन्त्रस्य शक्तिं सुनयप्रचारं, यस्य षाड्गुण्यस्य यथोद्देशावस्थानं नय इति कौटिल्यः । सुकोशदण्डौ शोभनकोशदण्डौ प्रभुशक्तिमाहुः । तथा च कौटिल्यः--"कोशदण्डबलं हि प्रभुशक्तिरिति । उत्साहशक्तिं बलवतो विजिगीषोर्विचेष्टामाहुराचार्याः । त्रिशक्तियुक्तो भवतीह राजा । शक्तिरहितस्तु राजैव न भवति ॥ ३२ ॥

उत्साहगुणानाह--( शैघ्र्यमित्यादि ) शैघ्र्यमाशुकार्यनिष्पादकत्वम् । सुदाक्ष्यं सुकौशलम् । व्यसनेष्वापत्सु अदैन्यमक्लैब्यम् । युधि सङ्ग्रामे धीरता

औत्पादिकी शास्त्रसमुद्भवा च सांसर्गिकी धीः परिणामिनी च ॥ ३३ ॥

उत्साहसत्त्वाध्यवसायचेष्टादार्ढ्यं च कर्मस्विह पौरुषं च ।
अरोगता कर्मफलोपपत्तिर्दैवानुकूल्यं च निराधिता च ॥ ३४ ॥

---

भियाने उत्साहः प्रधानमिति दर्शनार्थम् । औत्पादिकी उत्पत्तिप्रतिबद्धा । सा चाष्टाङ्गा तत्त्वतो भवति । शास्त्रसमुद्भवा—सम्यग्विज्ञातशास्त्रतत्त्वस्य तदनुस्यूता । सांसर्गिकी आहार्यबुद्धिः ज्ञानवृद्धसंसर्गादागता । परिणामिनी या तदात्वे नोत्पद्यते, किन्तु पश्चाद्बुद्धेः ( द्धिः ) स्वयं विमृशतो भवति । एताश्चतस्रो बुद्धयः सदा मन्त्रशक्तौ व्याप्रियन्ते ॥ ३३ ॥

उत्साहः शौर्यादिगुणयुक्तः । सत्त्वं व्यसनेऽभ्युदये च यदविकारकम् । अध्यवसायः इदं साधयामीति महार्थेषु चेतोवृत्तिः । स च सत्त्वपरिणामः । सत्त्वहीनस्य च तथाविधार्थसाधनाध्यवसायाभावात् । चेष्टा कायिको व्यापारः । दार्ढ्यं स्थैर्यम् । एतत्पञ्चविधं चित्तकायपरिस्पन्दरूपं पौरुषं पुरुषकर्म । अरोगता निर्व्याधिकता । कर्मफलोपपत्तिः यद्यत्कर्मारभते तस्य तस्याप्रतिहता फलनिष्पत्तिः । आधिः प्रियवियोगादिजं दुःखम् । एतत्त्रितयात्मकं दैवानुकूल्यमिति ॥ ३४ ॥

---

चाभीरुत्वम् । एतत्सर्वमुत्साहसम्पत् उत्साहगुणसमूहः । तथा च कौटिल्यः "शौर्यममर्षो दाक्ष्यं चोत्साहगुणा" इति । मेधाविशेषानभिधातुमाह--औत्पादिकीति । उत्पाद उत्पादनं तत्र भवा औत्पादिकी या नाम प्रतिभेत्युच्यते, ययानालोचित एवार्थः प्रतिभाति । शास्त्रसमुद्भवा शास्त्रसंस्काराद् या बुद्धिरुत्पद्यते । "श्रुताद्धि प्रज्ञोपजायते" इति वचनात् । सांसर्गिकी बुद्धिर्महाजनसमागमाद्या समुत्पद्यते । धीर्बुद्धिः परिणामिनी उक्तकारणव्यतिरेकेणैव परिणामात्परिपाकादन्वयव्यतिरेकाभ्यां विचार्यमाणे या परिणमत इति चतुर्विधा बुद्धिरिति ॥ ३३ ॥

भूयोऽपि यानगुणानुष्ठाने विजिगीषोः सामग्रीमभिधातुमाह—( उत्साहेत्यादि ) उत्साहः कृतलक्षणो मानस उद्योगः । सत्त्वमपि कृतलक्षणम् । अध्यवसायोऽधिकतरोऽव्यवसायः । तज्जनिता करणानां चेष्टा चलनस्पन्दनादिका । तत्र दार्ढ्यं दृढत्वं च । कर्मसु युद्धादिषु, अतिपौरुषमतिशौर्यम् । अरोगताव्याधिराहित्वम् । कर्मफलोपपत्तिः कर्मफलेन सहयोगेन या उपपत्तिर्भुक्तिः सा च यदा विद्यते दैवानुलोम्यं दैवस्य दृष्टफलसाधकस्यानुकूलता । निराधिता—मानस दुःखमाधिस्तस्मान्निर्गतो निराधिस्तस्य भावः ॥ ३४ ॥

पक्षादिनानेन गृहीतकोशः पक्षादिहीनं रिपुमभ्युपेयात् ।
इति प्रसर्पन् नियतं समुद्रप्रक्षालितां तां लभते धरित्रीम् ॥३५॥
कालो गजानां सजलाभ्रजालो यातुं तदन्यश्च तुरङ्गमाणाम् ।
नात्यर्थवर्षोष्णतुषारयुक्तः सम्पन्नसस्यस्त्विति कालसम्पत् ॥३६॥
रात्रावुलूको विनिहन्ति काकान् काकोऽप्युलूकान् रजनिव्यपाये।
इति स्म कालं समुदीक्ष्य यायात् काले फलन्तीह समीहितानि
॥ ३७ ॥
श्वा नक्रमाकर्षति कूलसंस्थं श्वानञ्च नक्रः सलिलाभ्युपेतम् ।

---

पक्षादिनेति । अनुरागी सद्वृत्तश्च पक्षः, गुणप्रवेकः, शक्तित्रयम्, पौरुषं-दैवानुलोम्यञ्च । एतैर्युक्तो यायात् । गृहीतकोश इति । वक्ष्यमाणदानकल्पनार्थं कोशग्रहणम् ॥ ३५ ॥

कालभेदाद्यपेक्षया यात्रां दर्शयितुमाह——काल इत्यादि । तदन्यः वर्षा-कालादन्यो हेमन्तो ग्रीष्मश्च । यदा तु । शीतोष्णवर्षाणां साम्यं तदा कालसम्प-दित्याह—नात्यर्थेत्यादि ॥ ३६ ॥

कालदेशवशाब्दलाबलं दृश्यत एवेत्याह—रात्रावित्यादि ॥ ३७ ॥

व्यायच्छमानश्चेष्टमानः । देशस्थितः स्वसैन्यव्यायामयोग्यदेशतास्थितः

---

( पक्षादिनेति ) पक्षः सप्तविधोऽप्यनन्यपरोक्तः । आदिग्रहणादौत्साहिका-दिबलयुक्तः । गृहीतकोशः " कोशाधीनो राजेतिवचनात् । पक्षादिहीनं रिपुमभ्युपेयात् । जयस्य निःसन्दिग्धत्वात् । इत्येवमुक्तप्रकारेण प्रसर्पन् विजि-गीषुः समुद्रप्रक्षालितानां चतुस्समुद्रमेखलां लभते धरित्रीं पृथिवीमिति ॥३५॥

कालदेशावभिधातुमाह ( काल इति )......न भवति यः । सम्पन्न-सस्यस्त्विति । कालसम्पत् कालगुणसमूहोऽपामिति ॥ ३६ ॥

अनुकूलमनिकूलकालयोर्गुणदोषानभिधातुमाह——( रात्रावित्यादि )...... लब्धकालबलात् सर्वं साधनीयामिति ज्ञात्वा आत्मबलानुकूलं कालं समीक्ष्य यायात् विजिगीषु । समीहितानिति पृथ्वीलाभपालनादीनि ॥ ३७ ॥

देशबलाबलमभिधातुमाह—( श्वा नक्रमित्यादि ) व्यायच्छमान उद्योगं कु

व्यायच्छमानो ध्रुवमभ्युपैति देशस्थितः कर्मफलोपभोगम् ।३८॥
समं तुरङ्गैर्विषमञ्च नागैस्तथा जलाढ्यं समहीरुहञ्च ।
नावावृतं पत्तिबलानुयातैर्यथाबलञ्च प्रसमीक्ष्य मिश्रम् ॥ ३९ ॥
मरुप्रगाढं पततीह तोये ग्रीष्मे त्वनूपोदककक्षदुर्गम् ।
मिश्रञ्च संवीक्ष्य यथासुखञ्च गच्छेन्नरेन्द्रो विजयाय देशम् ॥४०॥
न चातितोयं न च तोयहीनं युक्तञ्च सम्यग्यवसेन्धनेन ।

---

॥ ३८ ॥

तदेवदर्शयन्नाह——सममित्यादि । देशं गच्छेदिति वक्ष्यमाणेन सम्बन्धः । विषमं निम्नोन्नतम् । नावादित इति । अद्भिर्वृतं नौकटकेनैव यायात् । पत्तिबलानुयातैः तुरङ्गनागनौकटकैः । यथाबलञ्च प्रसमीक्ष्येति । समाविषममिश्रं देशन्तुरङ्गैर्नागैश्च गच्छेत्, जलावृतं—नागैर्नौकटकेन वा ॥ ३९ ॥

मरुप्रगाढमिति । पतति तोये, वर्षासु गच्छेदित्यर्थः । अनूपोदककक्षदुर्गमिति । अनूपदेशमुदकयुक्तं ग्रीष्मे गच्छेत् । मिश्रं च संवीक्ष्य यथासुखमिति । साधारणदेशं साधारणे काले गच्छेत् ॥ ४० ॥

न चातितोयं न च तोयहीनमिति । कालसामान्येन सर्वसैन्यस्यायं मार्गो-

---

र्णः । शेषं स्पष्टम् ॥ ३८ ॥

समाविषममिश्रमार्गे यानक्रममभिधातुमाह—(समं तुरङ्गैरित्यादि) समं देशं तुरङ्गैर्गच्छेत् । विषमं च नागैः । तथा च जलाढ्यं समहीधरं नागैर्गच्छेत् । नावा वृतमद्भिः । जलाढ्यं देशं गच्छेत् । मिश्रमिति समविषमजलपर्वतोपेतं यथाबलं (प्रसमीक्ष्य) निर्णयं कृत्वा, इति गन्तुं शक्यत (इति, पत्तिबलानुयातैश्च गच्छेत् ॥ ३९ ॥

मरुप्रगाढमिति निर्जलं देशम् । पतति स्म तोये वर्षति पर्जन्ये, जलसौकर्यार्थम् । ग्रीष्मे त्वनूपोदककक्षदुर्गमिति—अनुगता आपो यस्मिन् आसावनूपः खञ्जनोदक इत्यर्थः । अनूपैरुदकैः कक्षैस्तृणगुल्मैश्च दुःखेन गम्यत इति अनूपोदककक्षदुर्गस्तम् । मिश्रमिति मरुप्रगाढत्वानूपोदकक्षदुर्गत्वयुक्तं संवीक्ष्य यथासुखं सुखानतिक्रमेण गच्छेन्नरेन्द्रो विजयाय देशमिति प्रतीतम् ॥ ४० ॥

एतदेव दृढयितुमाह—(न चातितोयमित्यादि) न चातितोयं बहुजलं गमनविघ्नहेतुत्वात् । न च तोयहीनं पिपासाबाधभयात् । युक्तं च सम्यग्यवसेन्धने-

उपेत्य मार्गं बहुतज्ज्ञयुक्तं सुखं प्रयाणै रिपुमभ्युपेयात् ॥४१॥
स्ववीवधासारमुपेततोयं विश्वासिताक्रान्तजनं विशुद्धम् ।
तन्मात्रमेव द्विषतामुपेयाद् यस्मान्न कुर्यादपयानमार्तः ॥४२॥
ये दूरयात्रां सहसा विशन्ति मूढा रिपूणामविचार्य भूमिम् ।

---

पदेशः । प्राक् तु ग्रीष्मापेक्षाकारिणामेव मार्ग उक्तः ग्रीष्मे प्रभूताम्बुवनेन यायादिति ( श्लो० ७ ) । बहुतज्ज्ञयुक्तं बहुभिर्मार्गज्ञैराक्रान्तम् । प्रायेण सुखहेतुत्वात् सुखं स्थाणुकण्टकश्वभ्राद्यभावात् ॥ ४१ ॥

शत्रुदेशश्च गच्छन् कियद्दूरं यायादित्याह—स्ववीवधासारमिति । यस्मिन्मार्गे स्वकीयौ वीवधासारौ प्रवर्तेते । पर्याप्तजल । विश्वासिता आक्रान्ताश्च जना यस्मिन् तन्मात्रमेव शत्रुदेशं विशुद्धत्वाद्यायात् । अन्यथा विच्छिन्नवीवधासारत्वात्तोयकै कल्यादविश्वासितै( रनाक्रा ? राक्रा ?) न्तैश्च जनैः समन्ततो व्याकुलीक्रियमाणत्वादार्तः प्रतिनिवर्तेत, पराभिघातश्च स्यात् ॥ ४२ ॥

यदाह—ये दूरयात्रामिति, विशुद्धाद्देशादभ्यधिकां भूमिम् । अविचार्य

---

नेति--यवसं सस्थानां पलालादि चतुष्पदोपयोगि, इन्धनं पाकोपयोगि, ताभ्यां युक्तमुपेत्य प्राप्य मार्गं बहुतज्ज्ञयुक्तं मार्गं जानन्तीति तज्ज्ञास्तैर्बहुभिर्युक्तमसंमोहार्थं सुखप्रयाणैः क्लेशाभावाददीर्घैरित्यर्थः । रिपुं यातव्यमभ्युपेयात् गच्छेदिति ॥ ४१ ॥

यानप्रमाणमभिधातुमाह---( सुवीवधेत्यादि ) शोभनौ वीवधासारौ यत्र, " स्वदेशादन्वायतिर्वीवधः, आसारो मित्रबलमिति कौटिल्यः ( कौ० अ० १०--१४८--१ ) अनु पश्चादायतिरागमनं भक्ताच्छादनादेर्वीवधः, असारो मित्रबलं, तावविच्छिन्नौ पश्चादनवरतं प्रविशन्तौ यस्मिन् । उपेततोयामिति जलयुक्तम् । विश्वासिताक्रान्तजनं दाहलोपादिनिवारणादभयप्रदानेन विश्वासितः कृतविश्वासः आक्रान्तजनो यस्मिन् तम् । विशुद्धमिति चारादिभिः कृतप्रयुक्तशोधनम् । तन्मात्रं तावत्प्रमाणमेव मार्गं द्विषतामुपेयाद् गच्छेत् , यस्मान्न कुर्यादपयानं निवर्तनमार्तः शत्रुकृतोपद्रवापन्न इति ॥ ४२ ॥

मार्गातिक्रमे दोषं दर्शयन्नाह- ( ये दूरमार्गमिति ) येऽभियोक्तारो दूरमार्गमभिहितप्रमाणाधिकां भूमिं सहसा शीघ्रमेव विशन्ति मूढाः परामर्शरहिताः रिपूणामविचार्य विचारमकृत्वा ते यान्ति तेषामरीणामचिरेण खड्गधारापरिष्व-

ते यान्ति तेषामचिरेण खड्गधारापरिष्वङ्गमयत्नसाध्यम् ॥४३॥
मार्गे च दुर्गोपनिविष्टसैन्यो विधाय रक्षां विधिवद् विधिज्ञः।
सन्नद्धपार्श्वस्थितवीरयोधः सेवेत साध्वीं निशि योगनिद्राम् ॥४४॥
भ्रमत्तुरङ्गद्विरदेन्द्रहेषाघण्टास्वनासादितकर्णरन्ध्रः।

---

वीवधासारादिकम्। अयत्नसाध्यमभूमिष्ठत्वात् ॥ ४३ ॥

इदानीं स्वव्यापारेणाभियोक्ता प्रदर्श्यते षोडशभिः श्लोकैः। तत्र रात्रिगतं व्यापारमाह—मार्ग इत्यादि। दुर्गोपनिविष्टसैन्यः—दुर्गमाश्रित्य समावासितस्कन्धावारः। विधाय रक्षां बहिरन्तश्च। स्कन्धवारस्य विधिज्ञः। सन्नद्धाः पार्श्वस्थिता वीरा योधा यस्य। एवञ्च कृतरक्षस्य निद्रा साध्वी भवति। योगनिद्रां सेवेत, मायानिद्रया सुप्यात्, यथा तुरङ्गहेषादिस्वनमपि श्रुत्वा प्रतिबुध्येत् ॥ ४४ ॥

यदाह—भ्रमदित्यादि। जागरूकाधिष्ठितानां स्कन्धावाराद्बहिर्भ्रमतां तुरङ्गमाणां यो हेषास्वनः द्विरदेन्द्राणाञ्च घण्टास्वनः ताभ्यां व्याप्तं कर्णरन्ध्रं यस्य।

---

ङ्गमालिङ्गनं तदालिङ्गनान्मृत्युं प्राप्नुवन्तीत्यर्थः। अयत्नसाध्याः सुखसाध्या एव ॥ ४३ ॥

मार्गे निशि योगिनिद्रां वहतः प्रयाणे दुर्गेऽपि शयनकल्पमभिधातुमाह—( मार्गे चेत्यादि ) वहन् प्रयाणके दुर्गोपविविष्टसैन्यः जलपर्वतवनादिभिर्यो दुर्गप्रदेशः तत्रोपनिविष्टं सैन्यं यस्य स तथा विधाय रक्षां विधिवदिति यथा परावस्कन्दा न प्रभवन्ति। विधिज्ञ इति रक्षाविधिज्ञः। सन्नद्धपार्श्वःस्थितधीरयोध इति सुगमम्। सेवेत निशि साध्वीमिति निर्दिष्टरात्रियाममात्रां न न्यूनां नाधिकां साध्वीमित्यर्थः। योगिनिद्रामिति योगीव निद्रासेवावसरेऽपि सचेतन एवेत्यर्थः ॥ ४४ ॥

( भ्रमत्तुरङ्गेति ) निशि राजावासपार्श्वतो भ्रमन्तो ये तुरङ्गा द्विरदेन्द्राश्च तेषां यथाक्रमं हेषा अश्वहेषितं घण्टासनाश्च तैरास्वादिते प्राप्ते कर्णरन्ध्रे यस्य विजिगीषोः स तथा। तदन्तराले च तेषां हेषाघण्टास्वनानां अन्तराले मध्ये प्रतिबोधवर्ती निद्राच्छेदवर्ती "के जाग्रतीति, के यामनियुक्तपुरुषा जाग्र-

तदन्तरां च प्रतिबोधवर्त्ती के जाग्रतीत्याहित आद्रियेत ॥४५॥
ततः प्रबुद्धः शुचिरिष्टदेवः श्रीमद्विभूषोज्ज्वलितः प्रहृष्टः ।
सेव्येत मन्त्रिप्रवरैर्यथावत् पुरोहितामात्यसुहृद्गणैश्च ॥ ४६ ॥
कर्तव्यतां तैः सह सम्प्रधार्य यानं समारुह्य विचित्रयानः ।
कुलोद्गतैः शस्त्रिभिरात्मकल्पैर्बहिर्निरीयात् परिवारितः सन् ॥४७॥
पश्येन्नृपो हस्तिरथाश्वचर्यां सामूहिकं योधगणं पृथक् च ।

---

तदन्तरा निद्राच्छेदे । के जाग्रत्यस्मिन् प्रहर इत्याद्येतन्निरूपयेत् आहितः साव-धानः ॥ ४५ ॥

तत इत्यादि दिवागतं व्यापारं दर्शयति । शुचिः स्नानादिना । इष्टदेवः पूजितदेवः । प्रहृष्टः सैन्योत्साहनार्थम् । सेव्येत आस्थानोपगतः । मन्त्रिप्रवरैरुत्त-ममन्त्रिभिः ॥ ४६ ॥

कर्तव्यतां तदात्वे आयत्यां च । यानं हस्तिनं तस्य विचित्रगमनात् । ब हिर्निरीयात्—स्मस्मादावासान्निर्गच्छेत् ॥ ४७ ॥

पश्येन्निर्गतः । हस्तिरथाश्वचर्यामिति, हस्तिरथाश्वयानमार्गम् । सामूहिकं पृथक् चेति । समुदितं प्रत्येकञ्च योधगणं पश्येत् । विवाक्षितान् शौर्यादिगुणयु·

---

तीति बोधवर्तिनो वर्तन्त ? एवं विधप्रश्नपूर्वकमादरमाद्रियेत भूयो भूयः पृच्छे-दित्यर्थः ॥ ४५ ॥

तत इति । एवं निशां गमयित्वा । प्रबुद्धो गतनिद्रः । शुचिरिति कृताव-श्यकरणीयः । इष्टदेवः पूजितेष्टदैवतः । श्रीमद्विभूषोज्वलितः श्रीमती या । विभूषा तयोज्वलितः भास्वरतां नीतः । प्रहृष्टः——सर्वदा प्रहर्षवता विजिगी-षुणा भवितव्यमिति । सेव्येत मन्त्रिप्रवरैर्यथावत्पुरोहितामान्यसुहृद्गणैश्चेति प्रती-तम् ॥ ४६ ॥

( कर्तव्यतामिति ) तैर्मन्त्रिभिः परिवारादिभिः सह कर्तव्यतां करणीयं यत्कार्य तत्सम्प्रधार्यालोच्य यानं यात्रां समस्थाय प्रारभ्य विचित्रयानं विचि-त्राणि यानानि युग्यवाहनादीनि यस्मिन् कुलोद्गतैरभिजातैः शस्त्रिभिर्धनुरा-दिशस्त्रयुक्तैरात्मतुल्यैर्विश्वासेनात्मसदृशैः परिवारितो बहिर्निर्यात् निर्गच्छेत् ॥ ४७ ॥

( पश्येदित्यादि ) पश्येत् निरूपयेत् तत हस्तिरैथाश्ववर्यान् संवरणानि

विवक्षितांश्च द्विरदान् द्विरह्नस्तुरङ्गमांश्चापि विधानयुक्तान्
॥ ४८ ॥

सुखोपगम्यः स्मितपूर्वभाषी प्रियं वदेद् वृत्त्यधिकञ्च दद्यात्।
प्रियेण दानेन च सङ्गृहीतास्त्यजन्ति भर्तर्यपि जीवितानि ॥४९॥
रथाश्वनौकुञ्जरयानयोग्यो नित्याक्रियः स्याद्धनुषि प्रगल्भः।
सुमेधसां कर्मणि दुष्करेऽपि नित्यक्रिया कौशलमादधाति ॥५०॥
सन्नद्धमुच्चैर्द्विपमास्थितः सन् सन्नद्धसैन्यानुगतः प्रकुर्वन्।

---

क्तान्। द्विरन्ह इति। पूर्वाह्णेऽपराह्णे च पश्येत्। विधानयुक्तान् सान्नाह्यान् ॥ ४८ ॥

प्रियेण वचनेन। भर्तरि भर्तृनिमित्तम् ॥ ४९ ॥

नित्यक्रिय इति। रथादियानयोग्योऽपि धनुषि कुशलोऽपि पुनस्तत्र नित्यव्यापारः स्यात्, किमर्थमित्याह—सुमेधसामिति ॥ ५० ॥

उच्चैर्द्विपं विवक्षितम्। साधुमन्त्रं परातिसन्धानगर्भमालापं प्रकुर्वन्।

---

( रणीयान् ? ) व्यूहविनियोगार्थं सामुहिकं समूहेन संसृष्टं योधगणं, पृथक्-प्रत्येकं ( च ) विवक्षितांश्च द्विरदान् गण्यमानानन्तर्गतान् द्विनह्नो दिवसस्य भागद्वये सायं प्रातश्च। तुरङ्गमांश्च द्विरह्नो विधानयुक्तान्, विधानं खादनभोजने ॥ ४८ ॥

( सुखोपगम्य इति ) सुखेनैव सेवार्थमुपगम्यत इति। स्मितपूर्वं भाषितुं शीलमस्येति। तथा प्रियं वदन् सर्वदा सर्वत्र वृत्त्याधिकं दद्यात्। कार्यकाले। किमर्थमित्याह—प्रियेण दानेन च सङ्गृहीता भृत्या भर्तरि विषये जीवितान्यपि त्यजन्ति ॥ ४९ ॥

( रथाश्वेत्यादि ) नित्यक्रिय आरोहेणावतरणतः पर( रि ? )शुद्धिस्थैर्यापादनार्थम्। धनुषि धनुर्वेदे प्रगल्भः प्रौढः स्यात्। नित्याक्रिय एव कस्मादित्याह—सुमेधसां सुप्रज्ञानां कर्मणि दुष्करेऽपि ( नित्य ) क्रिया कौशलं प्रवीणत्वं आदधाति करोति। तथा चोक्तम्—

अभ्यासः कर्मणां सैन्यमुत्पादयति कौशलम्।
विधिना तावदभ्यस्तं यावत्सृष्टा मृगेक्षणा ॥ ५० ॥

सन्नद्धमुच्चैरित्यादि........सामान्य( लोपेन ? लीपते ? ) मन्त्रशब्दम-

सामन्तदूतेन हि साधुमन्त्रं प्रवीरयोधान्तरितेन यायात् ॥५१॥
आलोकयेद् बुद्धिगुणोपपन्नैश्चरैश्च दूतैश्च परप्रचारम्।
एतैर्वियुक्तो भवति क्षितीन्द्रो जनैरनेत्रैश्च समानधर्मा ॥ ५२ ॥
विलोभयन् किञ्चिदपि प्रयच्छन् कुर्वीत मित्रं द्विषतोऽन्तपालम्।
राष्ट्रादभीक्ष्णं द्वियतः प्रपण्यं पण्यैर्हितं नाडिकयाददीत ॥५३॥
उपक्रमं वाञ्छितमाशु कुर्यात् दूतोपयानात् क्रियमाणसन्धिः।

प्रवीरयोधान्तरितेन दुष्टव्यापारनिषेधार्थम् ॥ ५१ ॥

परप्रचारं यातव्यचेष्टितम् । एतैरिति, चरैर्दूतैश्चनेत्रस्थानीयैः अनेत्रैरन्धै- ॥ ५२ ॥

विलोभयन् इदं ते करिष्यामीति किञ्चिदेव प्रयच्छन् 'तदात्वे' कुर्वीत मित्रं स्वीयवीवधासारप्रवर्तनार्थम् । प्रपण्यं हितं येनार्थी। नाडिकया सञ्चार-परम्परया। आभिमुख्येनाप्यादीयमानं परो निरुन्ध्यात् ॥ ५३ ॥

क्रियमाणसन्धिरिति । दूतसंप्रेषणेन विजिगीषुणा सधेयस्य यातव्यस्य तस्योरसि हस्तमार्द्रं दत्त्वा वाञ्छितमुपक्रमं प्रकृतिभेदादिकं कुर्यात् । तत्र यथा-

योगा दृश्यते। अरिदूतेन गुप्तभाषणस्यासम्भवात्। प्रवीरयोधान्तरितेन, विश्वासा-भावात्। इत्येवं यायात्, बलसौष्ठवं परदूतस्य दर्शयितुमिति ॥ ५१ ॥

याने विधेयमाह--(आलोकयेदित्यादि) अष्टौ बुद्धिगुणाः शुश्रूषा-श्रवणग्रहणधारणविज्ञानोहापोहतत्त्वाभिनिवेशलक्षणाः । समानधर्मा समानगुणः। धर्मशब्दो गुणेऽपि वर्तत इति । यस्य राज्ञः सम्यग् ज्ञानसम्पन्नाश्चरा दूताश्च न विद्यन्ते सोऽन्ध एवेत्यर्थः ॥ ५२ ॥

(विलोभयन्निति) द्विषतो हि यातव्यस्यान्तपालं विषयान्तपालनानियुक्तं, दण्डने नियुक्तं दण्डनायकं विलोभयन् बहुविधं दास्यति स्वामीत्याशाजननेन, किञ्चिदेव मूल्यमात्रं प्रयच्छन्, बहुदानेन शत्रुवृद्धिर्मा भवत्विति, कुर्वीत मित्रं द्विषतोऽन्तपालम् । किमर्थमित्याह--राष्ट्रादभीक्ष्णं द्विषतः सकाशात्प्रपण्यं स्वकीयैरसारपण्यैस्तन्नाडिकया तद्द्वारेण यथा कश्चित् पद्मनालेन जलमादत्ते तद्वदिति ॥ ५३ ॥

(उपक्रममित्यादि) वाञ्छितमुपक्रमेत्, क्रियमाणः सन्धिर्येन विजिगीषुणा असौ प्रारब्धनिष्पत्तिमाशु शीघ्रं कुर्यात् दूतोपयानात् दूतप्रेषणात् । स

स चेद् विसान्धिः स तु तत्र चैकः कृतो भवत्यात्मसमुच्छ्रयश्च
॥ ५४ ॥

दौर्गान् पथिष्वाटविकान्तपालान् संश्लेषयेद् दानवतापि साम्ना।
विरुद्धदेशेषु हि सन्निरोधे ते चास्य मार्गोपदिशो भवन्ति॥५५॥

अकारणादेव हि कारणाद्वा य एति कश्चित् पुरुषोऽरिसेवी।
निजश्च विश्लिष्ट उपेत्य शत्रुमायाति यस्तस्य गतिं प्रपश्येत्
॥ ५६ ॥

---

भिमते सन्धौ शोभनमेव, असिद्धे किं फलमित्याह—स चेदिति । यदि तत्र कृत-सन्धिः, स तु तत्रैकः कृतो भवति । स एव शत्रुः प्रकृतिभ्यः पृथक्कृतो भवति । आत्मसमुच्छ्रयश्च विजिगीषोरात्मनस्तत्प्रकृतिभिरैक्यं भवति ॥ ५४ ॥

दौर्गान् दुर्गपालान् । विरुद्धदेशेषु हि सन्निरोधे—विरुद्धकृते उपरोधे । मार्गोपदिश इति क्विप्प्रत्ययान्तः ॥ ५५ ॥

अकारणात् कारणाद्वेति । स्वदोषेण स्वामिदोषेण वा शत्रुसेवको विजि-गीषुमेति, निजश्च विजिगीषुसेवकोऽकारणात्कारणाद्वा विश्लिष्टः शत्रुं यात्वा पुन-रापतति तयोरुभयोः प्रचारं पश्येत्, किं कल्याणबुद्धिरन्यथाबुद्धिर्वेति ॥५६॥

---

चेदिति स यातव्यो यदि विसन्धिः सन्धि नैति तदा स तादृग्विधो भेदः कृतो भवति यातव्यस्य स्ववशैः ( शेभ्यः ? ) "क्षयव्ययाय सर्वं भवतीति ॥ ५४ ॥

( दौर्गानित्यादि ) पथिषु दौर्गान् दुर्गपालान्, आटविकानटवीपतीन्। अन्तपालाननुकूललक्षणान् संश्लेषयेत्आत्मनि विजिगीषुः । केनेत्याह—दानवता साम्नेत्युपायद्वयेन । कस्मादित्याह—विरुद्धदेशेष्वेकायनमार्गादिषु तन्निरोधे व्यात-व्यकृतनिरोधे त एव संश्लेषितदुर्गपालादयो मार्गोपदेशदातारो भवन्ति ॥ ५५ ॥

( अकारणादिति ) अकारणात्परित्यागकारणं विनैव । कारणाद्वाक्रो-धलोभादिनैव एति कश्चिद्विजिगीषुं प्रति अरिसेवां ( विहाय ) पुरुषो, निजश्च यः पुरुषो विश्लिष्टः कारणादकारणाद्वा शत्रुमुपेत्य शत्रुं गत्वा य आयाति तस्य गतिं प्रपश्येत् प्रकारेण निरूपयेत्, कल्याणबुद्धीनां सङ्ग्रहार्थं विपरीतानां परि-त्यागार्थमिति ॥ ५६ ॥

आरिप्सुना मन्त्रबलान्वितेन प्रागेव कार्यो निपुणं विचारः।
दोर्ष्णां बलान्मन्त्रबलं गरीयः शक्रोऽसुरान् मन्त्रबलाद् विजिग्ये
॥ ५७ ॥
मनीषया निर्मलया विलोकितं फलाय कर्मोद्यममास्थितः परम्।
अकालहीनं नयवित्समाचरेत् फलं ह्यकाले नियतं व्युदस्यति
॥ ५८ ॥

---

अभियोगश्च मन्त्रपूर्वकः फलवानिति श्लोकत्रयेण दर्शयति आरिप्सुनेत्यादि। अरिमभियोक्तुमिच्छता। निपुणं सम्यक्। दोष्णां बलाद्बाहुबलात्। अरिमभियुञ्जानेन मन्त्रेण योद्धव्यमित्यभिप्रायः। शक्रोऽसुरान् बलजम्भवृत्रप्रभृतीन् बाहुशालिनः ॥ ५७ ॥

मनीषया बुद्ध्या निरूपितं कर्म पराभियोगं फलाय समाचरेदिति सम्बन्धः। अकालहीनं परस्य च्छिद्रकालमासाद्येत्यर्थः। अकाले नियतं नियोक्तुः फलं शत्रुसिद्धमन्ते व्युदस्यति ॥ ५८ ॥

---

( आरिप्सनेत्यादि ) आरिप्सुना कार्यमारब्धुं कृतेच्छना मन्त्रबलान्वितेन यथोक्तमन्त्रबलयुक्तेन प्रागेव निपुणं कार्यं यथा भवति तथा प्रचारः प्रकटप्रच्छन्नचराणां प्रकृष्टचारो गत्यागमो यातव्यादिषु। कस्मादित्याह—दोर्दण्डानां बलात् मन्त्रबलं गरीयः। तथा च कौटिल्यः—

> एकं हन्यान्नवा हन्यादिषुर्मुक्तो धनुष्मता।
> प्राज्ञेन तु मतिः क्षिप्ता हन्याद्गर्भगतानपि ॥ इति ॥

तथा च शुक्रो दैत्यगुरुः सुरान्मन्त्रबलाद्विजिग्ये मृतसञ्जीविन्येति स्वबलं मृतमपि जीवयत्यौपनिषद्यौ देवान् मारयतीत्यतः सुरान् शुक्रो जितवानिति ॥ ५७ ॥

( सम्यग्विक्रयवाणमपि ) कार्यं काल एव सिध्यतीति दर्शयन्नाह—( मनीषया निर्मलयेति ) विलोकितं निर्णीतं फलनिमित्तं ( त्ते ? ) कर्मणि परमुत्कृष्टमुद्योगमास्थितः नीतिशास्त्रवित् कुत इत्याह—फलं हि पृथ्वीलाभपालनादि यस्मादकालोऽनवसरो निश्चयेन विशेषेण परित्यजतीति ॥ ५८ ॥

प्रभावितानां श्रुतशौर्यशालिनां यथावदालोचितमार्गचारिणाम्।
चिराय दैवीद्युतिरुन्नतात्मनां भुजङ्गदीर्घेषु भुजेषु लम्बते ॥५९॥
समुदितनरसम्पद् भूरिसम्पन्नसस्ये
विगतसलिलपङ्के काल उद्भूतशक्तिः।
कुसुमितसहकारश्रीज्वलत्कानने वा
नरपतिररिभूमिं साधु गच्छेज्जयाय ॥ ६० ॥
इति नरपतिराहितादरः परमभियोक्तुमनाः समुत्पतेत्।

---

प्रभावितानाम् ॥ ५९ ॥

समुदितेति—समुदिता नरसम्पत् यस्य नरपतेरिति सम्बन्धः। तिस्रो यात्राः दीर्घकाला ह्रस्वकाला मध्यकाला च ताश्च यथाक्रममाह—भूरिसम्पन्नसस्ये काले मार्गशीर्षे। विगतसलिलपङ्के—ज्येष्ठामूलीये। कुसुमितानां सहकाराणां श्रिया ज्वलत् काननं यस्मिंश्चैत्रमासे। उद्भूतवृत्तिस्त्रिष्वपि कालेष्वभिव्यक्तशक्तिः ॥ ६० ॥

अभियोक्तारमधिकृत्याह—इतीति। समुत्पतेदुत्तिष्ठेत्। विधिविषयोपसेवना-

---

उपसंहरन्नाह—( प्रभावितानामिति ) प्रभावः प्रतापस्तं प्राप्तानां श्रुतं विद्याचतुष्टयश्रवणं, शौर्यं निर्व्याजं पौरुषं ताभ्यां शालितं शीलं येषां ते तेषां यथावदालोकितः शास्त्रे यो मार्गस्तेन चरणशीलानां चिरंतरं देवानां द्युतिः प्रभा सर्पवदायतेषु भुजेषून्नतात्मनां लम्बते सम्बध्यते। एवंभूता विजिगीषवो देवसमाना भवन्तीत्यर्थः ॥ ५९ ॥

यात्राकालमभिधातुमाह—( समुदितेत्यादि ) समुदिता सम्यग्गुप्ता नराणां शूरयोधानां सम्पत् सम्पत्तिः यस्य विजिगीषोः स तथा। भूरिसम्पन्नसस्ये शरदीत्यर्थः। विगतमेघविभ्रष्टपङ्के वेति काल ईरितो यात्रायामित्यर्थः। कुसुमितसहकारश्रिया ज्वलन्ति भास्वराणि भवन्ति काननानि यस्मिंस्तत्र वासन्तिकीं यात्रामित्यर्थः। एष्वेव कालेषु नरपतिर्विजिगीषुररिभूमिं साधु यथा भवति तथा गच्छेज्जयनिमित्तम् ॥ ६० ॥

( इतीत्यादि ) गोचरं वशताम्। यातव्यः सिध्यतीत्यर्थः ॥ शेषं स्पष्टम्

इति विधिविषयोपसेवनान्नियतमरातिरुपैति गोचरम् ॥६१॥

इति यात्राभियोक्तृप्रदर्शनं नाम चतुर्विंशं प्रकरणम् ।

इति श्रीकामन्दकीये नीतिसारे षोडशः सर्गः समाप्तः ।

---

दिति, यात्राया अभियोक्तुश्च यो विधिरुक्तः स एव विधिविषयो विजिगीषुणा सेव्य इति कृत्वा । गोचरं सिद्धेरिति शेषः ॥ ६१ ॥

इति यात्राभियोक्तृप्रदर्शनं नाम चतुर्विंशं प्रकरणम् ।

इति श्रीशङ्करार्यकृतायां कामन्दकीयनीतिसारपञ्जिकायां जयमङ्गलायां यात्राभियोक्तृप्रदर्शनंनाम षोडशः सर्गः ।

---

॥ ६१ ॥

इति चतुर्विंशं यात्राभियोक्तृप्रदर्शनप्रकरणम् ।

इति कामन्दकीयनीतिसारटीकायामुपाध्यायनिरपेक्षायां यात्राभियोक्तृप्रदर्शनं नाम षोडशः सर्गः ।

## अथ सप्तदशः सर्गः।

### २५ स्कन्धावारनिवेशनप्रकरणम्।

यांत्वा वैरिपुराभ्याशं भूभागे साधु सम्मते।
स्कन्धावारनिवेशज्ञः स्कन्धावारं निवेशयेत्॥ १॥
चतुरश्रं चतुर्द्वारं नातिविस्तारसंकटम्।
साट्टप्रतोलीप्राकारं महाखांतसमावृतम्॥ २॥

---

## अथ सप्तदशः सर्गः।

### २५ स्कन्धावारनिवेशनप्रकरणम्।

अभियानोत्तरकालभावित्वाद्विग्रहस्य तदनन्तरं विग्रहशेषभूतो विधिः सर्गचतुष्टयेनोच्यते। तत्रास्मिन्सर्गे प्रकरणद्वयम्, स्कन्धावारनिवेशो निमित्तज्ञानञ्च। तत्र यात्वा शत्रुदेशमनिवेशितस्कन्धावारस्य विग्रहासम्भवात्, स्कन्धावारनिवेश उच्यते द्वाविंशत्या श्लोकैः यदाह—यात्वेत्यादि। वैरिपुराभ्याशं यत्र शत्रुर्यातव्यः स्वकटकेनावस्थितस्तस्याभ्याशम्। भूभागे देशे। साधुसम्मते वास्तुकर्मप्रशस्ते॥ १॥

चतुरश्रमगारमिति सम्बन्धः। चतुर्द्वारं चतसृषु दिक्षु। नातिविस्तारसङ्कटं, तत्र ह्यन्योन्यरक्षणं परस्परापीडनञ्च सैन्यं निवेश्यते। साट्टप्रतोलीप्राकारमिति। समन्तान्महाप्राकारमन्तरान्तरा चाट्टालकानि। द्वयोर्द्वयोश्चाट्टालकयोर्मध्ये प्रतोलीमुपस्थापयेत्। महारवातसमावृतं प्राकाराद्बहिः॥ २॥

---

## अथ सप्तदशः सर्गः।

### २५ स्कन्धावारनिवेशनप्रकरणम्।

यानानन्तरं साङ्ग्रामिकमभियोगमभिधातुं स्कन्धावारनिवेशमाह—( यात्वेत्यादि ) वैरिपु( राभ्याशं ) यातव्यशिबिरसमीपं. भूभागे साधूनां वास्तुविद्याविदां सम्मतेऽभिप्रेते ( स्कन्धावार......निवेशयेत् )॥ १॥

( चतुरस्रमित्यादि ) तं चतुरस्रं समायामविस्तारं, नातिविस्तारसङ्कटमसम्बाधम्। अभ्युपायः फलवानित्याह—साट्टैरट्टालकैः प्रतोलीभिरन्वितो यः प्राकारो महाखातानि च परिखा इत्यर्थः। तत्समन्वितमिति॥ २॥

शृङ्गाटकार्धचन्द्रं वा मण्डलं दीर्घमेव वा ।
भूमिप्रदेशसामर्थ्यादगारमुपकल्पयेत् ॥ ३ ॥
विभक्तैश्च विविक्तैश्च पार्श्वैरन्वितमायतैः ।
गुप्तं कक्षपुटाकारं महामार्गसमावृतम् ॥ ४ ॥
तस्य मध्ये मनोह्लादि महन्मौलबलावृतम् ।

---

भूमिप्रदेशसामर्थ्यादिति । भूमिप्रदेशसंस्थानवशाच्चतुरस्रशृङ्गाटकादिसंस्थानभेदं स्कन्धावारस्यागारं स्थानं कल्पयेत् ॥ ३ ॥

पार्श्वैरिति, प्राकारस्याभ्यन्तरे भागे स्कन्धावारस्य चत्वारि पार्श्वानि यैरहोरात्रं स्कन्धावारस्य जागरकाः परिभ्रमन्ति, तैर्विभक्तैर्दण्डमात्राविस्तारैः । विविक्तैः शून्यैः । आयतैः प्रगुणैरन्वितमगारमिति सम्बन्धः । गुप्तं समन्तान्निश्छिद्रत्वात्, कक्षपुटाकारं नवसंस्थानं, तत्र वास्तुपुरुषहृदयपरिहारार्थं तुल्यप्रमाणान् नव कोष्ठान् प्रकल्पयेदित्यर्थः । महामार्गसमावृतं, त्रयः प्राचीना राजमार्गाः, त्रय उदीचीना इति तैर्युक्तम् ॥ ४ ॥

तस्येत्यगारस्य । मध्य इति मध्यमो यो नवमभागः तं पुनर्नवधा विभज्य मध्यं भागं त्यक्त्वा तस्योत्तरे नवभागे राजमन्दिरं कारयेत् । तथा चोक्तम्

---

( सूचना—अत्राभ्युपायः फलवानित्याहेति भागः पूर्वापरसङ्गतिं विना पतितः कदाचिदुत्तरसर्गान्तिमश्लोकव्याख्याया अवतरणिका भागः स्यात् । )

चतुरस्रस्याभावे यथालाभमपि स्कन्धावारनिवेशः कर्तव्य इति दर्शयन्नाह—( शृङ्गाटकमित्यादि ) शृङ्गाटकं त्रिकोणं, अर्द्धचन्द्रं तदाकारं, दीर्घं वा मण्डलं तथा भूमिप्रदेशसामर्थ्यात् यथाकारं चतुरस्रादि परिकल्पयेत् ॥ ३ ॥

( विविक्तैरित्यादि )......असङ्कीर्णैश्च भवनपार्श्वैरन्वितमायतैर्दीर्घैर्गुप्तकक्षं पटागारं गुप्ता रक्षिताः कक्षाः निवेशान्तरालानि यस्य स्कन्धावारस्य तं तथा महामार्गसमन्वितमिति चतुर्द्वारत्वात् द्वाभ्यामेवेति, एकः प्राचीन एक उदीचीन इति । दुर्गे( त्रयः ) स्कन्धावारे त्वेक एव ॥ ४ ॥

( तस्य मध्ये ममोल्हादीति ) ( मौलबलावृतमिति ) बलानां निवेशक्रमेणावृतं तदावासैर्वेष्टितं अन्तःकोशगृहेणोपेतं 'कोशाधीनो हि राजेति, व्यवहितां

अन्तः कोशगृहोपेतं कारयेद् राजमन्दिरम् ॥ ५ ॥
मौलं भृतं श्रेणि सुहृद् द्विषदाटाविकं बलम् ।
राजहर्म्यं समावृत्य क्रमेण विनिवेशयेत् ॥ ६ ॥
अन्ते श्वगणिनः क्रूरान् लुब्धकान् दृष्टकर्मणः ।
अन्तःस्ववर्गिणः क्रूरानलुब्धान्दृष्टकर्मणः ।
पर्याप्तवेतनानाप्तान् मण्डलेन निवेशयेत् ॥ ७ ॥

---

" मध्यमस्योत्तरे नवभागे राजवास्तु निवेशं कारयेदिति " । ( कौः अ० १०–१-१४७ ) महन्मंदिरमिति संबन्धः । अन्त. कोशगृहोपेतं राजमन्दिरस्य मध्ये कोषमन्दिरमपरं कारयेत् ॥ ५ ॥

क्रमेणेति । राजमन्दिरं समन्तादावृत्य मौलं बलं क्रमागतं विनिवेशयेत् । ततो भृत्यबलं वेतनप्रतिबद्धम् । ततोऽपि श्रेणिबलं जानपम् । अत्र श्रेणिशब्दः स्वलिङ्गे नैव स्थितः । तस्मादपि सुहृद्भूतं बलम् । ततोऽपि द्विषद्भूतं, ततश्चाटविकमिति ॥ ६ ॥

अन्तः स्ववर्गसहितान् स्कन्धावारस्य । दृष्टकर्मणः—साक्षात्श्रुतसमस्तव्यापारान् । पर्याप्तवेतनान् लोभावात् परस्याभेद्यान् । मण्डलेन निवेशयेत्, स्कन्धावारं परिवृत्येत्यर्थः ॥ ७ ॥

---

कोशो न विधेय इति । एवंविधं कारयेद्राजमन्दिरमिति ॥ ५ ॥

बलानां ( निवेशक्रम ) मभिधातुमाह—( मौलमित्यादि ) मौलं पितृपैतामहम् । भृतं भक्तवेतनोपगृहीतम् । श्रेणिबलं कुविन्दपट्टिकाकारादिबलम् । सुहृद्बलं मित्रबलम् । द्विषद्बलं दण्डोपनतसामन्तबलम् । आटविकं बलं अटवीपतीनां राजकर्मणां बलम् । एवं षडपि बलानि राजहर्म्यं समावृत्य वेष्टयित्वा क्रमेणोक्तपरिपाट्या निवेशयेत् । प्रतिस्कन्धावारनिवेशम् ॥ ६ ॥

( अन्ते श्वगणिनः क्रूरान् लुब्धकान् दुष्टकर्मणः पर्याप्तवेतनानित्यादि ) स्वाप्तान चरान् कृत्वा । अन्यथा तेऽपि कृत्याः स्युरिति । मण्डलेन मण्डलाकारेण विनिवेशयेत् ॥ ७ ॥

हस्तिनो लब्धनामानस्तुरङ्गाश्च मनोजवाः ।
गृहोपकण्ठे नृपतेर्वसेयुः स्वाप्तरक्षिताः ॥ ८ ॥
यामवृत्त्या सुसन्नद्धं रात्रिन्दिवमुदायुधम् ।
अन्तर्वंशिकसैन्यञ्च तिष्ठेद् राजाभिगुप्तये ॥ ९ ॥
युद्धयोग्यो महादन्ती सन्नद्धः साध्वधिष्ठितः ।
तिष्ठेन्नरपतिद्वारे वेगवांश्च तुरङ्गमः ॥ १० ॥
सैन्यैकदेशः सन्नद्धः सेनापतिपुरस्सरः ।
प्रयत्नवान् परिपतेन्मण्डलेन बहिर्निशि ॥ ११ ॥
परसैन्यप्रचारांश्च सत्त्वाढ्याः शीघ्रगामिनः ।

---

लब्धनामानः–प्रभाविनः ॥ ८ ॥

यामवृत्त्या प्रहरपर्यायेण । उदायुधं सनद्धमपि स्वकोशादुत्खातायुधम् । अन्तर्वंशिकसैन्यमन्तः पुररक्षानियुक्तं सैन्यम् ॥ ९ ॥

साध्वधिष्ठित आप्ताधिष्ठितः । तिष्ठेन्नरपतिद्वारे प्रहरपर्यायेण । तदात्वे हि कार्योत्पत्तौ तमारुह्य कार्यकरणसमर्थो भवति ॥ १० ॥

सैन्यैकदेशश्च तृतीयश्चतुर्थो वा भागः । परिपतेत्, स्कन्धावाराद्बहिः परिभ्रमेत्–परावस्कन्दप्रतिविधानार्थम् ॥ ११ ॥

परसैन्यप्रचारांश्च विजानीयुस्तदनुरूपप्रतिविधानार्थम् ॥ सत्त्वाढ्याः सत्त्वाधिकाः । वाताश्विकाः वाताश्वचारिणः । शीघ्रपातिनोऽपि केचिद्दूरं सीमान्तं परि-

---

( हस्तिनो लब्धनामान इत्यादि ) प्रतीतम् ॥ ८ ॥

( यामवृत्त्येति ) यामोऽहोरात्राष्टमभागः । तत्र सावधानत्वेनावस्थितिय मिवृत्तिस्तत्पर्यायेणेत्यर्थः । सुसन्नद्धं कृतसन्नाहम् । रात्रिन्दिवमहोरात्रमुदायुधं उद्गीर्णशस्त्रमन्तर्वंशिकसैन्यमन्तर्वंशो राज्ञः पुत्रदारं तत्र नियुक्तोऽन्तर्वंशिकः अन्तः पुरामात्यस्तत्प्रतिबद्धं सैन्यमुक्तप्रकारेण राजाभिगुप्तये तिष्ठेदिति ॥ ९ ॥

( युद्धयोग्य इत्यादि ) प्रतीतम् ॥ १० ।

( सैन्यैकदेश ) इत्यपि प्रतीतम् ॥ ११ ॥

( परसैन्यप्रचारं चेत्यादि ) यातव्यसैन्यप्रचारमवस्कन्दनादिकं सत्त्वाढ्या महाशयाः शीघ्रपातिनः शीघ्रगतयः वाताश्विका वातसमानवेगोपलक्षिता ( अश्वाः )

वाताश्विका विजानीयुर्दूरसीमान्तचारिणः ॥ १२ ॥
तोरणावद्धमाल्येषु यन्त्रवत्सु पताकिषु ।
द्वारेषु परमां गुप्तिं कारयेदाप्तकारिभिः ॥ १३ ॥
निर्गच्छेत् प्रविशेच्चैव सर्व एवोपलक्षितः ।
तिष्ठेयुः परदूताश्च राजशासनगोचराः ॥ १४ ॥
वृथाकोलाहलाद्धास्यात् द्यूतात् पानाच्च वारितः ।
सज्जोपकरणस्तिष्ठेत् सर्वः कार्योन्मुखो जनः ॥ १५ ॥
बहिः खातात्तु सैन्यानां मुक्त्वा सञ्चारमार्गनः ।
परसैन्यविघातार्थं सर्वां भूमिं विनाशयेत् ॥ १६ ॥

---

भ्रमितुमशक्ता इति पृथगुपादानम् ॥ १२ ॥

यन्त्रवत्स्विति । चतुर्द्वारेषु शरपाषाणप्रमोक्षार्थं सर्वतो भद्रादीनि यन्त्राण्युपस्थापयेत् । गुप्तिं रक्षाम् । आप्तकारिभिर्विजिगीषोरिष्टकारीभिः ॥ १ ॥

राजशासनगोचरा इति । परकीयेभ्यः प्रवेशो न देयः इति राजशासनम् । यदा चायं प्रवेशमादिशति, तदा प्रविशेयुः, अन्यदा तु तच्छासनगोचरा एव तिष्ठेयुः ॥ १४ ॥

वृथाकोलाहलात् क्रीडोत्पत्तिकृताद्धास्यात् द्यूतात् पानाच्च कलहहेतोः । सज्जोपकरणस्तिष्ठेत् । कार्योन्मुखः यस्य च यस्मिन्नियोगस्तदवहित ॥ १५ ॥

मुक्त्वा सञ्चारमिति । चतुर्द्वारेषु स्वसैन्यानां सञ्चारमार्गमात्रं त्यक्त्वा शेषां भूमिं नाशयेत् ॥ १६ ॥

---

तैश्वस्तीति वाताश्विकाः । विजानीयुर्दूरसीमान्ते पतन्तीति( ते )॥ १२ ॥

( तोरणावद्धेत्यादि ) आप्तं हितं कर्तुं शीलं येषां ते तैः ॥ १३ ॥

( निर्गच्छेदित्यादि ) राजादेशैर्यावकाशा इत्यर्थः ॥ १४ ॥

( वृथा कोलाहलादित्यादि ) वृथाकोलाहलात् निष्कारण कलकलात्, हास्यात् द्यूतात्पानाच्च वारितः सज्जोपकरणः सन् विहितशस्त्रावरणंस्तिष्ठेत्सर्वः स्कन्धावारनिवासी जनोऽवस्कन्दप्रतीकारकार्योन्मुख इति ॥ १५ ॥

( बहिःखातादिति )......विनाशयेदनन्तरोक्तकण्टकशाखिभिः । शेषां प्रतीतम् ॥ १६ ॥

क्वचित् कण्टकशाखाभिः क्वचिच्छूलैरयोमुखैः ।
दूषयेत् परितो भूमिं प्रच्छन्नैः प्रदरैरपि ॥ १७ ॥
निर्वृक्षक्षुपपाषाणस्थाणुवल्मीकनिर्दरे ।
कारयेत् करणैश्चित्रैः सैन्यव्यायाममन्वहन् ॥ १८ ॥
यस्मिन्देशे यथाकामं सैन्यव्यायामभूमयः ।
परस्य विपरीताश्च स्मृतो देशः स उत्तमः ॥ १९ ॥
आत्मनश्च परेषाञ्च तुल्या व्यायामभूमयः ।
यत्र मध्यम उद्दिष्टो देशः शास्त्रार्थचिन्तकैः ॥ २० ॥

---

कथमित्याह—क्वचिदित्यादिना । अयोमुखैः शूलैः । प्रदरैः श्वभ्रैस्तृणादि-प्रच्छन्नैः ॥ १७ ॥

निर्वृक्षेति । निर्गता वृक्षादयो यस्मात् प्रदेशादिति विग्रहः । क्षुपो गुल्मः । निर्दरं भूमेर्विदारणम् । व्यायामो युद्धचर्या न तु व्यायममात्रं, करणशब्द-सन्निधानात् ॥ १८ ॥

स्कन्धावारनिवेशार्थं विग्रहार्थश्च देशस्योत्तमगध्यमाधमतां दर्शयति—यस्मिन्नित्यादिना । यथाकाममिति यथात्मनो हस्त्यादीनां यथेष्टं चेष्टमानानां भूमयः । परस्य विपरीताः अयथाकामम् ॥ १९ ॥

तुल्या व्यायाम सैन्यस्य ॥ २० ॥

---

तमेव भूमिविनाशमाह—( क्वचिदित्यादि ) क्वचित्कण्टकशाखाभिः क्वचिच्छूलैः सारदारुमयैरयोमुखैरग्रेनिहितायोमुखाग्रैर्दूषयेत् परितो भूमिं प्रच्छन्नैः प्रदरैःखातैरभिहितशूलगर्भप्रच्छादितैरिति ॥ १७ ॥

स्वसैन्यानां सम्पदर्थमाह —( निर्वृक्षेत्यादि ) ( दरो ) दरणं भूमेः स्फोटः, तद्रहितं; तत्र चतुरङ्गसैन्यव्यायामं सङ्ग्रामगुणिनं कारयेत् करणैश्चित्रैर्धावनप्लवनखनकाकाशस्थलादियुद्धकरणै। प्रतिदिनमिति ॥ १८ ॥

स्वबलानामनुकूलं देशमभिधातुमाह—( यस्मिन्नित्यादि ) सुगममतत ॥ १९ ॥

( आत्मनश्चेति ) जयप राजययोरभावात् । शेषं सुगमम् ॥ २० ॥

अरातिसैन्यव्यायामसुपर्याप्तमहीतलः।
आत्मनो विपरीतश्च यः स देशोऽधमः स्मृतः॥ २१॥
नित्यमुत्तममाकाङ्क्षेत् तदभावे तु मध्यमम्।
अधमं बन्धनागारं नोपसेवेत सिद्धये॥ २२॥

इति स्कन्धावारनिवेशनं नाम पञ्चविंशं प्रकरणम्।

---

## २६ अथ निमित्तज्ञान प्रकरणम्।

आक्रान्त इव केनापि रोगानीकैरभिद्रुतः।

---

सुपर्याप्तं—सुप्रचारम्॥ २१॥

उत्तममाकाङ्क्षेत्, निवेशार्थं विग्रहार्थञ्च। बन्धनागारं तत्र हि चेष्टासंरोधाद्बद्धस्येवावस्थानम्॥ २२॥

इति स्कन्धावारनिवेशनं पञ्चविंशं प्रकरणम्॥

---

## २६ अथ निमित्तज्ञानप्रकरणम्।

एवं निवेशितस्य स्कन्धावारस्य जयपराजययोः शुभाशुभनिमित्तं जानीयादिति निमित्तज्ञानमुच्यते द्वादशभिः श्लोकैः। तत्राशुभमधिकृत्याह—आक्रान्त इत्यादि। केनापि भूतविशेषेणावष्टब्ध इव रोगानीकैरभिद्रुतः अकस्माद्विनाप्रिया-

---

( अरातीति ) स्पष्टार्थमेतत्॥ २१॥

( नित्यमुत्तममित्यादि ) उत्तममध्यमौ काङ्क्षेत्, नाधमं कदाचित्। यतो बन्धनागारसमदेशः बद्धेन हि योद्धुं न शक्यत इति॥ २२॥

इति स्कन्धावारनिवेशो नाम पञ्चविंशं प्रकरणम्।

---

## २६ निमित्तज्ञानप्रकरणम्।

( आक्रान्त इवेत्यादि ) आक्रान्त इति स्कन्धावारो द्विपदचतुष्पदस्वरूपः केनाप्यदृश्यमानेनाक्रान्तोऽवष्टब्ध इव यदा विभाव्यते तदा दुर्निमित्तम्, तथा रोगानीकैर्व्याधिसैन्यैर्ज्वरादिभिरभिद्रुत कृतोपद्रवः। अकस्मादिति कारणं विनैव

अकस्माद्भवदुद्वेगो रजोनीहारसंवृतः ॥ २३ ॥
विधूम्रैः परुषैर्वातैरकस्माच्च पतद्ध्वजः ।
परस्परभवद्द्रोहो न तथातूर्यनिस्वनः ॥ २४ ॥
उत्प्रेक्षितभयत्रासो निर्घातोल्कादिदूषणम् ।
उद्धूमत्प्रज्वलच्छस्त्रो विदाक्षिणाशिवारुतः ॥ २५ ॥
मण्डलैः काकगृध्राणामाकीर्णो रूक्षवाशिभिः ।
मुहुरत्युग्रतादीप्तः संसिक्तो रक्तवृष्टिभिः ॥ २६ ॥

---

भियवाग्योगादिना भवदुद्वेगः ॥ २३ ॥

विधूम्रैर्धूमिकादिभिः खरैश्च वातैः संवृत इत्येव । अकस्माद्विना वातेन पतद्ध्वजः । परस्परभवद्द्रोहः—अवस्कन्दादिभि, न तथा—तुर्यनिःस्वनः, यथा प्राक् ॥ २४ ॥

भयं मरणहेतुकं, त्रासः शङ्कामात्रं, निर्घातोल्कादिदूषणं, विजिगीषुदेशे तस्य निपातनात् । उद्धमत् स्वकोशान्निष्क्रामत्प्रज्वलच्छस्त्रं यत्र । विदाक्षिणशिवारुतः—विदाक्षिणः प्रतिकूलः ॥ २५ ॥

अत्युग्रतादीप्तः अतिरूक्षत्वाद्राक्षसीनिवास इव । रक्तवृष्टिभिः औत्पातिकीभिः ॥ २६ ॥

---

भवदुद्वेगो जायमानचित्तपरितापः । रजोभिर्नीहारेण धूमिकया वृतः संवृतः पिहितः ॥ २३ ॥

( विधूत इत्यादि ) विधूतः परुषैर्वातैरुद्धूतः प्रचण्डैर्मरुद्भिः । अकस्माच्च पतद्ध्वजः पतद्राजध्वजः । परस्परभवद्द्रोह इति स्ववर्ग एव भवद्धिंसः । न तथासूर्यनिस्स्वन इति विस्वरतूर्यध्वनिः ॥ २४ ॥

उत्प्रेक्षितभयत्रास इति स्वोत्प्रेक्षयैव विनैव भयकारणं भयं त्रासश्च यत्र भवति । निर्घातोल्काभिदूषित इति निर्घातेनाकस्मादुन्नतमहानादेन उल्काभिश्चाभिमुख्येन दूषितः । उद्धूमः प्रज्वलच्छस्त्र इति । धूमो निर्गच्छन् प्रज्वलन्ति शस्त्राणि यस्मिन् । विदाक्षिणशिवारुतः ॥ २५ ॥

( मण्डलैरित्यादि ) रक्तवृष्टिभिएकाशात्पतिताभिः । शेषं सुगमम् ॥ २६ ॥

परीतराजनक्षत्रः क्रूरैरौत्पातिकैर्ग्रहैः ।
सूर्यदृष्टकबन्धादिरकस्मान्मूढवाहनः ॥ २७ ॥
अकस्मान्मत्तमातङ्गः संशुष्यद्दानशीकरः ।
इत्यादिविकृतोपेतः स्कन्धावारो न शस्यते ॥ २८ ॥
प्रहृष्टनरनारीकः प्रशस्तस्वनदुन्दुभिः ।
गम्भीरहेषितहयः पूरितद्विपबृंहितः ॥ २९ ॥
पुण्याहब्रह्मघोषाढ्यो नृत्यगीतसमस्वनः ।
निरीतिको महोत्साह आकाङ्क्षितजयोदयः ॥ ३० ॥

---

क्रूरैर्ग्रहैः राहुभौमशनैश्चरैः । औत्पातिकैः केतुकम्पादिभिः । सूर्यमण्डले दृष्टं कबन्धादि यस्मिन् स्कन्धावारे । तस्मात्तु नान्यत्र दृश्यते । मूढो विमनस्कः ॥ २७ ॥

दानं मदः । विकृतं अशुभम् ॥ २८ ॥

शुभमधिकृत्याह—प्रशस्तस्वनो गम्भीरस्वनः । बृंहितं गर्जितम् ॥ २९ ॥

पुण्याहब्रह्मघोषाढ्य इति । प्रशस्तदिने वेदध्वनिमुखरः । यदि वा पुण्याहघोषैर्ब्रह्मघोषैश्च सर्वदा कलितः । निरीतिको निरुपद्रवः ॥ ३० ॥

---

( परीतेत्यादि ) परीतमाक्रान्तं स्कन्धावारस्य यो राजा तस्य जन्मनक्षत्रं क्रूरैरौत्पातिकैरतिचमूघातकैर्ग्रहै राहुकेत्वादिभिः । सूर्यमण्डले दृष्टान्यनेककबन्धादीनि यत्र । अकस्मान्मूढवाहनः ॥ २७ ॥

( अकस्मान्मत्तमातङ्ग इति )...अकस्मादेव प्रशुष्यन् दानशीकर इत्यादिविकृतोपेतो दुर्निमित्तयुक्तः स्कन्धावारो न शस्यते पराजयफलकालोऽभ्युदित इति ॥ २८ ॥

इदानीं शुभनिमित्तोदयात् शुभस्कन्धावारः शुभं युद्धाय कालं सूचयतीति दर्शयन्नाह—( प्रहृष्टेत्यादि......पूजितमतिप्रशस्तमुत्कृष्टं बृंहितमिष्टं द्विपकूजितं यत्र ॥ २९ ॥

( पुण्याहेत्यादि ) सर्वं प्रतीतम् ॥ ३० ॥

विरजस्कोऽभिवृष्टश्च प्रादक्षिण्यस्थितग्रहः ।
दिव्यान्तरिक्षैरुत्पातैः पार्थिवैश्च विवर्जितः ॥ ३१ ॥
प्रशस्तकूजद्विहगः प्रदक्षिणशिवारुतः ।
नीचैः प्रवृत्तानुलोममारुतः स्तुतमङ्गलः ॥ ३२ ॥
हृष्टपुष्टजनः साधुः सुगन्धिज्वलितानलः ।
अमन्दमत्तमातङ्ग आसाराभ्युदयान्वितः ॥ ३३ ॥
इत्यादिलक्षणोपेतः स्कन्धावारः प्रशस्यते ।
शस्ते तस्मिन् द्विषो भङ्गोऽशस्ते ज्ञेयो विपर्ययः ॥ ३४ ॥
सिद्ध्यसिद्ध्यौ निमित्तानि यतः शंसन्ति कर्मणाम् ।
विद्यादात्महिताकाङ्क्षी तस्मादेतानि तत्त्वतः ॥ ३५ ॥

---

अभिवृष्टो जलधरैरसिक्तः प्रादक्षिण्यस्थितग्रहः पुरः शुक्राद्यभावात् । उत्पातैरिति । उत्पातास्त्रिविधाः दिव्यान्तरिक्षभौमाः, तैरप्रशस्तैर्विवर्जितः ॥ ३१ ॥

विहगाः काकादयः । अनुलोमो मारुतः पृष्ठतो वाही । स्तुतमङ्गलः स्थानस्थानेषु बन्दिभिः ॥ ३२ ॥

साधुः परस्परद्रोहाभावात् । सुगन्धिः निर्गन्धेधनदाहेऽपि ज्वलितोऽनलो यत्र । असारो मित्रबलम् ॥ ३३ ॥

शस्ते तस्मिन् स्कन्धावारे । अशस्ते विपर्यय–द्विषो जयः ॥ ३४ ॥

शंसन्ति–कथयन्ति । तस्मादेतानि शुभाशुभानि ॥ ३५ ॥

---

( विरजस्क इति, प्रशस्तकूजद्विहग इति ) स्कन्धावार इति वाक्यशेषः ॥ ३१ ॥ ३२ ॥

( हृष्टेत्यादि ) आसारः शुभा वृष्टिस्तेन यः सूचितोऽभ्युदयः तदन्वित इति ॥ ३३ ॥

( इत्यादीति )...इतिलक्षणोपेतः स्कन्धावारः प्रशस्यते विजयी–(याय?) भवतीति । शस्ते तस्मिन् स्कन्धावारे द्विषो यातव्यस्य भङ्गः । अशस्ते तद्विपर्यय इति ॥ ३४ ॥

( निमित्तानीत्यादि ) विजिगीषुरेतानि यस्मान्निमित्तान्येव शंसन्ति शुभाशुभफलोदयं तस्मादेतानि शास्त्रज्ञो राजा समुपलक्षयेत् ॥ ३५ ॥

प्रशस्तेन निमित्तेन विशुद्धेनान्तरात्मना ।
व्यक्तमारभ्यमाणं हि सिद्धिं याति समीहितम् ॥ ३६ ॥
सहायसम्पत् प्रज्ञानं सत्त्वं दैवानुकूलता ।
उद्योगोऽध्यवसायश्च यस्यैते तस्य सिद्धयः ॥ ३७ ॥
तन्मूलत्वात् प्रजानान्तु राजा स्कन्ध उदाहृतः ।
आवारोऽमात्यदण्डादिर्वृतिरावार उच्यते ॥ ३८ ॥
भूतानां भूतिनिष्पत्तेरावारेण महीयसा ।

---

विशुद्धेनान्तरात्मना जयाभिकाङ्क्षिणा । समीहितं विग्रहादिकम् ॥३६॥

सिद्धिनिमित्तान्तराण्याह—सहायसम्पदित्यादि । प्रज्ञानं प्रज्ञा अष्टाङ्गा । दैवानुकूलता प्रागुक्ता । उद्योग उत्साहः । अध्यवसायो व्याख्यातः ॥ (स० १६—श्लो० ३४) ॥ ३७ ॥

कः पुनः स्कन्धावारः, यस्य निमित्तज्ञानमित्याह—तन्मूलत्वादिति । यथा शाखानां वृक्षस्कन्ध आश्रयस्तथा राजा प्रजानामाश्रयत्वात् स्कन्ध उच्यते । आवारोऽमात्यदण्डौ । अमात्यप्रकृतेर्दण्डप्रकृतेश्च सचेतनायाः प्राधान्येन व्याप्रियमाणत्वात् । वृतिरावार उच्यत इति फलत आवारमात्रं दर्शयति ॥ ३८ ॥

भूतानां भूतिनिष्पत्तेरिति । प्रजानां त्रिवर्गनिष्पत्तेः कारणादित्यपरं प्रयोजनम् । आवृतस्तु यतः स्कन्ध इति करणसाधनात्मिकां व्युत्पत्तिं दर्श-

---

(साध्यसिद्धिमिति, प्रशस्तेनेत्यादि च) इति युक्तम् ॥ ३६ ॥ ३७ ॥

यथा समग्राः सिद्धयो भवन्ति तथाऽऽह—(सहायसम्पदित्यादि) यैः सहायैः कार्यसिद्धिर्भवति, तेषामाशु सम्पत्तिः । प्रज्ञानं तस्मिन्नेव काले प्रकृष्टः ज्ञानम् । सत्वं, दैवानुकूलता. सा च समीहितसम्पत्त्यानुमीयते । उद्योगो मनस्युत्साहः । अध्यवसायश्च कार्यकरणानां च—प्रत्युन्दनादिक्रिया यस्य विजिगीषोर्गुणाः सम्पद्यन्ते तस्य सिद्धय इति ॥ ३८ ॥

स्कन्धावारशब्दं व्याख्यातुमाह—(तन्मूलत्वादिति) तन्मूलत्वात् राजा यत्र मूलं कारणं वा यासां, राज्ञा रक्षिताः प्रजा जीवन्तीति प्रजानां मूलं तस्माद्राजा स्कन्धो वृक्षशाखासमूहस्येव राजा स्कन्ध इति स्मृतः । आवरणमावारोऽमात्यद-

आवृतस्तु यतः स्कन्धः स्कन्धावारस्ततः स्मृतः ॥ ३९ ॥
समवस्कन्दघासाम्बुवीवधासारनिग्रहाः ।
एते प्रयत्नतो रक्ष्याः स्कन्धावारस्य मृत्यवः ॥ ४० ॥
इति प्रयत्नेन निवेशयेद्दलं शुभाशुभं चास्य तथोपलक्षयेत् ।
परस्य चैतन्निपुणं विलोकयेत् समारभेताशुभहीनदर्शने ॥ १ ॥

---

र्यति । इदमुक्तं भवति——प्रजाभिः स्वभूतिनिष्पत्त्यर्थिनीभिस्तत्परिरक्षार्थं तत्साहायकार्थश्चाव्रियतेऽमात्यदण्डादिकयावृत्या स्कन्धोऽनेनेति स्कन्धावारः ॥ ३९ ॥

अस्य निवेशितस्य रक्षणोपायमाह—समवस्कन्देत्यादि । निग्रहशब्दो विघाते द्रष्टव्यः घासादिभिश्च प्रत्येकं योज्यः ॥ ४० ॥

प्रकरणद्वयार्थमुपसंहरन्नाह—इतीत्यादि । परस्य विलोकयेन्निवेशं शुभाशुभञ्च । अशुभहीनदर्शन इति, परस्कन्धावारस्याशुभस्य च दर्शने हीनस्य च दर्शने समारभेत विग्रहमित्यर्थात् ॥ ४१ ॥

---

ण्डादिश्चतुरङ्गबलम् । आवारो वृतिरुच्यते । कण्टकशाखादिकृता रक्षणीयस्येवेति ॥ ३९ ॥

एतदेव स्पष्टयन्नाह—( भूतानामित्यादि ) भूतानां भूतिः सम्भूतिः सम्पत्तिर्वा तन्निष्पत्तेरावारेणामात्यादिप्रकृतिसमूहेनावारितः परिवृतः स्कन्धो राजा कारणं भवतीति वाक्यशेषः । अतः कारणात् स्कन्धावारः सपरिवारो राजा स्मृत इति ॥ ४० ॥

स्कन्धावारविनाशकारणप्रतीकारार्थमाह—( समवस्कन्देत्यादि ) समवस्कन्दः सौप्तिकादिः शुद्धबैलवन्निपातैः, एको मृत्युः । घासो हस्त्यश्वाद्याहारः । अम्बु पानीयम् । वीवधासारौ कृतव्याख्यौ । तेषां च निग्रहो निरोधः प्रत्येकं स्कन्धावारस्य मृत्यवो यतोऽन्नपानादिभिर्विना प्राणिनो न जीवन्ति, अत एते प्रयत्नतो रक्ष्याः प्रतीकारद्वारेण निवारणीयाः । अरक्षिताश्च स्कन्धावारस्य मृत्यवो भवन्ति ॥ ४१ ॥

इति निमित्तज्ञानं नाम षड्विंशं प्रकरणम् ।

इति श्रीकामन्दकीये नीतिसारे सप्तदशः सर्गः ।

---

इति निमित्तज्ञानं नाम षड्विंशं प्रकरणम ।

इति श्रीशङ्करार्यकृतायां कामन्दकीयनीतिसारपञ्चिकायां जयमङ्गलायां स्कन्धावारनिवेशेन निमित्तज्ञाने नाम सप्तदशः सर्गः ।

---

उपसंहरन्नाह—( इत्युक्तयत्नेनेति ) इत्युक्तेन प्रकारेण निवेशयेद्दलं मौलादिकं शुभाशुभं चास्य तदोपलक्षयेत् निवेशकाले । परस्य चैतत् शुभाशुभं निपुणं विलोकयेत् । समारभेत सङ्ग्रामम् । अशुभहीनदर्शने तु न किञ्चिदारब्धव्यमिति ॥ ४२ ॥

इति निमित्तज्ञानं नाम षड्विंशं प्रकरणम् ।

इति कामन्दकीयनीतिसारटीकायामुपाध्यायनिरपेक्षायां स्कन्धावारनिवेशननिमित्तज्ञाने नाम सप्तदशः सर्गः ।

## अथ अष्टादशः सर्गः ।

### २७ अथ उपायविकल्पप्रकरणम् ।

महाप्रज्ञानसम्पन्नः सैहायैरुपबृंहितः ।
उद्योगाध्यवसायाभ्यामुपायान् निक्षिपेत् परे ॥ १ ॥
चतुरङ्गं बलं मुक्त्वा कोशो मन्त्रश्च युध्यते ।

---

## अथ अष्टादशः ॥

### २७ उपायविकल्पप्रकरणम् ।

एवं शुभाशुभनिमित्तदर्शनाल्लब्धोत्साहः शत्रौ विजिगीषुरुपायान् प्रयुञ्जीत । शत्रुजयस्योपायसाध्यत्वादित्युपाय विकल्प उच्यतेऽस्मिन्सर्गे । यदाह— महाप्रज्ञानसम्पन्न इत्यादि । महती अष्टाङ्गा प्रज्ञा यस्य स महाप्रज्ञानः सम्पन्नश्च सहायैर्यदा सहायसम्पदादयः षट् सिद्धिहेतवो गुणा स्युस्तदा शत्रौ निक्षिपेदुपायान् ॥ १ ॥

कुत्र कुमुपायमादौ निक्षिपेदित्याह—चतुरङ्गमित्यादि । कोशो मन्त्रश्च युध्यते प्रथमम् । हस्त्यश्वरथपदातिभिःर्व्यायामयुद्धमन्त्यावस्थायां क्रियते । तस्मात्

---

## अथ अष्टादशः सर्गः ।

### २७ अथ उपायविकल्पप्रकरणम् ।

वैरिपुराभ्याशे स्कन्धावारनिवेशं कृत्वा सहसा न शुध्येत (यु) किं तूपायप्रयोगपूर्वकं मन्त्रयुद्धारम्भः कर्तव्य इति दर्शयन्नाह—( महाप्रज्ञेनेति । ) महाप्रज्ञानं गुणाष्टकयुक्ता प्रज्ञा शुश्रूषाश्रवणग्रहणधारणविज्ञानोहापोहतत्वाभिनिवेशाः प्रज्ञागुणा इति वचनेन ( तया ) सम्पन्नः । सत्वदैवे कृतलक्षणे । ताभ्यामुपबृंहितः कृतैतदर्थः । उद्योगाध्यवसायाभ्यामुक्तस्वरूपाभ्यामुपायकारणभूताभ्यामुपायान् सामदानभेदादीननिक्षिपेत् प्रयुञ्ज्यात् परे यातव्य इति ॥ १ ॥

कस्मात् प्रकाशयुद्धं मुक्त्वा उपायप्रक्षेपोऽभिधीयत इति चेदाह—( चतुरङ्गबलमिति । ) यस्मात् कोशो मन्त्रश्च युध्येते । चतुरङ्गबलं युध्यते । कोशः कथं युध्यते इति चेत् कोशदानेनात्मसात्कृता बलव्यतिरिक्ताश्चरपुरुषा युध्यन्ते इति भावः । तथा मन्त्रोऽपि युध्यते, मन्त्रो मन्त्रिभिः सह निर्णीता बुद्धिः परे

तत्साधुमन्त्रो मन्त्रेण कोशेन च जयेदरीन् ॥ २ ॥
साम दानञ्च भेदश्च दण्डश्चेति चतुष्टयम्।
मायोपेक्षेन्द्रजालञ्च सप्तोपायाः प्रकीर्तिताः ॥ ३ ॥
परस्परोपकाराणां दर्शनं गुणकीर्तनम्।

---

प्रथमं मन्त्रेण सामभेदात्मकेन कोशेन कृतेन जयेदरीन् । साधुमन्त्रः कृतपञ्चाङ्गविनिर्णयत्वात् ॥ २ ॥

के पुनरुपाया इत्याह—सामेत्यादि । तत्र सामादिचतुष्टयं सर्वेषामेवाचार्याणामभीष्टमिति पृथङ्निर्दिष्टम् । मायादिभिः सह सप्तोपायाः प्रकीर्तिताः कश्चित् ॥ ३ ॥

तत्र चतुष्टयस्य स्वरूपभेदं षड्भिः श्लोकैराह—परस्परोपकाराणामित्यादि त्वयेदमस्मासूपकृतं मयायुष्मास्विदमिति पूर्वकृतानामुपकाराणां दर्शनम्। गुणकीर्तनं शूरः श्रुतवान् यद्वा रूपवानित्यादि । सम्बन्धस्य समाख्यानं—या त्वद्भगिनी सा मद्भ्रातृभार्येति, यौनस्य, अस्मत्पितुः सकाशात्त्वयाऽधीतमिति

---

तिसन्धानलक्षणा । स मन्त्रः शस्त्ररसादिप्रयोगैः शत्रून् विनाशयति । यथा चोक्तं—

एकं हन्यान्न वा हन्यादिषुर्मुक्तो धनुष्मता।
प्राज्ञेन तु मतिः क्षिप्ता हन्याद्गर्भगतानपि ॥

अपि च—

विषाणदंष्ट्रानखकोटि पाणिभि-
र्द्विषत्सु दण्डं पशवोऽपि युञ्जते।
अयं विशेषः प्रतिबुद्धचेतसां
धनूंष्यनारोप्य जयन्ति विद्विषः ॥ इति ॥ २ ॥

उपायानभिधातुमाह—( सामेति । ) इति प्रतीतम् ॥ ३ ॥

सामस्वरूपमाख्यातुमाह—( परस्पर इति । ) परस्परोपकाराणामिति भवद्भिरस्माकमस्माभिश्च भवतामिति ( दर्शनं ) तदाद्यं साम । गुणकीर्तनमिति वंश—रूप—विद्या · वित्त—चरित्रादिगुणानां कीर्तनं श्लाघनं द्वितीयं साम । पूर्वसम्बन्धकथनामिति पूर्वेषां सम्बन्धा यौन—मौख—स्रौवादयस्तेषां कथनं ख्यापनं तृतीयं

सम्बन्धस्य समाख्यानमायतेः सम्प्रकाशनम् ॥ ४ ॥
वाचा पेशलया साधु तवाहमिति चार्पणम् ।
इति सामप्रयोगज्ञैः साम पञ्चविधं स्मृतम् ॥ ५ ॥
यः सम्प्राप्तधनोत्सर्ग उत्तमाधममध्यमः ।
प्रतिदानं तथा तस्य गृहीतस्यानुमोदनम् ॥ ६ ॥

---

मौर्खस्य आयतिसम्प्रकाशनं--अस्मिन्नेवं कृते इदमावयोर्भविष्यतीत्याशाजननम् ॥ ४ ॥

पेशलया—हृदयहारिण्या । तद्यथा योऽहं स भवान् , यन्मम द्रव्यं, तद्भवता 'वकृत्येषूपयुज्यता'मिति ॥ ५ ॥

उत्तमाधममध्यम इति । सारासारो मध्यमोपायः । सम्प्राप्तो गृहीतो धनोत्सर्गो द्रव्यसम्पत् , तस्य गृहीतस्य तथा सारासारादिभेदेन प्रतिदानं—प्रत्यर्पण, मनुप्रतिदानमित्यर्थः । गृहीतस्यानुमोदनमनुज्ञानम् ॥ ६ ॥

---

साम । स्वसम्बन्धप्रकल्पनमिति अस्माकं पिता तव भ्राता भवतीति चतुर्थं साम ॥ ४ ॥

( सूचना—अत्र पूर्वसम्बन्धस्वसम्बन्धयोः पृथगकृत्वा आयतेः सम्प्रदर्शनं चतुर्थं सामेति गणितं पूर्वं नवमसर्गे ७७ श्लोकटीकायाम् । इह त्वायतेः सम्प्रदर्शनं नैव लिख्यते । लेखकप्रमादो वा टीकाकाराभिप्रायविशेषो वेति सुधीभिरालोचनीयम् । )

( वाचेति । ) इति स्पष्टम् ॥ ५ ॥

दानमपि पञ्चविधमभिधातुमाह—( य इति । ) यः सम्प्राप्तधनोत्सर्गस्तत्प्रातिदानमुच्यते । स सम्प्राप्तो यथा भवत्युत्तमोऽधनो मध्यमो वा संख्यातः सारतो वा तथा सम्प्राप्तधनोत्सर्गः । सम्प्राप्तिस्तु यथाकथंचिदपि भवतु, प्रतिदानं तथैवात्राविनष्टस्य यत्तद्अयमेको दानभेदः, स्वत्वादुत्तीर्णमपि दीयत इति । गृहीतस्यानुवर्तनामिति स्वयमेवादत्तादानतया गृहीतमपि कार्यवशात् यदनुवर्तते, " साधुकृतं यत्स्वयमेवेदं गृहीतम् । मया पूर्वमेव सङ्कल्पितमित्येवंविधेनानुवर्तनेन युक्तमिति द्वितीयो दानभेदः ॥ ६ ॥

द्रव्यदानमपूर्वञ्च स्वयंग्राहप्रवर्तनम्।
देयस्य प्रतिमोक्षश्च दानं पञ्चविधं स्मृतम् ॥ ७ ॥
स्नेहरागापनयनं सङ्घर्षोत्पादनं तथा।
सन्तर्जनञ्च भेदज्ञैर्भेदस्तु त्रिविधः स्मृतः ॥ ८ ॥
वधोऽर्थहरणञ्चैव परिक्लेशस्तथैव च।
इति दण्डविभागज्ञैर्दण्डोपित्रिविधः स्मृतः ॥ ९ ॥

---

द्रव्यदानमपूर्वञ्च भाण्डागारादुद्धृत्य यदभिनवं दानं, स्वयं ग्राहप्रवर्तनम्, परस्वेष्विति शेषः। अमुष्माद्द्रव्यं गृहाण तवैव भविष्यतीति। देयस्य प्रतिमो, क्षणमृणादिप्रतिमोचनम् ॥ ७ ॥ ६८

भेदस्त्रिविध इति। परस्माद्विश्लेषणं भेदः। स द्विविध उक्तः कौटिलीये शङ्कजननमभिभर्त्सनञ्च। भेदानुग्रहेण वृद्धः प्रासादनतरुवत्स्वमाश्रयमेवोच्छेत्स्यति इत्याशङ्कजननम्। अस्य त्वस्मिन् मित्राभिग्रहस्य परिणामोऽस्मत्तो भविष्यतीत्येवंप्रकारसन्तर्जनमभिभर्त्सनम्। तत्र शङ्कजननं कार्यद्वारेण द्विधा विभज्येह त्रिविध उक्तः। उत्पादिता हि शंका स्नेहं भक्तिं चापनयति स्पर्धां चोत्पादयति ॥ ८ ॥

वधः प्रवासनं परिक्लेशः बन्धनताडनादिभिः दुःखोत्पादनम् ॥ ९ ॥

---

( द्रव्येति। ) द्रव्यदानमपूर्वमिति यदभिनवं दीयते तत्तृतीयम्। तथा स्वयंग्राहप्रवर्तनं परविषयादौ यत् त्वया गृहीतं तत् तवान्विष्यते मयेति चतुर्थम्। देयस्यैव प्रतिवर्षं दातव्यस्य प्रतिमोक्षस्तदपि दानमेवेत्येवं दानं पञ्चविधं स्मृतम् ॥ ७ ॥

भेदमभिधातुमाह—( स्नेहेति। ) स्नेहः सोदर्यजा प्रीतिः। रागो गुणग्रहणप्रभवोऽनुरागः। तयोरपनयनम्। सङ्घर्षोत्पादनं तथेति स्निग्धकर्मसु यदि सङ्घर्षः स्पर्धा उद्घाट्यते तस्यापि भेदो भवति। सन्तर्जनं च तद्यथा यद्यनेन सहैककार्यो भवसि मेहद् भयं ते भविष्यतीति। एवं भेदज्ञैर्भेदस्तु त्रिविधः स्मृत इति ॥ ८ ॥

दण्डमभिधातुमाह—( वध इति। ) वधो विनाश एकाङ्गस्याशेषाङ्गस्य वा। अर्थहरणं अर्थोऽपि बहिश्चराः प्राणास्तद्धरणमपि दमनक्रियैव। परिक्लेश-

प्रकाशश्चाप्रकाशश्च पूर्वं द्विविध उच्यते ।
प्रकाशदण्डं कुर्वीत लोकद्विष्टे तथा रिपौ ॥ १० ॥
उद्विज्यते हतैर्लोको यैर्ये स्युर्नृपवल्लभाः ।
बाधन्तेऽभ्यधिकां ये तु तेषूपांशु प्रशस्यते ॥ ११ ॥
विषेणोपनिषद्योगैः शस्त्रेणोद्वर्तनेन वा ।

---

वधाख्यस्य दण्डस्य विषयभेदं चतुर्भिः श्लोकैर्दर्शयति—प्रकाश इत्यादि । पूर्वं द्विविध उच्यते वधाख्यो दण्डः । लोकद्विष्टाश्च परदारिकादयो रिपवश्च प्रकाशं हता न दोषाय ॥ १० ॥

हतैर्यैर्दृष्टैरपि । नृपवल्लभाः श्यालादयः । तेऽपि लोके दृढभक्तिता, ख्यापनार्थं अप्रकाशं हन्तव्याः । ये चाभ्यधिका बलीयांसः प्रकाशं हन्तुमशक्याः ॥ ११ ॥

स चोपांशुदण्डः कथं प्रयोक्तव्य इत्याह——विषेणेत्यादि । अभ्यवहार्यादिसंसृष्टेन विषेण । उपनिषद्योगैः——रहस्यप्रयोगैरग्न्यादिभिः । शस्त्रेण

---

स्तथैव च. कर्मणा या( पा ? )तनादिना व्यायामैर्रसारादिसम्पादनरूपो वा । इत्येवं दण्डविधानज्ञैर्दण्डोऽपि त्रिविध इति ॥ ९ ॥

वधदण्डमपि द्विविधं प्रतिपादयन्नाह—( प्रकाश इति । ) प्रकाशः सकलजनाविदितः । अप्रकाशः केनाप्यविदितः । तत्र प्रकाशदण्डान् कुर्वीत लोकं विद्विष्टान् चौरपारदारिकादीन् तथा रिपून् भूम्यनन्तरादीनिति ॥ १० ॥

अप्रकाशदण्डो येषु प्रयोज्यस्तानभिधातुमाह ( उद्विज्यत इति । ) यैर्हतैर्लोक उद्विज्यते उद्वेगं याति स्नेहलोभादिति, ये च नृपवल्लभा भूत्वा बाधन्तेऽभ्यधिकम् । प्रजा इति शेषः । हि ये वा, तेषु उपांशुः गुप्तवधः स्मृतो नान्येष्वपि प्रशस्यते । उपांशुशब्दस्य च व्युत्पत्तिः—' अशू ' व्याप्तौ पठितः । उप समीपे व्याप्तिर्यस्य तदेकदेशवर्तित्वात् उपांशु, न प्रकटमिति ॥ ११ ॥

उपांशुवधस्वरूपमभिधातुमाह—( विषेणेति । ) विषेण कृत्रिमेणाकृत्रिमेण वा । उपनिषद्योगैः अभिचारणधूमांशु( भाम्बुः )दूषणादिभिः । शस्त्रेण गूढप्रयुक्तेन । ( उद्वर्तनेन ) वा स्पर्शवियुक्तेन वा । तथोपांशुदण्डं नयेत् प्रयुञ्ज्यात् यथा

तथोपांशु नयेद्दण्डं यथाऽन्यो न विभावयेत् ॥ १२ ॥
ब्राह्मणे जातिमात्रेऽपि धार्मिके चान्त्यजेऽपि वा ।
धर्मोन्निनीषया धीमान् न वधं दण्डमादिशेत् ॥ १३ ॥
उपेक्षया वा हन्तव्या येषूपांशु प्रशंस्यते ।
उपेक्षां चापि निपुणः प्रत्यक्षं परिवर्जयेत् ॥ १४ ॥
प्रलिम्पन्निव चेतांसि दृष्ट्या साधु पिबन्निव ।
स्रवन्निवामृतं साम प्रयुञ्जीत प्रियं वचः ॥ १५ ॥

---

तीक्ष्णप्रयुक्तेन । उद्वर्तनेनेति, केनचित् स्फोटादिजनकेन विलेपनेन ॥ १२ ॥

अन्त्यजे——चाण्डालादौ । धर्मोन्निनीषया——धर्मोद्विभावयिषया । न वधं दण्डमादिशेत्, परिक्लेशार्थहरेण तु विनयाधानार्थ—मादिशेदेव ॥ १३ ॥

विधानान्तरमाह——उपेक्षया वेत्यादि । उपेक्षां वक्ष्यति । नृपवल्लभादीनां यद्यन्ये हन्तारः स्युस्तदा तरेव हन्यतामित्युपेक्षां कुर्यात् । प्रत्यक्षं परिवर्जयेत्, वधस्य हि प्रत्यक्षमुपेक्षामाचरंस्तैरेव हन्येत अस्मद्विनाशमुपेक्षत इति ॥ १४ ॥

यथा सामादीन् प्रयुञ्जीत तथा दर्शयति श्लोकचतुष्टयेन प्रलिम्पन्नित्यादि । साम प्रयुञ्जीत, किं तत्तमित्याह—प्रियं वच इति ॥ १५ ॥

---

अन्यो न विभावयेत् ॥ १२ ॥

यत्र दण्डो न प्रयोज्यस्तदाह—( ब्राह्मण इति । ) धर्मोन्निनीषया धर्ममुन्नतिं नेतुमिच्छया धीमान्न वधं दण्डमादिशेद्राजेति ॥ १३ ॥

उपांशुप्रकारमभिधातुमाह—( उपेक्षयेति । ) अन्यैर्हन्यमाना अनुग्राह्या इत्यर्थः । प्रत्यर्थोपेक्षया तु शङ्कनीयः स्यादित्यर्थः ॥ १४ ॥

उपायाः प्रयोगकाले संस्कृत्य प्रयोक्तव्या इत्येतद्दर्शयन्नाह—(रावशेत्र न्निति । ) प्रविशन्निव चेतांसि प्रकृतत्वात् अमृतस्राविणा साम्ना चन्दनाधिकस्पर्शेनेति द्रष्टव्यम् । दृष्ट्या साधु पिबन्निव सामप्रयोगार्हनयनेन । इयं च दृष्टिः स्निग्धाख्या षट्त्रिंशद्दृष्टिमध्ये कृतलक्षणा । तद्यथा·

"व्याकोशा स्नेहमधुरा स्मितगौराभिलाषिणी ।
सानन्दाश्रुकृता दृष्टिः स्निग्धेयं रतिभाविता" ॥ इति ।

स्रवन्निवामृतं साम प्रयुञ्जीत । तस्य च स्वरूपं किमित्याह—प्रियमिष्टं वचः सामेत्युच्यते ॥ १५ ॥

वागनुद्वेगजननी सामेति परिकीर्त्यते ।
सांऽऽख्याने सूनृते सान्त्वे प्रिये स्तोत्रे च कीर्त्यते ॥ १६ ॥
आत्मनो विक्रयमिव कुर्वन्न् दद्यात् समीहितम् ।
जलवत् पर्वताञ्छत्रून् भिन्द्यादनुपलक्षितः ॥ १७ ॥
दण्डपाणिरिवाधृष्यो दण्डं दण्ड्येषु पातयेत् ।
प्रत्यक्षमपि चोपेक्षामप्रत्यक्षामिवाचरेत् ॥ १८ ॥
साम्नार्थसिद्धये विद्वान् यतेत यतमानसः ।
सामसिद्धिं प्रशंसन्ति सर्वतश्च विपश्चितः ॥ १९ ॥

---

तदेव पञ्चविधं सूचयन्नाह—वागित्यादि । अनुद्वेगजननी—विस्रम्भजननी । सा वाक् परस्परोपकाराणां दर्शने आख्याने—सबन्धाख्याने, सूनृते-समाख्याने, सान्त्वे तवाहमिति चार्पणे, प्रिये आयति सम्प्रकाशने, स्तोत्रे गुणकीर्तने ॥ १६ ॥

विक्रयमिव कुर्वन्निति--अङ्गार्पणेन आत्मानं विक्रीणन्निव । दद्यात्समीहितं यद्दातुमभिप्रेतम् । जलवद्भिन्द्यात् शनैः शनैः ॥ १७ ॥

दण्डपाणिरिव यम इव भूतानामधृष्यः ।: प्रत्यक्षमपीति--वधस्य प्रत्यक्षपेक्षां वर्जयेदित्युक्तं प्राक् । इदानीं तस्य विशेषः, प्रत्यक्षमुपेक्षामप्रत्यक्षमिवाचरेदाकार संवरणेन ॥ १८ ॥

एते च सामादयो यथाक्रमं प्रयोक्तव्याः । तत्र श्लोकद्वयेन सामप्रयोमाह—साम्नेत्यादि । अर्थसिद्धये यतेत, यतमानसः, असंयतचेतसो हि सामाभावात् । सर्वतःसर्वत्र चतुर्ष्वप्युपायेषु सर्वेभ्य उपायेभ्यः ॥ १९ ॥

---

तच्च साम विशिष्टगुणयोगात् ( पुजः ) त्रि( द्वि ? )विधमिति दर्शयन्नाह—( वागिति । ) सैव सामाख्या वाक् सूनृतं, सान्त्वं यथाक्रमं प्रिये स्तोत्रे च कीर्त्यते । सामैव यदा प्रियं भवति तत्सूनृतमुच्यते । यदा स्तोत्रं तदा सान्त्वमिति ॥ १६ ॥

( आत्मणे विक्रयमेवेति ) ॥ १७ ॥

( दण्डपाणिरिवेति ) ॥ १८ ॥

( साम्नार्थसिद्धय इति ) ॥ १९ ॥

"क्षीरोदो मथितः साम्ना फलायामरदानवैः ।
निजघ्निरे धार्तराष्ट्राः सामप्रद्वेषिणोऽचिरात् ॥ २० ॥
दारुणं विग्रहं विद्वान् दानेन प्रशमं नयेत् ।
इन्द्रोऽपचारे शुक्रस्य दानेन शंममेयिवान् ॥ २१ ॥
अपराधेन दुहितुः कुपिते भृगुनन्दने ।

---

सामप्रधानस्य सामद्वेषिणश्च गुणदोषावाह—क्षीरोद इति । पुरा किल क्षुज्जरापीडिता देवाः ब्रह्माणमुपगम्य तत्पीडोपशमं प्रपच्छुः । स तानाह क्षीरोदं निर्मथ्यामृतं पिबतेति । ते तत्स्तुति पराश्चिरकालं तमाराध्य दानवसहाया ममन्थुरिति । धार्तराष्ट्रा, दुर्योधनादयः । ते विक्रमैकरसा मानिनः सामसाध्येषु पाण्डुषु विक्रममाणास्तैर्निहता इत्यतिप्रतीतम् ॥ २० ॥

श्लोकत्रयेण दानप्रयोगमाह दारुणमित्यादि । यदा साम्ना न सिद्ध-स्तदा दारुणो विग्रहो भवति । इन्द्रोऽपचार इति, दानवानामिन्द्रो वृषपर्वा नामासुरो दुहित्रा कृतेऽपचारे शुक्रस्य दानेन स्वदुहितुः शममेयिवान् ॥ २१ ॥

तदेव स्फुटयन्नाह—अपराधेनेत्यादि वृषपर्वणो दानवेन्द्रस्य दुहिता शर्मिष्ठा नाम तन्मन्त्रिणः शुक्रस्य दुहित्रा देवयान्या सह स्नातुं गता । तत्र स्नाता देवयानी विसंवादानुबद्धवस्त्रयाशर्मिष्ठया परुषमभिहिता सञ्जातखेदा च पित्रे न्यवेदयत् । शुक्रोऽपि तच्छ्रुत्वा सञ्जातामर्षस्तद्राष्टादन्यत्र गच्छन्नसुरैः प्रसाः

---

अत्रैव दृष्टान्तमभिधातुमाह—( क्षीरोद इत्यादि ) दुग्धोदधिरमरदानवैःसाम्ना प्रियवचनैः स्तोत्रपुरस्परं प्रसाद्य पश्चान्मथितं फलार्थम् । अमृतादिरत्र फलं तदर्थमिति । निजघ्निरे धार्तराष्ट्राः कौरवाः सामप्रद्वेषिण इति । निजघ्निर इति विनाशमुपगता अचिरादेव ॥ २० ॥

( दारुणमिति । ) दारुणमप्रतिविधेयं विग्रहं विरोधं विद्वान् विजिगीषुः दानेन प्रशमं नयेत् । इन्द्रोऽपचारे शुक्रस्य—इन्द्रो देवराजः शुक्रस्यापचारे देवानामुपद्रवलक्षणे घोरैरौत्पातिकैरौपनिषदिकैर्मारणोच्चाटनविद्वेषणादिभिस्तथा मृतदैत्यसञ्जीवनादिभिश्च कृतमहापकारे ( सति ) शुक्र ( स्य ) शिष्यकचहस्तेन मृतसञ्जीवनाविद्या ( दान ) तेन करणभूतेन शममुपशममेभिवान् आगत इति दान-माहात्म्यम् ॥ २१ ॥

तथा—( अपराधेनेति । ) अपराधेन दुःखेन । दुहितुर्दानवेन्द्रस्य वृषपर्वण

वृषपर्वा च दानेन दानवेन्द्रोऽभवत् सुखी ॥ २२ ॥
उपच्छन्द्यापि दातव्यं बलिने शान्तिमिच्छता ।
समूलमेव गान्धारिरप्रयच्छन् गतः क्षयम् ॥ २३ ॥
किञ्चित् प्रयच्छन् भूयस्या तृष्णया विप्रलोभयन् ।
भिन्द्याच्चतुर्विधान् प्रविश्योभयवेतनैः ॥ २४ ॥

---

द्यमानस्तानाह—'यद्यस्मद्दुहित्रे वृषपर्वा शर्मिष्ठां दासीत्वेन प्रयच्छति तदा प्रतिनिवृत्तोऽहामीति । ततोऽसौ दुहितुः प्रदानेनाभवत्सुखीति ॥ २२ ॥

उपच्छन्द्य बलेनिच्छतेऽपि । गान्धारिर्दुर्योधनः । स हि वनवासाज्ञातवासौ यथासमयमुषित्वा स्वमंशं याचमानेभ्योऽपि पाण्डवेभ्योऽप्रयच्छन्समूलमेव ननाश ॥ २३ ॥

अष्टादशभिः श्लोकैर्भेदप्रयोगमाह—किञ्चिदित्यादि । प्रयच्छन् तदात्वे । तृष्णया आगामिन्या । भेदसौकर्यार्थमत्र मात्रया दानप्रयोगः । चतुर्विधान् भेद्यान् क्रुद्धलुब्धभीतापमानिनः कृत्यान् । प्रविश्योभयवेतनैर्द्वारभूतैः ॥२४॥

---

सुतायाः शर्मिष्ठाभिधानायाः कुपिते च भृगुनन्दने, वृषपर्वा दानवेन्द्रः प्रदानेन स्वदुहितुरेवाभवत्सुखी । तद्यथा—दानवानामिन्द्रः स्वामी वृषपर्वाभिधानः, तत्सुता शर्मिष्ठा, शुक्रकन्या देवयानी, तयोः कलहे शर्मिष्ठया देवयानी कोपात् कूपे पातितेति श्रुत्वा शुक्रेण मन्त्रित्वं परित्यक्तामिति स्वसुतां शर्मिष्ठां सहस्रकर्मिकायुक्त देवयान्यै दासीं दत्वा अनुनयं ग्राहित इति ॥ २२ ॥

( उपगम्येति । ) उपगम्य छन्दानुवर्तनमनेकप्रकारमपि कृत्वा दातव्यं बलिने शक्तित्रयसम्पन्नाय शान्तिमिच्छता आत्मनोऽभ्युदयमिच्छता । समूल एव सकलसहित एव दुर्योधनो गान्धार्या अपत्यमप्रयच्छन् पञ्चापि ग्रामान् क्षयं गतः तस्माद्दानादात्मा रक्षणीय इति भावः ॥ २३ ॥

भेदप्रयोगमभिधातुमाह—( किञ्चिदिति । ) किञ्चित् प्रयच्छन्नपि किञ्चित्स्वल्पमकिंकदानेन शत्रुवृद्धिर्मा भवत्विति भूयस्या तृष्णया विप्रलोभयन् बहुतरामाशां जनयन् भिन्द्याद्विश्लेषयेत् चतुर्विधान् चतुःप्रकारान् भेद्यान् कृत्यपक्षिकान् । तथा च कौटिल्यः—'क्रुद्धलुब्धभीतापमानिताः परेषां कृत्या', इति । कैः करणभूतैरित्याह—उभयवेतनैर्विजिगीषौ यातव्ये च वतनं जीविका येषां तैः । प्रविश्यान्तरङ्गतां गत्वेति ॥ २४ ॥

अलब्धवेतनो लुब्धो मानी चाप्यवमानितः ।
क्रुद्धश्च कोपितोऽकस्मात् तथा भीतश्च भीषितः ॥ २५ ॥
यथाभिलषितैः कामैर्भिन्द्यादेतांश्चतुर्विधान् ।
परपक्षे, स्वपक्षे च यथावत् प्रशमं नयेत् ॥ २६ ॥
भेदं कुर्वीत यत्नेन मन्त्र्यामात्यपुरोधसाम् ।
तेषु भिन्नेषु भिन्नं हि युवराजे तथोर्जिते ॥ २७ ॥
अमात्यो युवराजश्च भुजावेतौ महीपतेः ।

---

अलब्धवेतनः अलब्धलाभः । नन्वत्र विमानितो मानी क्रुद्धवर्गे भवति, सत्यम् । आशु भेदप्रतिपत्त्यर्थं विशेषणम् । एवञ्चालब्धवेतनो लुब्धः क्रुद्धश्च कोपितः, भीतश्च भीषितः, इत्यपि विशेषणमर्थवत् ॥ २५ ॥

कामैर्भोगैर्भिन्द्यादेतान् परपक्ष इति सम्बन्धः । स्वपक्षे च यथावत्प्रशमं नयेत्, सामादिभिरकृत्यतां नयेत् ॥ २६ ॥

अमात्य. कर्मसचिवः । स चात्राक्षपटलिको विज्ञेयः । ऊर्जिते लब्धप्रभावे ॥ २७ ॥

भुजावेतौ, ताभ्यां राज्यभारस्योह्यमानत्वात् । पुरोहितस्यामात्ये न्तर्भावः मन्त्री नेत्रं, तेन सन्ध्यादिपदार्थस्यालोच्यमानत्वात् । तद्वधो महीपति-

---

एतदेव व्याख्यातुमाह—( अलब्धवेतन इत्यादि ) विशिष्टदानं वेतनम् । अलब्धवेतनो भेद्यो भवति । मानी चाप्यवमानितस्तथा । क्रुद्धश्च कोपितोऽकस्मात्कारणं विनैव भेद्यो भवति । भीतश्च भीषितो भेद्यो भवति ॥ २५ ॥

( यथाभिलषितैः कामैरिति ) येषां यः कामः ॥ २६ ॥

( भेदमित्यादि ) भेदं कुर्वीत यत्नेन मन्त्र्यमात्यपुरोधसां यातव्यसम्बन्धिनाम् । तेषु भिन्नेषु भिन्नं हि सकलं भवतीति वाक्यशेषः । तथा युवराजे यातव्यसम्बन्धिनि । ऊर्जिते बलवति भिन्ने भिन्नं भवति ॥ २७ ॥

प्रधानभेदेन प्रयोजनमभिधातुमाह—( अमात्य इत्यादि । ) अमात्यो मुख्यमन्त्री । युवराजो यौवराज्येऽभिषिक्तः कुमारः । भुजावेतौ सर्वस्यापि महीपतेः । मन्त्री नेत्रं हि । तदिदि तेषां भिन्नं एकस्मिन्नपि तद्वध इति महीभुजो वधो

मन्त्री नेत्रं हि तद्भिन्न एतस्मिन्नपि तद्वधः ॥ २८ ॥
सर्वावस्थं तु मेधावी तत्कुलीनं विकारयेत् ।
विकृतस्तत्कुलीनस्तु स्वयोनिं ग्रसतेऽग्निवत् ॥ २९ ॥
तत्कुलीनेन तुल्यस्तु पुमानभ्यन्तरोषितः ।
तस्मादेतौ परे भिन्द्याच्छमं चात्मनि सन्नयेत् ॥ ३० ॥
तत्रोपजापः कर्तव्यो यः कोपानुग्रहक्षमः ।

---

विनाशः ॥ २८ ॥

सर्वावस्थं—क्षयलोभविरागमाप्तम् । विकारयेत् संघर्षयेत् । अग्निवत्—अग्निर्यथारणिमेव नाशयति ॥ २९ ॥

तत्कुलीनेन तुल्यः सर्वावस्थत्वात् । अभ्यन्तरोषितो विश्वासी । सोऽपि विकारितस्तत्कुलीनवद्ग्रसते । तस्मादेतौ परेऽभिन्द्यात् । शममात्मनि सन्नयेत्—विकृतौ प्रशमयेदित्यर्थः ॥ ३० ॥

कोपानुग्रहक्षम इति । कोपं कर्तुं शमयितुं च समर्थः । तत्र भेदः कार्यः ।

---

विनाशः, मन्त्र्यादिप्रतिबद्धत्वादखिलपरिजनस्येति ॥ २८ ॥

अप्रधानेऽपि यत्र भेदे साफल्यमभिधातुमाह—( सर्वावस्थमिति । ) सर्वा अविनीतत्व—व्यसनित्व—भीरुत्वादिका अवस्थाः परिणता यस्यासौ सर्वावस्थितदशाभयमपि मेधावी विजिगीषुस्तत्कुलीनं यातव्यकुलभवं दायादमित्यर्थः । विकारयेत—भेदपूर्वकं विग्रहे प्रवर्तयेत् । विकृतो गृहीतविकारस्तत्कुलीनस्तु स्वयोनिं ग्रसतेऽग्निवत् । यथा अग्निः काष्ठादुत्पन्नः काष्ठमेव दहति तथाऽसौ यत्र कुले समुत्पन्नस्तदेव दहति ॥ २९ ॥

( तत्कुलीनेत्यादि ) यथा तत्कुलीनो विकारं नीतोऽग्निरिव स्वकुलमेव दहति तेन समानः पुमानिति पुरुषगुणयुक्तः शौर्यातिशयसम्पन्नः परशुरामसमानोऽभ्यन्तरोषितः । तस्मादेतौ तत्कुलीनातिक्रुद्धमहापुरुषौ परे यातव्ये भिन्द्यात् तथा—आत्मनि च क्रुद्धं ( कुलीनं ) अतिक्रुद्धं च महापुरुषं शमं ग्राहयेत् यथा परप्रयुक्तो भेदो न भवतीति ॥ ३० ॥

एतदेव समर्थयन्नाह—( तत्रोपजाप इत्यादि ) तत्र पुरुषैः ( स्वं ) कीयैवं भेदार्थमुपजाप, उप समीपं गत्वा ( जापः ) सन्देहालापादीनां जपनं व्यक्तवचन कर्तव्यम् । यः कोपानुग्रहक्षमः । यदीयः कोपः ( पर ) परिग्रहे विनाशकरः ।

स कल्याणः शठो वेति परीक्ष्यः सूक्ष्मया धिया ॥ ३१ ॥
कल्याणस्तु यथाशक्ति करोति सफलं वचः।
शठः पक्षौ च( चा ? )लयति द्वावप्यर्थोपलिप्सया ॥ ३२ ॥
पूर्वं सम्भाषितोऽनीचः कालयापनमाश्रितः।

---

कल्याणः अविसंवादकः। शठस्तद्विपरीत इति ॥ ३१ ॥

सफलं कार्यानुष्ठानेन। पक्षौ चलयति अरिपक्षं विजिगीषुपक्षञ्च। सञ्चाल्यार्थमादत्ते केवलं, न कार्यं घटयति ॥ ३२ ॥

क्रुद्धादीन् भेदयेदित्युक्तं, के क्रुद्धादय इत्याह—पूर्वं सम्भाषित इत्यादि। इदं ते दास्यामीति पूर्वमाभाषितः। अनीचो महात्मा स तस्मादलब्धार्थः, केवलं कालयापनमाश्रितः, नात्मयापनया। स तेन राज्ञा संश्रुत्यार्थाद्विप्रलब्धस्तस्मै कुप्यति विसंवादकोऽयमिति मिथ्याभिशस्त इदमनेन प्रतिषिद्धमाचरितमिति मिथ्यादूषि[illegible]ः कुप्यति। श्री[illegible]ामो व्यवहारे विजयार्थी। स सम्यगहमेव ते व्यव-

---

अनुग्रहः स्वपरिग्रहेऽभ्युदयकरः। स विचार्यमाणः पूर्वोक्तमुख्यातिवल्लभादिनामेव सम्भवति। सः ( यः ? ) इदानीं परमुख्यादिरुपजापात् भिन्न आयातःपरीक्षणीयः सूक्ष्मयातिनिगूढया धिया प्रज्ञया, सर्वत्राऽऽवलीयसप्रवेशादित्यर्थः। कल्याणः शठो वेति, किमयं कल्याणः शुद्धाशयो वा अव्यभिचारी उत शठो वञ्चकोऽतिसन्धायक इति परीक्ष्यः प्रत्यक्षपरोक्षागमप्रमाणैः सूक्ष्मयातिनिर्मलयाल्हादनक्षमया धिया प्रज्ञया ॥ ३१ ॥

कल्याणशठयोः स्वरूपमभिधातुमाह—( कल्याणस्त्विति ) कल्याणकारकत्वात् कल्याण उच्यते। यथाशक्ति शक्त्यनतिक्रमेण स्वामिनः सफलं वचः अभीष्टं सम्पादयति, इत्यर्थः। ( शठोऽति ) सन्धायकः पक्षौ विजिगीषु( पक्ष ) तया व्यक्त्यै चालयति विश्लेषयति द्वावपि, अर्थोपलिप्सया लुब्धत्वाद् यत्नैवार्थलिप्सां करोति तत्कार्यकारी भूत्वा परपक्षं भेदयतीत्यर्थः ॥ ३२ ॥

भेदो येष्वेव प्रयोक्तव्यस्तानभिधातुमाह—( पूर्वसम्भाषित इति ) पूर्वं प्रागेव संम्भाषितो "दास्यामीति" अभिहितः पश्चात् कालयापनं कालातिनयनमास्थितः कालेऽतीव क्षीयमाणो नीच उच्यते। अनीशस्तु स्वामिविषये कथ-

मिथ्याभिशस्तः श्रीकाम आहूयाप्रतिमानितः ॥ ३३ ॥
राजद्वेषी तत्कुलीनो द्विष्यते यश्च भूभुजा ।
आहितव्यवहारश्च तथा कारानिवेशितः ॥ ३४ ॥
रणप्रियः साहसिक आत्मसम्भावितस्तथा ।

---

हारं द्रक्ष्यामीत्याहूयाप्रतिमानितः पराजितः क्रुध्यति । एते त्रयः क्रुद्धवर्गे द्रष्टव्याः ॥ ३३ ॥

राजद्वेषी—स्वचित्तदोषादेव स राज्ञो भीत इवास्ते । तत्कुलीनः—राज्याभिलाषी । तस्माच्छङ्काऽवश्यमेव । द्विष्यते यश्च भूभुजेति, राजदोषाद्दौर्भाग्याद्वा । स कथं द्वेष्योऽहमिति, ततः शङ्कित एव तिष्ठति । एते त्रयो भीतवर्गे । आहितव्यवहारः सर्वत्रैव निवेशितसंव्यवहारः । स बहूनां धारकस्तद्वित्तग्रहणार्थं लुभ्यतीत्ययं लुब्धवर्गे । कारानिवेशितः कारो दण्डः, तत्र गुरुतरे नियुक्तस्त्वयेदमाशु नेयमिति । स तस्मै कुप्यन् क्रुद्धवर्गे द्रष्टव्यः ॥ ३४ ॥

रणप्रियः स्वत एव मानी भवति । साहसिक अविमृश्य यः सहसा चरति । स मानाधिक्यात्कार्याकार्यानपेक्षी । आत्मसंभावितः विद्याभिजनादिभिः कोऽन्योऽस्मदधिक इति । एते त्रयो मानिवर्गे । विच्छिन्नधर्मकामार्थः, धर्मादी-

---

श्वनापि कोपं न करोति । विवेकी चेदात्मन एव कुप्यति मयार्थप्रापकं पुण्यं न कृतमिति । तथा मिथ्याभिशस्तो दोषं विनैव पातकीति स्थापितदोषः । श्रीकाम इति लक्ष्मी कामोऽपि सेवकः, कालयापनमाश्रित इति वर्तते । असावपि निराशत्वाद्भेद्यो भवति । आहूयाप्रतिमानित इति । महतादरेणाहूयाप्रतिमानितोऽवज्ञया दृष्टः, पूजा न कृतेति भेद्यो भवति ॥ ३३ ॥

( राजद्वेषीत्यादि ) राजद्वेषी......तथा ( राजा ) सर्वदा द्विष्यते ( येन ) स विरक्तत्वाद्भेद्यो भवति । तत्कुलनो राज्ञोऽयमिति ( कुलंचधन्यसौ ? कुलेनमान्यत्ये ) दायादत्वाद् भेद्य एव । द्विष्यते यश्च भूभुजेति स्वामिना यः सर्वदा द्विष्यते । स वृत्तेर्निराशत्वाद्भेद्यो भवति । आहित......भेद्यो भवति । तथाऽऽकरानिवेशितः आकरस्य हिरण्यकरस्य आर्दायापि यः ( आ ) करपः क्रियते स भेद्यो भवति ॥ ३४ ॥

( रणप्रिय इति । ) रणप्रिय इति ( स ) त्यक्तात्मत्वात् भोगप्रियो भवति

विच्छिन्नधर्मकामार्थः क्रुद्धो मानी विमानितः ॥ ३५ ॥
भीतः स्वदोषवित्रस्तः कृतवैरोऽभिसान्त्वितः ।
अतुल्येन सहासक्तस्तुल्यमानान्निराकृतः ॥ ३६ ॥
अकारणनिरुद्धश्च कारणाच्च विशेषतः ।

---

नामर्थसाध्यत्वात्तदर्थं लुभ्यतीत्ययं लुब्धवर्गे । क्रुद्धस्तीक्ष्णः, योऽहङ्कारमपि न संहते, स मानिवर्गे । मानी च विमानितः क्रुद्धवर्गे ॥ ३५ ॥

भीतो राज्ञः प्रचण्डात् । स्वदोषवित्रस्तः आत्मदुश्चरितेन शङ्कितः कण्टकान् मर्दयिष्यामीति राजकार्यं दण्डं याचित्वा अन्यान् हतवान् । स स्वयं उपहतत्वाद्भीत इव तिष्ठति । कृतवैरः सान्त्वितः, स हि पूर्वकृतवैरात्नवोऽपकार-मुत्प्रेक्षमाणो भीत एवास्ते । एते त्रयोभीतवर्गे । अतुल्येन सहासक्तः नीचेन सह कर्मतु नियुक्तः स नीचेनोपहतत्वान्नष्टोत्कर्षमात्मानं मन्यमानो मानिवर्गे द्रष्टव्यः । तुल्यमानादन्यस्मात्समानजातयान्निराकृतः कृतहीनमानोराज्ञे कुप्यति विषमवृत्तोऽ-यमिति । अयं क्रुद्धवर्गे ॥ ३६ ॥

अकारणनिरुद्ध इति । शिल्पात्स्वामिना यो बद्धः कारणाच्च तद्दो-षाद्विषतोऽत्यन्तं निरुद्धः । स बन्धनपरिक्लिष्टस्तस्मै कुप्यति । एवमकारणा-

---

भोगसम्पादकधनलाभदर्शनेन भेद्यो भवति । साहसिक इति सहो बलं तेन चरतीति असावपि भोगप्रिय इति तथैव भेद्यः सम्भवति । आत्मसम्भावित इति आत्मान-मात्मनेव सम्भावयति विद्याशौर्यादिभिरन्यो मत्समानो नास्तीति भरणेनातुष्टो भेद्यो भवति । विच्छिन्नधर्मकामार्थः धर्मः अर्थः कामो वा विच्छिन्नो यस्य राज्ञा स तदुद्वेगाद भेद्यो भवतीति ।.........मानी विमानित इति मानोर्थयोग्यो विमा-नितः क्रियतेऽसौ भेद्यो भवति ॥ ३५ ॥

( भीत इति । ) भीत. स्वदोषवित्रस्तो भेद्यो भवति । कृतवैरोऽभिसा-न्त्वित इति ( पूर्वं ) कृतं वैरं विरोधो ( येन ) पश्चादभिसान्त्वितः कृतसख्यः स हि सामर्षशेषहृदयो भेद्यो भवति । अतुल्येन सह आदिष्टः कर्मणि नियुक्तः उद्वेजनाद् भेद्यो भवति । तुल्यमानान्निराकृत इति तुल्यमानान्निराकृतो भेद्य एव ॥ ३६ ॥

( अकारणादीति ) अकारणान्निरुद्धो दोषं विना कृतनिरोधः । कारणाच्च

अकारणात् परित्यक्तः पूजार्होऽप्रतिपूजितः ॥ ३७ ॥
हृतद्रव्यकलत्रश्च महाभोगाभिकाङ्क्षितः ।
परिक्षीणो बाहिर्बन्धुर्बहिर्द्रव्यो बहिष्कृतः ॥ ३८ ॥
इति भेद्याः समाख्याता भिन्द्यादेतान् परे स्थितान् ।

---

त्परित्यक्तो निर्वासितः । तदुभयं क्रुद्धवर्गे । पूजार्होऽप्रतिपूजितः, मानिवर्गे क्रुद्धवर्गे वा ॥ ३७ ॥

हृतद्रव्यकलत्र इति । गृहीतं तु बहुद्रव्यं यस्याल्पस्वच्छचेतसोऽत्यन्त स्वल्पया यात्रया पूर्वराशिमादातुकामो दत्तकृष्णावकाशो लुब्धवर्गे । प्रसभोद्भुक्तकलत्रश्च क्रुद्धवर्गे । महाभोगाभिकाङ्क्षितः भोगैर्नौसंतुष्टोऽभिवर्धमानो महाभोगस्याभिकाङ्क्षिता मानिवर्गे । परिक्षीणः परितो युग्याद्यपचयाद् दुर्भिक्षादेश्च कारणात् प्राप्तक्षयो लुभ्यन् लुब्धवर्गे । बहिर्बन्धुः प्रवासितबन्धुः " घातितोऽनेन मे बन्धुरिति । बहिर्द्रव्यो दापितसर्वस्वः । स सर्वस्वमाहारितत्वाच्छिन्नतृष्णाबीजः कुप्यति । तदुभयं क्रुद्धवर्गे । बहिष्कृतः पापेन कर्मणा । सोऽसत्कर्माभिख्यातो भीत एवास्ते किमयं करिष्यतीति । अयं भीतवर्गे ॥३८॥

भिन्द्यादेतान्परे स्थितान् मुण्डजटिलव्यञ्जनैः । तद्यथा——मदान्धो हस्ती मत्तेनाधिष्ठितो यद्यदासादयति तत्तत्प्रमृन्दाति, एवमयमशास्त्रचक्षुरन्धो राजा पौरजानपदानां वधायाभ्युत्थितः । शक्यमस्य प्रतिहन्तृप्रोत्साहनेनापकर्तुम् । अमर्षः क्रियतामिति क्रुद्धवर्गम् । यथा भीतः सर्पो यस्माद्भयं पश्यति, तत्र पुरा क्रोधविषमुत्सृजति । एवमयं राजा जातदोषाशङ्कस्त्वयि पुरा क्रोधविषमुत्सृजति । अन्यत्र गम्यतामिति भीतवर्गम् । यथा श्वगणिनां धेनुः श्वभ्यो

---

विशेषतः ( कृतनिरोधः ) भेद्यो भवति । अकारणात्परिक्त इति भाविनि भूते उपचारो द्रष्टव्यः । अन्यथा भिन्नस्य भेद्यत्वं न घटते । पूजार्होऽप्रतिपूजितो भेद्यो भवति ॥ ३७ ॥

( हृतद्रव्यकलत्र इति । ) हृतद्रव्यकलत्रश्चेति । महाभोगाभिकांक्षिते इति महाजीविकाकांक्षी च भेद्यः । परिक्षीणः निःसत्वो भेद्यो भवति । बहिर्बन्धुर्बहिर्द्रव्यः बहिष्कृतः इति त्रितयस्यापि बाहिर्भावात् भेद्या भवन्त्येते ॥ ३८ ॥

( इतीति । ) इत्येते भेद्याः समाख्याता आचार्यैः । भिन्द्यादेतान् परेयातव्ये स्थितान् । उपजापक्रियया आगतांश्च परकीयान् पूजयेत् ये यस्य कामारे

आगतान् पूजयेत् कामैर्निजांश्च प्रशमं नयेत् ॥ ३९ ॥
सममतृष्णानुसन्धानमत्युग्रभयदर्शनम् ।
प्रधानं दानमानञ्च भेदोपायाः प्रकीर्तिताः ॥ ४० ॥
भेदं कुर्वीत मतिमान् विगृहीतो बलीयसा ।

---

दुग्धेन ब्राह्मणेभ्यः, एवमयं राजा सत्त्वप्रज्ञावाक्यशक्तिसम्पन्नेभ्यो न दुग्धे न चात्मगुणसम्पन्नेभ्यः । असौ राजा पुरुषविशेषस्तत्रगम्यतामिति लुब्धवर्गम् । यथा चण्डालोदपानश्चण्डालानामेवोपभोग्यो नान्येषां एवमयं राजा नीचो नीचानामेवोपभोग्यः, न त्वद्विधानामार्याणाम् । असौ राजा पुरुषविशेषज्ञः तत्र गम्यतामिति मानिवर्गम् । कामैस्तदभिलषितैः निजान् आत्मीयान् ॥ ३९ ॥

जलवह्निन्यादिति लेशतो भेदस्योपाय उक्तः, तमेवस्पष्टमाह—समतृष्णानुसन्धानमिति, अस्यानुष्ठाने यथा मे लाभस्तथा तवापीति । अननुष्ठाने त्वमेव न भविष्यसीत्युग्रभयदर्शनम् । प्रधानमुत्कृष्टम् ॥ ४० ॥

भेदस्याख्यानकं दर्शयितुमाह—भेदमिति । शण्डामर्कौ सुन्दोपसुन्दौ सोदर्यौ

---

स्तैः पूजयेत् । निजांश्च भेद्यान् प्रशमं नयेत् क्रोधादीनामपनयनेन ॥ ३९ ॥

भेदोपायानभिधातुमाह—( सामेति । ) साम कृतलक्षणं, भेदोपायो भवति । प्रियं वदेऽनुरागो भवतीति । तृष्णानुसन्धानमिति । यस्य यत्राभिलाषस्तल्लाभाशाप्रदर्शनातृष्णा तस्या अनुसन्धानमविच्छेदो भेदोपायो भवति । अत्युग्रभयदर्शनमपि भेदोपाय इति । तथा च कौटिल्यः-" शङ्काजननमभिभर्त्सनं च भेद इति । प्रधानं दानं मागं चेति । भेदोपायानां मध्ये दानमाने प्रधानभूते । भेदोपायाः ( प्रकीर्तिताः ) । एभिरुपायैर्भेदः सम्पद्यत इति प्रतीतम् ॥ ४० ॥

भेदविषयमभिधातुमाह—( भेदमिति । ) मतिमान् विजिगीषुः । बलीयसा अत्युपचितशक्तिना विगृहीतो भेदं कुर्वीत । तथा च शण्डामर्कौ सुरैर्भित्वा विभिन्नौ कृत्वा बलवन्तौ पराजिता । तद्यथा—महर्षिपुत्रौ षण्डामर्काभिधानौ शुक्रशिष्यावौशनसे अर्थशास्त्रे परं प्राविण्यं गतौ । औपनिषदिकाग्निस्तम्भनमोहनमारणादिभिर्देवोपद्रवकारकौ तद्बलाद्दैत्यैः सर्वदा शक्रः स्थानभ्रष्टः क्रियते । ततश्च बृहस्पत्युपदेशादिन्द्रेण यज्ञांशदानाभ्यां भिन्नौ । तद्दानेनाद्यापि यज्ञे तं भागं ल-

शण्डामर्कौ सुरैर्भित्वा बलवन्तौ पराजितौ ॥ ४१ ॥
दण्डेन हि समाहन्याद् भित्त्वारेः संहतं बलम् ।
भिन्नं हि तत् काष्ठमिव घुणजग्धं विशीर्यते ॥ ४२ ॥
उत्साहदेशकालैस्तु संयुक्तः सुसहायवान् ।
युधिष्ठिर इवात्यर्थं दण्डेनास्तं नयेदरीन् ॥ ४३ ॥
आत्मनः शक्तिमुद्वीक्ष्य दण्डमप्यधिके नयेत् ।
एकाकी शक्तिसम्पन्नो रामः क्षत्रं पुरावधीत् ॥ ४४ ॥

---

सुरैर्भित्वा पराजितौ तिलोत्तमां प्रणिधाय ॥ ४१ ॥

दण्डप्रयोगं श्लोकत्रयेणाह—दण्डेनेत्यादि । समाहन्यादिति, अरिबलं भित्त्वा पश्चाच्चतुरङ्गेण बलेन प्रकाशवधं कुर्यादित्यर्थः ॥ ४२ ॥

अभित्त्वाप्यभ्युच्चितः प्रकाशं हन्यादित्याह—उत्साहेत्यादि । उत्साहो विक्रमबलम् । सुसहायवान् सामवायिकाभ्युच्चितः । युधिष्ठिरो हि भ्रातॄणां दिव्यास्त्रसंयोगादुत्साहशक्तिं समुद्वीक्ष्य देशकालौ सहायसम्पदश्च सप्ताक्षौहिणीसमवायी विग्रहेण सपत्नानवधीत् ॥ ४३ ॥

समवायिकाभावेऽप्येकाकी पराक्रमशक्त्याधिक्यमवेक्ष्य विगृह्णीयादित्याह—आत्मन इति । अधिकेऽपि जायस्यापि । रामः ( परशुरामः ) पितृवधामर्षितो निःशेषं क्षत्रमवधीत् ॥ ४४ ॥

---

भेते । ततश्च ताभ्यां परित्यक्ता दैत्याः शक्रेण सुखेनैव जिताः । इति भेदसामर्थ्यम् ॥ ४१ ॥

भेदस्य फलमभिधातुमाह-( दण्डेनेति । ) अरेः संहतं बलं भित्वा भेदापायैर्भिन्नं कृत्वा दण्डेन ( एव हि समा ) हन्यात् । किमर्थमित्याह भिन्नं सत् पश्चाद्धतं घुणजग्धं काष्ठमिव विशीर्यते खण्डशो भवतीति । ४२ ॥

दण्डप्रयोगकालमभिधातुमाह—( उत्साहेति । ) उत्साहः कृतलक्षणः । देशो युद्धयानयोरनुकूलः । कालस्तथैवानुकूलः । तैः संयुक्तः । सुसहायवान् वासुदेवादिसाहाययुक्तो युधिष्ठिर इव विजिगीषुर्भवेत् तदा दण्डेनास्तं नयेदरीन् नान्यथेति ॥ ४३ ॥

( आत्मन इति । ) शक्तिमुत्साहाभिधानामुद्वीक्ष्य निरूप्य दण्डमप्यधिके नयेत् । एकाकी प्रभुशक्तिरहितः उत्साहशक्तिसम्पन्नो रामः परशुरामः क्षत्रं क्षत्रियकुलं एकविंशतिधावधीत् ॥ ४४ ॥

अलसं विक्रमश्रान्तं विहतोपायचेष्टितम् ।
क्षयव्ययप्रवासैश्च श्रमेण विपरिद्रुतम् ॥ ४५ ॥
भीरुं मूर्खं स्त्रियं बालं धार्मिकं दुर्जनं पशुम् ।
मैत्रीप्रधानं कल्याणबुद्धिं सान्त्वेन साधयेत् ॥ ४६ ॥
लुब्धं क्षीणञ्च दानेन सत्कृत्य वशमानयेत् ।

---

सामादीन विषयभेदेनैकद्वित्रिचतुर्योगात्तद्भेदानष्टादशभिः श्लोकैराह— अलसमित्यादि । विक्रमेण श्रान्तं खिन्नम् । विहतोपायचेष्टितं, निष्फलसामादिप्रयोगम् । क्षयव्ययावुक्तलक्षणौ । विपरिद्रुतं—विक्षिप्तसैन्यम् ॥ ४५ ॥

मूर्खमशास्त्रचक्षुषं, बालमप्राप्तव्यवहारम् । दुर्जनमयुक्तकारिणम् । पशुं लोकव्यवहारबाह्यम् । मैत्रीप्रधानम् ; सख्यैकनिष्ठम् । कल्याणबुद्धिमविसंवादकम् ॥ ४६ ॥

लुब्धं क्षीणं चेति । ननु च परिक्षीणो लुब्धवर्गे पठितः । सत्यम् । लोभातिशयख्यापनार्थं पृथनिर्दिष्टः स इति । अन्योन्यशङ्कयाभिन्नानिति, परस्परशङ्काजननेन भिन्नान् संहतान् वशमानयेदिति सम्बन्धः ।

---

इदानीं विषयविभागेनोपायानां प्रयोगमभिधातुं सामप्रयोगविषयानेव तावदाह—( अलसमिति । ) अलसं निरुत्साहम् । विक्रमे श्रान्तं युद्धादिषु निर्विण्णम् । विहतोपायचेष्टितं—उपायाः सामादयः, चेष्टितं शरीर व्यापारः, तद्विहतं यस्य तम् । क्षयव्ययप्रवासैश्च सन्तप्तमिति प्रतीतम् । परिविद्रुतमिति सङ्ग्रामे दत्तभङ्गम् ॥ ४५ ॥

( भीतमिति । ) भीतं प्रतापादेव त्रस्तम् । मूर्खमविज्ञातनीतिशास्त्रम् । स्त्रियं बालमिति प्रतीतम् । धार्मिकं प्राणिहिंसाभीतम् । दुर्जनं दौष्ट्ययुक्तम् । पशुं पशुकल्पम् । मैत्रीप्रधानं स्वभावत एवाकृतवैरम् । कल्याणबुद्धिं सर्वत्राहितबुद्धिरहितम् । एतान् सर्वान् सान्त्वेन कृतलक्षणेन सामविशेषेण साधयेत्, विनोपक्षयं सुखसाध्यत्वात्तेषामिति ॥ ४६ ॥

दानसाध्यानभिधातुमाह—( लुब्धं क्षीणं च ) इति प्रतीतम् । भेदसाध्यान् दृष्टान् भिन्द्यात् कथमित्याह—अन्योन्यशङ्कया दुष्टान् दूष्यधर्मव्यवस्थितान् यातदृष्टान् भिन्द्यात् कथमित्याह—अन्योन्यशङ्कया दुष्टान् ... गूढप्रणिधिनान्योन्यं शङ्का समुत्पाद्यते । ततश्च विव्यकर्मण्यवास्थितान । गूढप्रणिधिनान्योन्यं शङ्का समुत्पाद्यते । ततश्च वि- श्लिष्य साध्या भवन्ति । तथा दण्डस्य वधादेर्दण्डनाद्दुष्टान् भिन्द्यात् । "एभ्यो

देवताप्रतिमास्तम्भसुषिरान्तर्गता नराः ।
पुमान् स्त्रीवस्त्रसंवीतो निशि चाद्भुतदर्शनः ॥ ५३ ॥
वेतालानां पिशाचानां देवानाञ्च सरूपता ।
इत्यादिमाया विज्ञेया मानुषी मानुषेश्वरैः ॥ ५४ ॥
कामतो रूपधारित्वं शस्त्राग्न्यश्माम्बुवर्षणम् ।

---

मायादीनां स्वरूपभेदं नवभिः श्लोकैराह—देवतेत्यादि । देवतायाः प्रतिमाः स्तम्बाश्चोत्कीर्णदेवतारूपाः अन्तः सुषिरास्तन्मध्यगतैर्नरैर्नित्यपूजया च सान्निध्य-ख्यापनार्थमुपलक्षिताः स्युः । ततो हि ते निर्गत्य शत्रुमुपगतं हन्युः । स्त्रीवस्त्र-संवीतः-स्त्रीवेषधारी शत्रुमतिसंधत्ते वा निशि चाद्भुतदर्शनः शत्रुविजयख्याप-नार्थम् ॥ ५३ ॥

तच्चाद्भुतं वेतालादीनां सरूपता ॥ ५४ ॥

कामतो रूपधारित्वं—इच्छया देहस्य रूपान्तरधारणम् । अमानुषीदिव्या

---

पूर्वसिद्धोपायचतुष्टयप्रयोगमभिधाय स्वयम्परिकल्पितोपायानभिधातुं मा-नुषीं मायामाह—( देवतेत्यादि ) देवताप्रतिमा काष्ठपाषाणादिनिर्मिता । स्तम्भः प्रासादादिषु । सुषिराणि कार्यार्थमेव कारितानि । तदन्तर्गता नरा मानुषी माया । तयाऽऽबलीयस्त्वाज्जिगीषुर्बलवन्तमभियोक्तारं हन्यात् । तथा च कौटिल्यः आब-लीयसाधिकरणेः—“ एवं गृहीतदुर्गो वा प्राश्यमारं चैत्यमुपस्थाप्य दैवतप्रतिमा-च्छिद्रं प्रविश्यासीत । गूढभित्तिं वा दैवतप्रतिमायुक्तं भूमिगृहम् । विस्मृते सुर-ङ्गया रात्रौ राजावासमनुप्रविश्य सुप्तममित्रं हन्यात् ” इत्यादि । कौ. अर्थ. १२ आधेः ५ आध्यायः। मानुषी माया अस्योपायस्य फलम् । तथा पुमान्स्त्रीवस्त्रसं-वीत इति । अन्तःपुरस्त्रीभिः सहस्त्रीवेषः प्रविश्य तथैव हन्यात् ॥ ५३ ॥

तथा निशि चाद्भुतदर्शन इत्याह—( वेतालेत्यादि ) वेतालोल्कापिशाचानां शिलातां च सरूपता दुर्गलम्भोपाय इति मानुषी माया मानुषेश्वरैर्नृपतिभिः ( विज्ञेया ) । परातिसन्धानार्थमिति वाक्यशेषः ॥ ५४ ॥

दैवीमपि मायामभिधातुमाह—( कामत इति । ) कामत इच्छातो रूपधा-रित्वं, यदेवेच्छति तदेव रूपं धत्त इति । तथा शस्त्रास्त्रवर्षणमग्निवर्षणमश्मवर्षणमम्बु-वर्षणं मन्त्रादिप्रभावात् । तमोऽन्धकारो वासरेऽपि । अनिलो वायुः । अचलः

तमोऽनिलोऽचलो मेघौ इति माया ह्यमानुषी ॥ ५५ ॥
जघान कीचकं भीम आश्रितः स्त्रीसरूपताम् ।
चिरं प्रच्छन्नरूपोऽभूद् दिव्यया मायया नलः ॥ ५६ ॥

---

माया ॥ ५५ ॥

द्वयस्य साफल्यमाह—जघानेति । कीचको द्रौपदीं जिहीर्षुर्गान्धर्वशालायां तत्कृतसंकेतोऽभिसृतवान्॰। पूर्वस्थितेन तत्र तद्वेषधारिणा भीमसेनेन हत इति प्रसिद्धमेव । प्रच्छन्नरूपो नल इति । स हि द्यूतेन हारितराज्यो वने भार्यां त्यक्त्वा कर्पटार्धसंवितः परिभ्रमन् दवाग्निपरीतेनाजागरेणाधाव मामापद्यस्व, अहञ्च ते प्रत्युपकारेष्यामीति प्रार्थितस्तं दवाग्नेर्मोचयित्वा तद्वचनेन स्वपदानि गणयन् प्रस्थितो दशमे पदे दशेति ब्रुवाण एव तेनादश्यत । तद्दष्टमात्रश्च सद्यो विकृताकृतिरप्रत्यभिज्ञेयो भुत्वा किमेतदिति पृष्टवान् । ततः सोऽजगरेण शुक्लमंशुकं दत्त्वोक्तः, एवं विकृतेनानेन रूपेण च्छन्नोऽप्रत्यभिज्ञायमानः कञ्चित्कालं चरित्वा यदा कलिप्रवेशान्मुक्तः स्वस्वमेव राज्यं प्रतिपद्य, शत्रुञ्च विजित्य सुखी भविष्यसीति । ततः स दिव्यमायया प्रच्छन्नरूपः ऋतुपर्णस्य राज्ञो गृहे सूदकर्मणा वसन् दमयन्त्या परिज्ञातः स्वयंवरव्याजात्सहर्तुपर्णेन विदर्भपुरमानीयमानो मध्ये मार्गे कलिना विमुक्तस्तया समेतस्तत्पित्रा विदर्भराजेन सह दमयन्त्या स्वमेव राज्यं प्रापितस्तत्रैव सुखं न्यवसदिति ॥ ५६ ॥

---

पर्वतः । मेघ इत्येषां च दर्शनमिति माया ह्यमानुषी दैवीत्यर्थः ॥ ५५ ॥

मायोपायं दर्शयन्नाह—( जघानेति ) अत्रेतिवृत्तम्:—परिवर्त्तितरूपा विराटगृहे पाण्डवा द्रौपदीसहिताः स्थिताः । सैरन्ध्रीरूपा द्रौपदी बलात्कीचकेनाभिलषिता । तया चोक्तम्—सङ्केतकशालायां त्वयागन्तव्यमिति । अस्मिन्नर्थे भीमाय कथिते भीमेन द्रौपदीवेषधारिणा कीचकभ्रातृशतमेकरात्रौ हतानीति मानुषी माया। चिरं प्रच्छन्नरूपोऽभूद्दिव्यया मायया नल इत्यत्रेतिवृत्तम्—नलो राजा पृथिवीं द्यूतेन हारयित्वा देवीं दमयन्तीं वने त्यक्त्वा कर्कोटकं वने दवाद्रक्षितवान् । तेन च तुष्टेन ष्ययनशुश्रुभयाद्रूप ? परिवृत्तौ क्षत्ता समतिविधानात् तयात्मानं रक्षित्वा भूयोऽपि राज्यमवाप्तवानिति दैवी माया ॥ ५६ ॥

अन्याये व्यसने युद्धे प्रवृत्तस्यानिवारणम् ।
इत्युपेक्षार्थकुशलैरुपेक्षा त्रिविधा मता ॥ ५७ ॥
अकार्ये सज्जमानस्तु विषयान्धीकृतेक्षणः ।
कीचकस्तु विराटेन हन्यतामित्युपेक्षितः ॥ ५८ ॥
संरब्धो भीमसेनेन स्वार्थविच्छेदभीतया ।

---

अन्यायेऽदण्डयनादौ । व्यसने मृगयादौ । युद्धे ज्यायसा सह ॥ ५७ ॥

कीचको विराटेनेति, स हि शौर्याद्राजवल्लभ्यादन्याये व्यसने च प्रवृत्तो भीमसेनेन हन्यतामिति मत्स्यराजेनोपेक्षितः । तथा च महाभारते श्लोकः " शौर्याद्धि वल्लभो राज्ञो महासत्त्वश्च कीचकः ॥ आसीत्प्रहर्ता च नृणां नामशेषः सुदुर्मतिः " इति ॥ ५८ ॥

स्वार्थविच्छेदभीतयेति । हिडिम्बस्य रक्षसो वनमुपगतेषु पाण्डवेषु तद्भगिनी हिडिम्बा भीमसेनं दृष्ट्वा दोलाव्यतिकरात्संजातरागा स्वयं पाणिं अग्राहयत् । तद्भ्राता च क्रुद्धो युयुत्सुर्भीमसेनेन हन्यतामित्यनयोपेक्षितो मा भूदनेन

---

उपेक्षाभिधानमुपायमभिधातुमाह–( अन्याय इत्यादि ) अन्याये चौर्यपरदारिकादौ शास्त्रनिषिद्धे । व्यसने द्यूतमृगयादौ । युद्धे वृथाकलहादौ । प्रवृत्तस्यानिवारणमित्येतदुपेक्षासु कुशलैराचार्यैरुपेक्षा त्रिविधा स्मृता । अन्याये प्रवृत्तोपेक्षा, व्यसने प्रवृत्तोपेक्षा, युद्धे प्रवृत्तोपेक्षेति त्रिविधेति ॥ ५७ ॥

उपेक्षोपायस्य फलं दर्शयन्नाह–( अकार्य इत्यादि ) अकार्ये पाण्डवानां प्रच्छन्नरूपाणां भार्याया द्रौपद्या ग्रहणे प्रवृत्तः कीचको हन्यतामिति विराटेनोपेक्षितो न्यषीदत्तथा–विराटगृहे प्रच्छन्नरूपाः पाण्डवा युधिष्ठिरादयः पुरोहितादयः स्थिताः । द्रौपद्यपि गन्धपेषिका सैरन्ध्री स्थिता कीचकेन बलाद्ग्रहीतुमारब्धा । तयाभिहितम्–सङ्गीतकशालायां निशि सम्पादयामीहितामीति । ततसमस्तं विदित्वापि विराट उपेक्षकः स्मृतः । तत. स्त्रीवेषेण वै भीमेन ते कीचकाः शतसङ्ख्याका रात्रावेव दग्धा यथा कोऽपि न जानातीति अन्यायोपेक्षेयमिति ॥ ५८ ॥

युद्धोपेक्षामभिधातुमाह–( संरब्ध इत्यादि ) हिडिम्बोऽमर्षाद्युद्धे प्रवृत्तो भीमसेनेन सह । स्वार्थविच्छेदाद् भीतया हिडिम्बया राक्षस्या भीमानुरक्तया, स्वार्थविच्छेदः कामसौख्यविच्छेदलक्षणस्तद्भीतया निजो भ्राता राक्षसो हन्यता-

हिडिम्बया निजो भ्राता हन्यतामित्युपेक्षितः ॥ ५९ ॥
मेघान्धकारवृष्ट्यग्निपर्वताद्भुतदर्शनम्।
दूरस्थानां च सैन्यानां दर्शनं ध्वजमालिनाम् ॥ ६० ॥
छिन्नपाटितभिन्नानां संस्रुतानां प्रदर्शनम्।
इतीन्द्रजालं द्विषतां भीत्यर्थमुपकल्पयेत् ॥ ६१ ॥
इत्युपायाः समाख्याता नाना नानार्थसाधकाः।
सामैतेषु हि सामज्ञो यथाकालं प्रयोजयेत् ॥ ६२ ॥

---

सम्प्रयोगविच्छेदो ममेति ॥ ५९ ॥

सैन्यानां—हस्त्यश्वरथपदातीनाम् ॥ ६० ॥

संस्रुतानां—क्षरद्रुधिराणाम्। एते त्रयः उपायाः सामादि चतुष्टय एवान्तर्भूताः। तत्र माया दण्डेऽन्तर्भूता। तस्य हि प्रकाशोपांशुत्वभेदेन द्वैविध्यात्। उपेक्षाऽपि दण्ड एव यस्माद्येषूपांशु प्रशस्यते तत्रोपेक्षा। तत्र च दण्डं स्वयं प्रवर्तयतोऽपरेण प्रवर्तनात्। इन्द्रजालमपि संहतबलस्य शत्रोर्भीत्यर्थं कल्पते। तच्च शङ्काजननाद्भेदे न्तर्भूतम् ॥ ६१ ॥

नाना—भिन्नस्वरूपाः। नानार्थसाधका इति, ततोऽलसादीनां साधकं साम, लुब्धस्य दानं, संहतबलस्य भेदः, दुष्टस्य दण्ड इति। एतेषु च सामदानयोरधिको व्यापार इत्याह सामेत्यादि। यथाकालमिति—दानकाले साम प्रयोजयेत्, दानमपि सामकाले भेदकाले च ॥ ६२ ॥

---

मित्युपेक्षितः साहिजीन( स हिडिम्ब ? ) इत्यर्थः। इयं युद्धोपेक्षा। तृतीयोपेक्षापि व्यसनविषया द्रष्टव्येति ॥ ५९ ॥

इन्द्रजालाख्यमुपायमभिधातुमाह—( मेघान्धकारेत्यादि ) प्रतीतम् ॥ ६० ॥ ६१ ॥

उपसंहरन्नाह—( इत्युपाया इत्यादि ) इत्युपाया समाख्याता इतिप्रकारा एवंप्रकारा अन्येऽप्युपाया भवन्ति। उपेयार्था यैः प्राप्यन्ते ते सर्वेऽप्युपायव्यपदेशं लभन्ते। उपेक्षामायेन्द्रजालानि तु कामन्दकिना गणितानि दृष्टत्वात्। यतो मायेन्द्रजालादिभिरेव राक्षसाः सुरैर्युध्यन्त इति महाभारते श्रूयते। नानाप्रकारा नाना उपाया अर्थसाधकाश्च। सामज्ञस्तु विजिगीषुरेतेषां मध्ये सामैव प्रयोजयेत् ॥ ६२ ॥

सामभेदौ तु कर्तव्यौ दानमानपुरस्सरौ ।
दानेन हि समायुक्तावेतावर्थ्यर्थसिद्धये ॥ ६३ ॥
दानरिक्तेन सर्वत्र साम्ना कृत्यं तृणेन वा ।
निर्दानं साम नायाति कलत्रेष्वपि संस्थितिम् ॥ ६४ ॥
इति ह्युपायान् निपुणं नयज्ञो विनिक्षिपेच्छत्रुबले निजे च ।
निरभ्युपायो नियतं प्रपातं विचेष्टमानोऽन्ध इवाभ्युपैति ॥ ६५ ॥
अवश्यमायान्ति वशं विपश्चितामुपायसन्दंशबलेन सम्पदः ।

---

यदाह–दानमानपुरस्सराविति ॥ ६३ ॥

कृत्यं–प्रयोजनम् । तृणेन वा–वा शब्दश्चार्थे, इवार्थे वा । तत्साध्यं तृणेनेव करणीयं, दानरिक्तस्य साम्नो लघुत्वात् ॥ ६४ ॥

प्रकरणार्थमुपसंहरति श्लोकद्वयेन—नयज्ञः—उपायप्रयोगज्ञः । निजे–आत्मीये बले । प्रपातं विनाशम् ॥ ६५ ॥

उपाय एव सन्दंशः, तेनाकृष्यमाणत्वात् , तद्बलेन– तत्सामर्थ्येन ।

---

( सामभेदावित्यादि ) सामभेदौ च कार्यवशात्प्रयोक्तव्यौसाधु दानपुरस्सरौ यस्माद्दानेन हि समायुक्तावेतावप्यर्थसिद्धये ॥ ६३ ॥

( दानरिक्तेनेत्यादि ) सर्वत्र दानरिक्तेन साम्ना कृत्यं तृणेन वा । यत्तृणस्य सामर्थ्यं करणीयं तद्दानरहितस्य साम्नोऽपि । असारत्वान्न कार्यसाधकमित्यर्थः । निर्दानं साम नायाति कलत्रेष्वपि संस्थितिम् । तेनावधीर्यते प्रलापित्वादिति ॥ ६४ ॥

उपायसामर्थ्यं दर्शयन्नाह—( इति ह्युपायानिति ) इत्युपायानभ्युपायान् मुख्यानुपायान् सामादीन् निपुणं यथा भवति तथा नयज्ञो नीतिशास्त्रज्ञो विनिक्षिपेत् प्रयुञ्ज्यात् शत्रुबले यातव्यसैन्ये निजे च सैन्ये, यो यस्योपायस्य साध्य इति निर्णयं कृत्वा । निरभ्युपाय इति उपायप्रयोगरहितो नियतं निश्चयेन प्रपातं राज्यभ्रंशादिकं विचेष्टमानो चेष्टां कुर्वाणोऽन्ध इवेति लोचनरहित इव अभ्युपति प्राप्नोति कूपादिषु पतनमिति ॥ ६५ ॥

( अभ्युपायः फलवानित्याह—अवश्यमित्यादि ) विपश्चितां नीतिपण्डितानाम् । सन्दंशोलोहकारोपकरणम् । तेन यथास्थितमपि सुवर्णादि बलादाकृष्य वशीक्रियते तथोपायसन्दंशबलेन सम्पदो विभूतय इति । भवत्युदारमुत्कृष्टं विधि

भवत्युदारं विधिवत् प्रयोजिते फलं हि राज्ञां क्वचिदर्थसिद्धये
॥ ६६ ॥

इत्युपायविकल्पो नाम सप्तविंशं प्रकरणम् ।
इति श्रीकामन्दकीये नीतिसारे अष्टादशः सर्गः ।

---

उदारं—महत् फलमिति सम्बन्धः । विधिवत्प्रयोजित उपाये—क्वचिदर्थसिद्धय इति सम्बन्धः ॥ ६६ ॥

इत्युपायविकल्प्यो सप्तविंशं प्रकरणम् ।
इति श्रीशङ्करार्यकृतायां कामन्दकीयनीतिसारपञ्जिकायां जयमङ्ग-
लायामुपायविकल्पो-नामाष्टादशः सर्गः ॥

---

वत् प्रयोजितं शास्त्रोक्तविधिना प्रयुक्तमुपायजातम् । फलं हि यस्माद्राज्ञां विजिगीषूणां क्वचिदेव विधिवशाद्यद्यत् फलं भवति ( तत् ? ) अर्थवृद्धये प्रवृत्तानाम् । ननु ( नतु ? ) सदा भवतीति भावः ॥ ६६ ॥

इत्युपायविकल्पो नाम सप्तविंशं प्रकरणम् ।
इति कामन्दकीयनीतिसारटीकायामुपाध्यायनिरपेक्षाया-
मुपायविकल्पो नामाष्टादशः सर्गः ।

## अथ एकोनविंशः सर्गः ।

### २८ अथ सैन्यबलाबलप्रकरणम् ।

सामादीनामुपायानां त्रयाणां विफले नये ।
विनयेन्नयसंम्पन्नो दण्डं दण्ड्येषु दण्डवित् ॥ १ ॥
देवानभ्यर्च्य विप्रांश्च प्रशस्तग्रहतारकाः ।

---

## अथ एकोनविंशः सर्गः ॥

### २८ सैन्यबलाबलप्रकरणम् ।

चतुरङ्ग बलं मुक्त्वा मन्त्रेण कोशेन च जयेदरीन् । तदसिद्धौ च दण्डं निक्षिपेदित्याह—सामादीनामित्यादि । विफले नये । प्रयोगो नयः । दण्डं दण्ड्येष्विति । तथाहि सामाद्यसाध्यत्वाद् दण्डार्होऽस्ति इति ॥ १ ॥

अत्र च चत्वारि प्रकरणानि, सैन्यबलाबलं, सेनापतिप्रचारः, प्रयाणे व्यसनरक्षणं, कूटयुद्धविकल्पाश्चेति । तत्र सैन्याधीनत्वाच्छत्रुबलवधस्य सैन्यबलाबलमुच्यते । बलाबलं च ( सन्नाहतः ? ) उपादानात्कालतश्च । तत्र सन्नाहतो नवभिः श्लोकैराह—देवानित्यादि । इष्टान् साङ्ग्रामिकांश्च देवानभ्यर्च्य विप्रांश्च

---

## अथ एकोनविंशः सर्गः ।

### २८ सैन्यबलाबलप्रकरणम् ।

उपायविकल्पानभिधाय चतुर्थोपायकालं तत्प्रयोजनं चाभिधातुमाह—( सामेति । ) सामादीनामुक्तलक्षणानां त्रयाणामुपायानां विफले निष्फले नये प्रणयने, उपायकार्यसिद्धौ विनयेद्विशेषेण प्रापयेत् नयं दण्डं नयशास्त्रोक्तं प्रापयेत् । दण्ड्येषु कृतदोषेषु परपक्षेषु यातव्यलक्षणोपेतेषु, क्रोधलोभादिना नेतरेष्विति । जितारिषड्वर्गो यातव्यलक्षणोपेते शत्रौ सुविज्ञाते च दोषे दोषानुरूपं यो दण्डं करोति असौ दण्डविदिति ॥ १ ॥

दण्ड्योऽत्र यातव्यलक्षणोऽरिः, तं प्रति दण्डप्रणयनं सङ्ग्रामाख्यमभिधातुं पूर्वं विधेयं तावदाह–( देवानिति । ) यातव्यलक्षणोपेते दण्ड्ये शत्रौ सङ्ग्रामेण दण्डं कर्तुकामो विजिगीषुर्देवा निष्टानभ्यर्च्य । अधिकृतानामि कात्यायनीप्रभृतीन् । विप्रांश्च यथोक्तलक्षणान् । प्रशस्ता ग्रहाः सूर्यादयः, तारका नक्षत्राणि अनुकूलानि, तथा चन्द्रबलं यथा तथा ताराबलमपि ग्राह्यम् । षड्विधं

षड्विधं तु बलं व्यूह्य द्विषतोऽभिमुखं व्रजेत् ॥ २ ॥
मौलं भृतं श्रेणि सुहृद्द्विषदाटविकं बलम् ।
पूर्वं पूर्वं गरीयस्तु बलानां व्यसनं तथा ॥ ३ ॥
सत्कारादनुरागाच्च सहसङ्कथनासनात् ।
नित्यं तद्भावभावित्वान्मौलं भृतबलाद् गुरु ॥ ४ ॥

---

दत्ताशिषो जयार्थम् । ग्रहाः आदित्यादयः । तारका नक्षत्राणि । बलं व्यूह्य–पूर्वं पूर्वं सन्नाह्य, तथाविधस्य बलीयस्त्वात् ॥ २ ॥

मौलमित्यादि । व्यसनं तथेति । मौलानां गरीयस्त्वात्तद्व्यसनमप्यमानित-विमानितादि गरीयः ॥ ३ ॥

सत्कारात्संमानात् । अनुरागाद्विजिगीषौ । विदिके विजिगीषुणा सह कार्यसङ्कथनात्सहासनाच्च सगन्धानाम् । नित्यग्रहणं प्रतिपदं योज्यम् । तद्भावभावित्वाच्च विजिगीषुणा सहैकार्थानर्थसम्बन्धात् । एते धर्मा भृतबलेन सन्ति ॥ ४ ॥

---

वक्ष्यमाणक्रमेण स्वं बलं पत्त्यादि व्यूह्य दण्डादिरचनया रचयित्वा, द्विषतो यात-व्यस्याभिमुखं व्रजेद्विजिगीषुरिति ॥ २ ॥

बलस्वरूपं गुरुलाघवं चाभिधातुमाह–( मौलमिति । ) मूले भवं, मूलभूत-पुरुषसम्बन्धादागतं वा मौलम् । भृतं भरणेनोपगृहीतम् । श्रेणि सङ्घधर्मेण व्यव-स्थितं कुविन्दपट्टिकाकारसमूह । सुहृद्बलं साहाय्यागतं मित्रबलम् । द्विषद्दलं दण्डोपादानं तु ( दण्डोपनतं ? ) शत्रुबलम् । आटविकं बलं स्वमण्डलाटवीभो-क्तृबलं साहाय्यागतमेव । पूर्वपूर्वमुद्दिष्टानां गरीयो गुणैरधिकं, बलानां मध्ये भृता न्मौलं, श्रेणिबलाद् भृतमिति सर्वत्र योज्यम् । व्यसनं तथा पूर्वस्मिन् जायमानं व्यसनं गुणप्रातिलोम्यादिकं च गरीय इति ॥ ३ ॥

एतदेव समर्थयन्नाह–( सत्कारादिति । ) पितृपैतामहसम्बन्धात् सत्कारा-र्हमित्यर्थः । अनुरागाच्च परिचयादनुरक्तं भवति । सह राज्ञा सङ्कथनासनं च, सर्वदालपनं समीपे चासनं, ततो निमित्तात् । नित्यं तद्भावभावित्वात् सहवृद्धिक्ष-यत्वादित्यर्थः । अतो मौलं भृतबलाद् गुणाधिकमित्यर्थः ॥ ४ ॥

सन्निकृष्टतया नित्यं क्षिप्रोत्थानतयापि च ।
वृत्तेश्च स्वाम्यधीनत्वाद् भृतं श्रेणिबलाद् गुरु ॥ ५ ॥
तुल्यसंघर्षणामर्षात् सुखलाभात् तथैव च ।
बलाज्जानपदत्वाच्च मैत्राच्छ्रेणिबलं गुरु ॥ ६ ॥
असंख्येयदेशकालत्वादेकार्थोपगमात्तथा ।
बलान्मेदनयोगाच्च शत्रोर्मित्रबलं गुरु ॥ ७ ॥
प्रकृत्याऽधार्मिका लुब्धा अनार्याः सत्यभेदिनः ।
तस्मादारण्यकतया तेभ्यः शत्रुबलं गुरु ॥ ८ ॥

---

सन्निकृष्टत । विजिगीषोरासन्नचारितया भृतबलम् । श्रेणिबलं तु व्यवहितचारि । क्षिप्रोत्थानं स्वाम्यादेशमात्रापेक्षित्वान्नेतरत् । परस्परापेक्षित्वात् । वृत्तिः स्वाम्यधीना, विजिगीषुणा तस्य भ्रियमाणत्वान्नेतरस्य आत्मधारित्वात् ॥ ५ ॥

तुल्यसङ्घर्षणामर्षादिति । स्वामिनास्य शत्रुषु तुल्यौ स्पर्धामर्षौ, तुल्यः सुखलाभः । बलान् मैत्रादिति सम्बन्धः । जानपदत्वाद्विजिगीषु देशे जातत्वात् । विपरीतं मित्रबलम् ॥ ६ ॥

असङ्ख्यदेशकालत्वादिति । एतावन्तं देशं यातव्यं, एतावन्तं च कालं स्थातव्यमिति परिमितदेशकालं शत्रुबलं, नैवं मित्रबलं, प्रबन्धस्त्रवत्वात् । एकार्थोपगमाद्विजिगीषुणा सहैककार्यप्रवर्तनात् । विपरीतमन्यत् । बलाच्छत्रोरिति सम्बन्धः । " बलान्मेदने " ति वा पाठः । मेदनं स्नेहः ॥ ७ ॥

लुब्धा आटविकाः । अनार्याः स्वयमार्या न भवन्ति, आर्याधिष्ठिता अपि न भवन्ति । आरण्यकतयेति । यस्मादाटविकानामेते दोषास्तस्मात्तेभ्यः शत्रुबलं गुरु तद्विपरीतत्वात् ॥ ८ ॥

---

( सन्निकृष्टतयेति ) ( तुल्यसङ्घर्षणामर्षादिति ) स्पष्टम् ॥ ५ ॥ ६ ॥
( सङ्ख्यातदेशकालत्वादिति ) इति प्रतीतम् ॥ ७ ॥
( प्रकृत्येत्यादि ) इति स्पष्टम् ॥ ८ ॥

उभयं तद्विलोपार्थं कालापेक्षं व्यवस्थितम् ।
दिलोपेऽव्यसने चैव तत्रास्य विजयो ध्रुवः ॥ ९ ॥
उपजापकृतात्तु स्याद् भयमस्माद्विशेषतः ।
परस्य चाप्युपजपेदुपजापाद्ध्रुवो जयः ॥ १० ॥
स्फीतसारानुरक्तेन मौलेनोपचितः परः ।
तत्तुल्येनैव यातव्यः क्षयव्ययसहिष्णुना ॥ ११ ॥

---

उभयमीति—अमित्रबलमाटविकबलञ्च । तदपरराष्ट्रं विलोपयिष्यामीति कालापेक्षया विलोपार्थं स्थितम् । तत्र विलोपे अव्यसने वा अस्य विजिगीषो शत्रोर्जयो ध्रुवः । अन्यथा ह्यविलोपे व्यसने च ताभ्यामरिभयं स्यात्परोपजापभयञ्च ॥ ९ ॥

तदाह—उपजापकृतादिति । परस्य चाप्युपजपेदिति तदुभयमपि ॥ १० ॥

उपादानकालतो बलाबलं त्रयोदशभिः श्लोकैराह—स्फीतेत्यादि । यदा प्रभूतसारानुरक्तमौलबलः प्रतियोद्धा, तदा तत्तुल्येनैव मौलबलेन यातव्यः । क्षयव्ययसहिष्णुनेति । यदा व्यायामेन योद्धव्यं, न मन्त्रेण, तदा क्षयसहिष्णुत्वान्मौलमेव कर्मण्यम् ॥ ११ ॥

---

( उभयमिति । ) उभयं शत्रुबलमाटविकं बलं च यातव्यविषयविलोपार्थं भवति । देशविलोपात् या व्यस( प्रभुशक्तिक्षय इति । यदि विजिगीषोः शक्ति मुचयकालं पश्यति तथा ( न्य ? )था नेति ( कालापेक्षाव्यवास्थितम् ) न केवलं विलोपार्थं विजयार्थमपि भवति । तद्यथा—विलोपे क्रियमाणे, व्यसने च शत्रोः । तत्रापीति पञ्चम्यर्थे सप्तमी । तस्मादप्यरिजयो ध्रुवस्तेनापि यातव्यः साध्यो भवतीत्यर्थः ॥ ९ ॥

( उपजापेत्यादि )......उपजापः ) तेन यज्जातं भयं तस्मात् त्रस्येत् सावधानो भवेद्विजिगीषुः । उपजापं विघटयेदित्यर्थः । आभ्यामिति द्विषदाटविकबलाभ्याम् । विशेषत इति यस्मात्ते सन्निहिते महतेऽप्युपकाराय प्रभवतः । यातव्यस्योपजपेद्द्विषदाटविकबले । तदुपजापाद् ध्रुवो विजयो विजिगीषो ॥ १० ॥

षड्विधेऽपिबले यद् यस्मिन् काल उपादेयं तद्दलोपादानकालमभिधातुमाह—( स्फीतसारानुरक्तेनेति )...मौलेनोपचितः परः । तत्तुल्येन परतुल्येनैव विजिगीषुणा, क्षयव्ययसहिष्णुना युग्यपुरुषापचयः क्षयः हिरण्यधान्यापचयो व्ययः तौ सहत इति ॥ ११ ॥

प्रकृष्टेऽध्वनि काले वा गच्छेन्मौलैः सुमानितैः ।
मौलास्तु दीर्घकालत्वात् क्षयव्ययसहिष्णवः ॥ १२ ॥

एषु वस्तुषु मेधावी भृतादीनि विवर्जयेत् ।
दीर्घाध्वकालखिन्नेषु तेषु भेदभयं भवेत् ॥ १३ ॥

बहुत्वादेवं सैन्यानां दीर्घकालाच्च खेदतः ।
नित्यप्रवासयानाभ्यां भेदोऽवश्यं हि जायते ॥ १४ ॥

प्रभूतं मे भृतबलं मौलमल्पमसारवत् ।

---

प्रकृष्टेऽध्वनि—दूरे यातव्ये काले दीर्घे प्रेषयितव्ये । गच्छेन्मौलैः क्षयव्ययसहत्वा त्तेषाम् । तत्सहत्वे कारणमाह——दीर्घकालत्वादिति, चिरन्तनत्वात् ॥ १२ ॥

भृतादीनि विवर्जयेत्कस्मादित्याह——दीर्घाध्वकालखिन्नेष्विति । भेदभयं भवेत्परस्मात् ॥ ३ ॥

तदेव स्फुटयन्नाह—बहुत्वादित्यादि । अन्यसैन्यकालिकोपादानात्तेषां भृतादीनां बहुत्वाद्भेदोऽवश्यं भावी । नित्यप्रवासो यातव्यं प्रति भूयो भूयो गमनम् । यानं शत्रुसम्बन्धि ॥ १४ ॥

मौलमल्पं तच्च मूलरक्षणेऽपर्याप्तं, असारवत् फल्गुप्रायमिति भृतबल मादध्यात् । अरेमल्पं विरक्तं वा । प्रभूतमपि प्रायोऽल्पसारवत्—असारबहुबलम् ।

---

( प्रकृष्टेऽध्वनीत्यादि ) इति स्पष्टम् ॥ १२ ॥

( वस्तुष्वेतेष्विति । ) ( एतेषु ) वस्तुषु कार्यादिषु मेधावी प्राज्ञः भृतादीनि बलानि पञ्चापि वर्जयेत् न समं नयेत् । कुत इत्याह——दीर्घाध्वकालखिन्नेषु—दीर्घेण अध्वना दीर्घेण च विग्रहकालेन खिन्नेषु श्रान्तेषु भेदभयं भवति यातव्यकृतोपजापेभ्यस्तेभ्यो भयं भवतीत्यर्थः ॥ १३ ॥

एतदेव समर्थयन्नाह—( बहुत्वादिति । ) यातव्यसैन्यानां प्राचुर्यात् स्वबलानां च भयं भवति । तथा दीर्घकालाध्वखेदतः । प्रतिदिनं प्रवासः प्रातिकूल्येन वासः तस्मात्, यानस्याश्वादेः प्रातिकूल्यात् नित्ययानात् ( च ) निर्विण्णानां बलानां अवश्यं भेदश्चित्तविश्लेषो जायते । ततश्च परगृहीतेभ्यस्तेभ्य एव भयं भवेदित्यर्थः ॥ १४ ॥

ततः स्व( भृत ) बलोपादानकालं चतुर्भिः श्लोकैः सेहेतुकमाह—( प्रभूत-

अरेरल्पं विरक्तं वा मौलं प्रायोऽल्पसारवत् ॥ १५ ॥
प्रायो मन्त्रेण योद्धव्यमल्पायासेन चैव हि।
अल्पः कालस्तु देशो वाऽप्रभूतौ च क्षयव्ययौ ॥ १६ ॥
शान्तोपजापविश्वस्तमस्मत्सैन्यं परस्य वा।
अल्पप्रसारो हन्तव्य इत्युपेयाद् भृतैर्बलैः ॥ १७ ॥
स्फीतं श्रेणिबलं शक्यमाधातुं यानवस्तुनोः।

---

तत्र किं मौलेन ॥ १५ ॥

मन्त्रेण—योगगूढोपजापादिना । अल्पायासेन—व्यायामेन । अल्पो देशो यातव्यः, कालो वाल्पः प्रोष्य व्यवसितव्यः । अप्रभुतौ स्वल्पौ । पूर्वस्मिन्पादेऽकारः प्रश्लिष्टो द्रष्टव्यः ॥ १६ ॥

शान्तोपजापविश्वस्तमिति, शान्तोपजापं विश्वस्तं वाऽस्मत्सैन्यं ? तत्र किं मौलेन । परस्य वाल्प इति सम्बन्धः । प्रसारश्चेष्टा ॥ १७ ॥

स्फीतं प्रभूतं श्रेणिबलं यानवस्तुनोः यात्रायाञ्च स्थानीये च बहुत्वाच्छ

---

मिति । ) भृतबलं वेतनोपगृहीतं प्रभूतं मे विद्यते । मौलं पितृपैतामहं संख्यातोऽल्पम् । तदप्यसारवत् साररहितम् । अरेयातव्यस्य मौलमल्पंतदपि विरक्तम् । प्रायो बाहुल्येनाल्पसारवत् स्तोकसारयुक्तम् ॥ १५ ॥

तथा—( प्राय इति । प्रायो बाहुल्येन । मन्त्रेणेति कूटयुद्धेन शस्त्ररसादिप्रणिधानेन लक्षणेन योद्धव्यं, न प्रकाशयुद्धेन । मन्त्रेणाल्पायासेन वेति अग्रेर्णयायादिति सम्बन्धः । अल्पो देशः प्रयाणस्य । कालश्चाल्पः प्रयाणस्य । अल्पौ तस्य च पौ क्षयव्ययौ ॥ १६ ॥

( श्रान्तेति । ) श्रान्तं तदुपजापविश्वस्तं च । श्रान्तं युद्धक्लेशादिभिः । उपजापेन विजिगीषुकृतेनात्मसात्कृतत्वाद्विश्वस्तम् । यस्मात्कारणात् सैन्यं परस्य तस्मात् भृतैर्बलैर्यायादिति सम्बन्धः । तथा अल्पप्रसारो हन्तव्य इति । "सर्वतो वनाऽऽजीवः प्रसार" इति प्रसारलक्षणम् । तृणकाष्ठघासफलाद्यर्थं सर्वतः प्रसरणं प्रसारः । स यातव्यस्य हन्तव्यः, सङ्कटप्रदेशावस्थितत्वात् । इति यायादिति । बलैर्वा तस्याल्पत्वात् ( इति । ) ॥ १७ ॥

( स्फीतमिति । ) प्रयाणकर्मणि ह्रास्वे श्रेणीबलोपादानकालमभिधातुमाह

ह्रस्वौ प्रवासव्यायामाविति श्रेण्या समुत्पतेत् ॥ १८ ॥
प्रभूतं हि सुहृत्सैन्यं शक्यमाधातुमात्मनि ।
अल्पः प्रवासो मन्त्राच्च भूयो व्यायामयोधनम् ॥ १९ ॥
मित्रसाधारणे कार्ये मित्रायत्ते फलोदये ।
अनुग्राह्ये च पीड्ये च मित्रेणैव सह व्रजेत् ॥ २० ॥
प्रभूतेनारिसैन्येन योधयेन्महतो रिपून् ।

---

क्यमाधातुम् । प्रवासो ह्रस्वः कार्यलाघवादासन्नदेशत्वाद्वा, व्यायामोऽपि योद्धुमल्पः प्रायो मन्त्रेण योद्धव्यमिति ॥ १८ ॥

शक्यमाधातुमात्मनि यानवस्तुनीत्येव । अल्पः प्रवासः पूर्ववत् । मन्त्राच्च भूयो व्यायामयोधनं मन्त्रयुद्धाद्भूयो व्यायामयुद्धम् ॥ १९ ॥

मित्रसाधारण इति । यथा शत्रोरुच्छेदनं कर्शनं वा विजिगीषोः—कार्यं, तथा मित्रस्याऽपि । मित्रायत्ते—मित्रसाध्ये कर्शनादौ । अनुग्राह्ये—यातव्यसिद्धौ तदर्धांशदानेन । पीड्ये समुपचितत्वात् । तेन सह व्रजेत् ॥ २० ॥

असुहृत्सैन्येन प्रभूतेनेति । यदि प्रभूतं शत्रुबलं, तदानेन योधयेत् । श्वसूकरवधापेक्षीति । श्वसूकरयोरिवारिबलयोः कलहे चण्डालस्येव मे योधकस्यान्यत-

---

प्रयासव्यायामाविति । प्रयासः ( प्रवास ) क्लेशः । व्यायामो युद्धम् । तौ ह्रस्वावेव । इति श्रेण्या समुत्पतेत् श्रेणिबलमुपादाय गच्छेदिति सम्बन्धः ॥ १८ ॥

सुहृदुपादानकालमभिधातुमाह-( सुप्रभूतमिति ) सुप्रभूतं सुहृत्सैन्यं, तच्च शक्यमाधातुं स्थापयितुमात्मनि आत्मकार्यसम्पादने निर्वैरं कर्तुं सामादिभिः, अल्पः प्रवासः सन्निहितत्वात् यातव्यस्य । युद्धं मन्त्रेणेति सम्बन्धयेत् । कूटयुद्धेन । कूटयुद्धं च तीक्ष्णरसदादिप्रयोगः । एवम्भूते काले सुहृद्बलैर्यायादिति वाक्यशेषः ॥ १९ ॥

( मित्रसाधारण इति ) मित्रस्यात्मनश्च साधारणं समानफलोदयं कार्यं यस्मिन् कार्ये । तथा मित्रायत्ते फलोदये तथानुग्राह्ये पीड्ये च मित्रान्तरे विजिगीषु ( मित्रेणैव सह व्रजेत् ) ॥ २० ॥

( द्विषद्बलोपादानकालमभिधातुमाह—प्रभूतेनेत्यादि ) अरिसैन्येन योधयेन्महतो रिपून् युद्धे नियोजयेत् । श्वसूकरवधापेक्षी यथा चण्डालः श्वसूकरवधं

श्वसूकरवधापेक्षी नयं चाण्डालवन्नयेत् ॥ २१ ॥
अत्यूर्जितं कोपभयादभ्याशे तु रिपोर्बलम् ।
वासयेत् कर्शयेच्चैव दुर्गकण्टकमर्दनैः ॥ २२ ॥
नित्यमाटाविकं सैन्यं दुर्गकण्टकशोधने ।
परदेशप्रवेशे च पुरस्कुर्वीत पण्डितः ॥ २३ ॥
एतन्मौलादिषड्भेदं चतुरङ्गं बलं विदुः ।
षडङ्गं मन्त्रकोशाभ्यां पदात्यश्वरथद्विपैः ॥ २४ ॥

---

विपत्तौ सिद्धिरिति नयमन्योन्ययोधनाख्यं प्रयुञ्जीत ॥ २१ ॥

कोपभयादिति । अभ्युच्छ्रितं हि शत्रुबलं बाह्यं कोपं जनयति । तस्मात्तद्भयान्नित्यमासन्नं वासयेत् । तत्राभ्यन्तरकोपशङ्का यदि स्याद्दुर्गकण्टकमर्दनैरिति । तत्र पथि दुर्गाणि यात्रोपघातकांश्च कण्टकान्मृन्दत्क्षीयते ॥ २२ ॥

दुर्गे मर्दनीये परदेशप्रवेशे चेति । यदि मार्गदेशिकं परभूमियोग्यं—च स्यात् ॥ २३ ॥

प्रतिबलतो बलाबलमभिधित्सुराह—एतदित्यादि । चतुरङ्गबलं विदुः पदात्यश्वरथद्विपैः । षडङ्गं केचिन्मन्त्रकोशाभ्यां, तयोरपि प्रथमं युध्यमानत्वात् ॥ २४ ॥

---

भक्ष्यत्वादपेक्षते तथा विजिगीषुर्यातव्य( सा ) शत्रोर्वधमपेक्षते साहाय्यागतदण्डोपनतशत्रोरपि वधमपेक्षत एव । अतश्च दृष्टान्तान्नयेदिति चण्डालवद्विजिगीषुर्नयेत् प्रापयेत् ॥ २१ ॥

( अभ्युत्थितमिति......यातव्यदुर्बकण्टकमर्दनैः । दूष्याटविकाख्यकण्टकमर्दने तन्मर्दनपेषणैः कृशं भवत्विति ॥ २२ ॥

आटविकबलोपादानकालमभिधातुमाह—( नित्यमित्यादि ) आटविकं सैन्यमीति सर्वदा दुर्गे यातव्यसम्बन्धिनि । कण्टकशोधने दुष्याटविकादिकण्टकमर्दने । परदेशप्रवेशे च यातव्यजनपदप्रवेशे । पुरोऽग्रतः कुर्वीत पण्डितो विजिगीषुः । पार्ष्णिहत्यं चात्र मरणात्मकभावस्य गोपनमिति ॥ २३ ॥

उपसंहरन्नाह—( एतन्मौलादीति ) इत्युक्तेन प्रकारेण मौलादिषड्भेदं षट्प्रकारं चतुरङ्गबलं स्मृतम् । पदात्यश्वरथद्विपैरङ्गैः । एतदेव षडङ्गं भवति मन्त्राङ्गेन कोशाङ्गेन च सह । कथं मन्त्रकोशयोरङ्गत्वमिति चेत् , यथा चाङ्गैः ( चतुर्भिः ) शत्रवः क्षयं नीयन्ते तथा मन्त्रेण कोशेन चेति ॥ २४ ॥

इति षड्विधमेतद्धि यथायोगं बलं बली ।
सुनिश्छिद्रं प्रतिव्यूह्य यायात् परबलं प्रति ॥ २५ ॥
योगमस्य विजानीयात् सर्वं यन्त्रादिना नृपः ।
कृताकृतं प्रचारञ्च साधु सेनापते स्तथा ॥ २६ ॥

इति सैन्यबलाबलमष्टाविंशं प्रकरणम् ।

———

यथायोगमिति । एवम्बलः परस्तस्यैतत्प्रतिबलमिति. यथायोगं प्रतिव्यूह्य । सुनिश्छिद्रं बलं व्यसनाभावात् ॥ २५ ॥

बलस्य प्रतिव्यूहनयोगः सर्वो यन्त्रादिना ज्ञेय इत्याह——योगमस्येति । तथा चोक्तम् " हस्ति यन्त्र शकटगर्भकुन्त प्रास हाटक वेणुशल्यबद्धस्तिबलस्य प्रतिबलं तदेव पाषाणलगुडावरणशल्याङ्कुश कचग्रहणीप्रायं रथबलस्य । तदेवाश्वानां प्रतिबलं, वर्मिणो वा हस्तिनोऽश्वा वा वर्मिणः कवचिनो रथा आवरणिनः पत्तयश्चतुरङ्गस्य प्रतिबल " मिति । ( कौ० अ० ९–२–१३७ ) कृताकृतं——किमस्मिन्साङ्ग्रामिकमुपकरणं सम्पन्नं न वेति सम्यग्विजानीयात् । प्रचारश्च सेनापतेर्येन विज्ञातेन सैनापत्ये नियोजयेत् ॥ २६ ॥

इति सैन्यबलाबलं नामाष्टाविंशं प्रकरणम् ।

———

( इतीत्यादि ) इत्युक्तक्रमेण षड्विधं बलमपि । एतदनन्तरोक्तम् । हि स्फुटम् । यथायोगमिति यस्य बलस्य येन बलेन सहयोगो युज्यते कर्तुं शीलबल सम्पन्नम् । सुनिश्छिद्रमिति—छिद्रं रन्ध्रं येन परस्यावकाशो भवति तन्निर्गतं यस्मात्तत् । प्रतिव्यूह्येति परराचितव्यूहस्य प्रत्यनीकभूतं व्यूहं विरचय्य यायात्परबलं प्रतीति ॥ २५ ॥

( योगमस्येत्यादि ) अस्यानन्तरोक्तस्य षड्विधस्य योगं सम्बन्धं स्वकीयैः परकीयैर्वा सह सर्वमशेषं विजानीयात् विजिगीषुर्मन्त्रादिना गूढपुरुषप्रणिधानात नृपो राजा । तथा कृताकृतमिति प्रतीतम् । स्वामी कृतमकृतं वा प्रचारं च, कः क्व प्रचरतीति गत्यागतादिकं तच्च विजानीयात् । साधु यथा भवति तथा सेनापतेरपीति—सकलबलसमुदायः सेना तस्याः पतिस्तस्य कृताकृतप्रचारादिकं विजानीयादिति सम्बन्धः ॥ २६ ॥

इति सैन्यबलाबलमष्टाविंशं प्रकरणम् ।

## २९ अथ सेनापतिप्रचारप्रकरणम्।

कुलोद्गतं जानपदं मन्त्रज्ञं मन्त्रिसम्मतम्।
दण्डनीतेः प्रयोक्तारमध्येतारं च तत्त्वतः ॥ २७ ॥
सत्यसत्त्वक्षमास्थैर्यमाधुर्यार्यगुणान्वितम्।
प्रभावोत्साहसम्पन्नमाजीव्यमनुजीविनाम् ॥ २८ ॥

---

## २९ सेनापतिप्रचारप्रकरणम्।

सैन्यस्य सेनापत्त्यायत्तत्प्रचार उच्यतेऽष्टादशभिः श्लोकैः कुलोद्गतमित्यादि। एवँल्लक्षणोपेतं कुर्वीत ध्वजिनीपतिमिति वक्ष्यमाणेन सम्बन्धः। अत्र लक्षणाद्द्वारेणैतत्प्रचारो विज्ञेयः। कुलोद्गतो न व्यभिचरति। जानपदस्तत्रत्यत्वाद्विश्वास्यः। मन्त्रज्ञो निर्णयकौशलात्कृच्छ्रेषु प्रसाधनार्हः। मन्त्रिसम्मतः मन्त्रिभिः सह सम्भूय कार्यानुष्ठानसमर्थः। प्रयोक्ता तत्त्वतो दण्डेषु, तस्य स्वामिप्रकृतित्वात्। तथा हि "राजा युवराजः सेनापतिश्च स्वामिप्रकृतयः"। अध्येता वक्ता ॥ २७ ॥

क्षमा आक्रोशादितितिक्षा क्वचित्कार्यकालापेक्षया, स्थैर्यं कर्मसु माधुप्रियवादिता। सत्यादय एवार्य गुणाः। यत्तु "कुलं शीलं दया दानं धर्मः सत्यं कृतज्ञता अद्रोह" इति (१८-४९) प्रागुक्तास्तेषामत्रैवान्तर्भूतत्वान्न तद्ग्रहणम्। प्रभावोत्साहसम्पन्नमिति। शौर्याद्युत्साहगुणयुक्तोऽपि कश्चिदप्रतापः, प्रतापवत्त्वे सत्यप्यकृतोत्साहश्चाभिभूयते। उभयगुणस्तु सदैवाप्रधृष्यो भवति। अतश्च सह निर्देशः। तयोरप्युत्साहस्यैव प्रधानत्वमितरस्य तज्जन्यत्वात्। एवञ्च मत्वा तद्गुणानत्रैव निर्देक्ष्यति। आजीव्यं, जीवनादिदानेन ॥ २८ ॥

---

## २९ सेनापतिप्रचारप्रकरणम्।

सेनाया लक्षणमभिधाय सेनापतेरपि सप्तदशश्लोकपरिकल्पितकुलकेन लक्षणमभिधातुमाह—(कुलोद्गतमित्यादि) कुलोद्गतमुभयकुलविशुद्धान्वयोत्पन्नम्। जानपदं स्वजनपदभवम्। मन्त्रज्ञं पञ्चाङ्गमन्त्राभिज्ञम्। मन्त्रिसम्मतमिति मन्त्रिणामभिमतम्, स्वाभिहितत्वाम्। दण्डनीतेः शास्त्रस्य प्रयोक्तारमध्येतारं च साधु यथा भवति तथा (तत्वतः) ॥ २७ ॥

(सत्त्वेत्यादि) इति प्रतीतम् ॥ २८ ॥

मित्रवन्तमुदाराढ्यं बहुस्वजनबान्धवम् ।
व्यवहारिणमक्षुद्रं पौरप्रकृतिसम्मतम् ॥ २९ ॥
नित्याकारणवैराणामकर्तारमनाविलम् ।
शुभानुबन्धिकर्माणमल्पामित्रं बहुश्रुतम् ॥ ३० ॥
अरोगं व्यायतं शूरं त्यागिनं कालवेदिनम् ।
कल्याणाकृतिसम्पन्नं सत्संभाव्यपराक्रमम् ॥ ३१ ॥
गजाश्वरथचर्यासु शिक्षितं सुजितश्रमम् ।

---

मित्रवन्तं बहुमित्रत्वात्परस्यानुच्छेद्यं, तत्र बहुस्वजनबान्धवं--बहुस्वजन, बान्धवत्वाद्दत्तबलम् । तत्र बाह्येन सम्बद्धः स्वजनः । आभ्यन्तरेण बान्धवः । उदाराढ्यं--महत्त्वादेवाढ्यम् । व्यवहारिणं- ऋणदानादिव्यवहारशीलं धर्मस्थबन्धुम् । अक्षुद्रमविग्रहशीलं सत्संग्रहशीलञ्च । पौरप्रकृति सम्मतं--उपलक्षणमेतत्। जनपदप्रकृतेश्च सन्मतमनुद्वेजनात् ॥ २९ ॥

नित्यवैरं--यन्निष्फलमानुबन्धिकं, अकारणवैरं निर्हेतुकम् । अनाविलत्वमपैशुन्यम् । त्रितयमपि प्रकृतीरनुञ्जयति । शुभानुबन्धिकर्माणमिति- कल्याणोदयं हि कर्मारभमाणः स्वपरेषां पूज्यः । अल्पामित्रमनुच्छेद्यम् । बहुश्रुतं--बह्वागमं, स हि कृच्छ्रेषु नावसीदति ॥ ३० ॥

अरोगं कर्मण्यम् । व्यायतं महाकायम् । स हि दृष्टमात्र एवाभिभवति । शूरमित्युत्साहगुणः । त्यागिनं सर्वाभिगम्यम् । कालवेदिनं स हि कार्यं न हापयति । कल्याणाकृतिसम्पन्नं दर्शनीयत्वाल्लोकप्रियम् । सत्संभाव्यपराक्रमं- प्रकृष्टविक्रमैकदर्शनादन्योऽप्यसाधारणः संभाव्येत यस्य ॥ ३ ॥

चर्या -हस्त्यादिभिर्गमनम् । तत्र शिक्षितं कृताभ्यासम् । सुजितश्रमं—

---

( मित्रवन्तमित्यादि ) इत्यपि प्रतीतम् ॥ २९ ॥

( नित्याकारणवैराणामकर्तारमित्यादि ) अत्रानाविलमित्यस्तब्धम् । शेषं प्रतीतम् ॥ ३० ॥

( अरोगमित्यादि ) व्यायतमिति प्रांशुम् । शेषं प्रतीतम् ॥ ३१ ॥

( गजाश्वरथचर्यासु शिक्षितमित्यादि ) नियुद्धं मल्लयुद्धम् । शेषं प्रतीतम् ।

खड्गयुद्धे नियुद्धे च शीघ्रचङ्क्रमणक्षमम् ॥ ३२ ॥
युद्धभूमिविभागज्ञं सिंहवद् दृढविक्रमम् ।
अदीर्घसूत्रं निस्तन्द्रममर्षणमनुद्धतम् ॥ ३३ ॥
हस्त्यश्वरथशस्त्राणां सम्यग् लक्षणवेदिनम् ।
नरान्तरविवेकज्ञं कृतज्ञमनुकम्पकम् ॥ ३४ ॥
वर्मकर्मसमायोगे कुशलं कुशलानुगम् ।
सर्वयुद्धक्रियोपेतं शक्तं तत्परिकर्मणि ॥ ३५ ॥
स्वभावचित्तज्ञतया युक्तमश्वनृदान्तिनाम् ।

---

कर्मस्वपरिभग्नम् । नियुद्धं--मल्लयुद्धम् । शीघ्रचङ्क्रमणक्षमं विद्युद्वल्लघुपरिक्रमण-योग्यम् ॥ ३२ ॥

युद्धभूमयो हस्त्यादीनाम् । ताः स्वयमेव वक्ष्यति । दृढविक्रममिति, शौर्यातिसिद्धेऽपि पराक्रमे कस्यचिदस्थिरत्वादिति विक्रमो विशेष्यते । अदीर्घ-सूत्रं निस्तद्रं --क्षिप्रकारिणमनलसञ्च । अमर्षणं -परिभवासहिष्णुम् । एते नय उत्साहगुणाः । अनुद्धतवेषधारिणं- सतामभिगम्यम् ॥ ३३ ॥

लक्षणवेदिनं--शुभाशुभानां हस्त्यादीनां प्राप्तिपरिहारार्थम् । नरान्तरवि-वेकज्ञं--सत्यशौचशौर्यप्रज्ञादिभिः । कृतज्ञमनुकम्पकमिति । कृतज्ञत्वान्मुख्यपुरुषाणा-मभिगम्यम् ॥ ३४ ॥

वर्मकर्म--सन्नहनकर्म. तत्समायोगे युद्धोपाये कुशलम् । तत्कुशलैश्चानुग-तम् । सर्वयुद्धक्रियोपेतं--सर्वैरङ्गैरायुधैश्च योद्धुमभिज्ञम् । शक्तं--युद्धपरिकर्मणि व्यूहचरनादौ ॥ ३५ ॥

स्वभावचित्तज्ञतया युक्तं- तदनुरूपप्रतिपत्त्यर्थम् । तत्राश्वादीनां सहजे

---

॥ ३२ ॥

( युद्धभूमिविभागज्ञमित्यादि ) निस्तन्द्रमनालस्यम् । शेषं प्रतीतम् ॥३३॥

( हस्त्यश्वरथशस्त्राणामित्यादि ) इति प्रतीतम् ॥ ३४ ॥

( वर्मकर्मसमायोगकुशलमिति । धर्मेण समायोगः सम्बन्धो येषां कर्मणां तत्र कुशलम् । शेषं प्रतीतम् ॥ ३५ ॥

( स्वभावचित्तज्ञतयेत्यादि )......तद्विधानं हस्त्यश्वादीनां वंदेनञ्छंदनि-

तन्नाम्नां चापि वेत्तारं तद्विधानोपपादकम् ॥ ३६ ॥
देशभाषास्वभावज्ञं लिपिज्ञं सुदृढस्मृतिम् ।
निशाप्रचारकुशलं शकुनज्ञाननिश्चितम् ॥ ३७ ॥
उदयास्तमयज्ञञ्च नक्षत्राणां ग्रहैः सह ।
दिग्देशमार्गविज्ञानसम्पन्नं तज्ज्ञसेवितम् ॥ ३८ ॥
क्षुत्पिपासाक्लमत्रासशीतवातोष्णवृष्टिभिः ।
अनाहितभयक्लान्तिं तत्संविग्नाभयप्रदम् ॥ ३९ ॥
हन्तारं परसैन्यानां दुःसाधाहितनिश्चयम् ।
भग्नानाञ्च स्वसैन्यानां सम्यग्विष्टम्भनक्षमम् ॥ ४० ॥

धर्मः स्वभावः आकस्मिकश्चाभिप्रायश्चित्तम् । तन्नाम्नां वेत्तारं यथाकार्यं व्यवहारार्थम् । विधानं पोषणविधिः ॥ ३६ ॥

देशभाषास्वभावज्ञमिति । तत्र देशभाषाज्ञानं व्यवहारार्थम् । देशस्वभावज्ञानञ्च तद्देश्योपचारप्रतिपत्त्यर्थम् । लिपिज्ञं पत्रसम्प्रेषणमन्त्रणाद्यर्थम् । सुदृढस्मृतिं–स हि सम्प्रधारितं कार्यं न हापयति । निशाप्रचारः सौप्तिकादिव्यापारः। शकुनज्ञानं भविष्यच्छुभाशुभपरिज्ञानफलम् ॥ ३७ ॥

उदयास्तमयज्ञं चेति । ग्रहनक्षत्राणामुदयास्तमयौ शुभाशुभसूचकौ जानाति । दिग्देशमार्गविज्ञानसम्पन्नामिति । रात्रौ वन दुर्गादिषु दिङ्मूढं सैन्यं बोधयति । एवं देशमार्गयोश्च विज्ञानाददृष्टदेशमार्गम् । तज्ज्ञैर्दिगाद्यभिज्ञैः सेवितम् ॥ ३८ ॥

अनाहितभयक्लान्तिं–क्षुदादिभिरनुत्पादितं भयं ग्लानिश्च । तत्क्लेशसहत्वात्कर्मण्यम् । तत्संविग्नाः–क्षुदादिपीडिताः सैनिकाः, तेषामाश्वासयितारम् ॥ ३९ ॥

हन्तारं प्रयोगकौशलं दर्शयति । अन्यथा हि शूरमित्यनेनैवावगतत्वात् । दुःसाधासहित निश्चयम्––स्थिरप्रतिज्ञम् । विष्टम्भनक्षमं स्तम्भनसमर्थम् ॥ ४० ॥

कादि ( वादनचोदनिकादि ? ) तदुपपादकम् । शेषं प्रतीतम् ॥ ३६ ॥

( देशभाषास्वभावज्ञमिति ) ( उदयास्तमयज्ञानामिति ) ( क्षुत्पिपासेत्यादि ) ( भेत्तारं परसैन्यानामिति ) इति प्रतीतम् ॥ ३७, ३८, ३९, ४० ॥

अवस्कन्दाभिमन्तारं वेत्तारं सैन्यकर्मणाम्।
परदूतप्रचारज्ञं महारम्भफलोपगम्॥ ४१॥
शश्वत्संसिद्धकर्माणं सिद्धकर्मनिषेवितम्।
पराभवेष्वनिर्विण्णं श्रीमद्राजा तत्परम्॥ ४२॥
इत्यादिलक्षणोपेतं कुर्वीत ध्वजिनीपतिम्।
ध्वजिनीं तु सदोद्युक्तः स गोपायेद् दिवानिशम्॥ ४३॥
नद्यद्रिवनदुर्गेषु यत्र यत्र भयं भवेत्।
सेनापतिस्तत्र तत्र गच्छेद् व्यूहीकृतैर्बलैः॥ ४४॥
इति सेनापतिप्र .ारा नामैकोनत्रिंशं प्रकरणम्।

---

अवस्कन्दाः परेणोपरुद्धाः तेषामनुबलाधानेन मन्तारम्। सैन्य कर्मणां वेत्तारं हस्त्यश्वरथपत्तिकर्मविदम्। परदूतप्रचारज्ञं यथोक्तेन प्रकारद्वयेन। महारम्भफलोपगं—महारम्भफलं साधयितुमुपगन्तारं नान्यत्॥ ४१॥

शश्वत्संसिद्धकर्माणं, यद्यदारभते कर्म, तत्तदस्य सर्वदा सिध्यतीत्यर्थः। सिद्धकर्मभिश्च निषेवितम्। पराभवेष्वनिर्विण्णं, शत्रुकृतेष्वभग्नोत्साहम्। श्रीमद्राजार्थतत्परं—प्रकृष्टे राजकार्ये सावधानम्॥ ४२॥

ध्वजिनीं सेनामुक्तलक्षणाम्। गोपायेद्रक्षेत्तन्नियुक्तत्वात्॥ ४३॥

नद्यद्रिवनदुर्गेष्विति। दुर्गशब्दः प्रत्येकं योज्यः। भयं सामन्ताटविकादिभ्यः। व्यूहीकृतैः सन्नद्धैः॥ ४४॥

इति सेनापतिप्रचारो नामैकोनत्रिंशं प्रकरणम्।

---

( अवस्कन्दाभिगोप्तारमित्यादि ) अवस्कन्दः सौप्तिकादिकः, तत्र गोप्तारं रक्षकम्॥ ४१॥

( शश्वत्संसिद्धकर्माणमिति ) ( इत्येवं लक्षणोपेतमित्यादि )॥ ४२, ४३॥

( नद्यद्रिवनदुर्गेषु यत्र यत्रेत्यादि ) व्यूहीकृतैर्बलैः—व्यूहरचितैर्बलैः। शेषं प्रतीतम्॥ ४४॥

इति सेनापतिप्रचारो नामैकोनत्रिंशं प्रकरणम्॥

### ३० अथप्रयाणव्यसनरक्षणप्रकरणम् ।

नायकः पुरतो यायात् प्रवीरपुरुषावृतः ।
मध्ये कलत्रं स्वामी च कोशः फल्गु च यद् बलम् ॥४५॥
पार्श्वयोरुभयोरश्वा अश्वानां पार्श्वयो रथाः ।
रथानां पार्श्वयोर्नागा नागानां चाटवीबलम् ॥ ४६ ॥
पश्चात्सेनापतिः सर्वं पुरस्कृत्य कृती स्वयम् ।
यायात् सन्नद्धसैन्यौघः खिन्नानाश्वासयञ्छनैः ॥ ४७ ॥

---

### ३० प्रयाण व्यसन रक्षण प्रकरणम् ।

व्यूहीकृतैर्यातव्यमित्युक्तं, तत्कथं व्यूह्य यायात् ? गच्छंश्च केषु व्यसनेषु पराभियोगाद्रक्षेदिति प्रयाणव्यसनरक्षणमुच्यते नवाभिः श्लोकैः । तत्र प्रयाणमाधिकृत्याह—नायक इत्यादि । नायको बलाध्यक्षः । पुरतो यायाद्रक्षन् मार्गावासयोश्च सम्पादनार्थम् । कलत्रमन्तःपुरम् । स्वामी विजिगीषुः । फल्गु बलं विष्टयादिकम् ॥ ४५ ॥

पार्श्वयोरुभयोः स्वामिन इत्यर्थः । अटवीबलं तात्स्थ्यादाटविकम् ॥ ४६ ॥

पश्चात्स्वामिनो गच्छतः । सर्वं सैन्यम् । खिन्नानां सैनिकानामाश्वासनकरणस्वभावः ॥ ४७ ॥

---

### ३० प्रयाणव्यसनरक्षणप्रकरणम् ।

स्कन्धावारप्रयाणमभिधातुमाह—( नायक इत्यादि ) नायक इति जातावेकवचनम् । सहस्रबलनेता नायकः स प्रवीरपुरुषावृतः पुरतोऽग्रतो यायात् । मध्ये स्कन्धावारस्य कलत्रमन्तःपुरादिससकलपुत्रदारं, स्वामी च विजिगीषुः । कोशः समुदयः । फल्गु च यद्दलमसारं च यद्दलं तच्च मध्ये यायादिति ॥ ४५ ॥

( पार्श्वयोरित्यादि ) ( पश्चात्सेनापतिरित्यादि ) इति प्रतीतम् ॥ ४६ ॥ ४७ ॥

यायाद् व्यूहेन महता मकरेण पुरोभये।
श्येनेनोद्धृतपक्षेण सूच्या वा वीरवक्त्रया ॥ ४८ ॥
पश्चाद्भये तु शकटं पार्श्वयोर्वज्रसंज्ञितम्।
सर्वतः सर्वतोभद्रं भये व्यूहं प्रकल्पयेत् ॥ ४९ ॥
कन्दरे शैलगहने निम्नगावनसंकटे।
दीर्घाध्वनि परिश्रान्तं क्षुत्पिपासाहितक्लमम् ॥ ५० ॥

---

पुरो भय इति। पुरस्तात्परोऽभिहनिष्यतीति भयमुत्प्रेक्ष्य मकरव्यूहेन यायात्। स हि विस्तीर्णमुखत्वादशेषं बलं रक्षति। श्येनेनोद्धृतपक्षेण, विस्तृतपक्षेण, यदा तिर्यग्भागे भयमुत्प्रेक्षेत। सूच्या वा पीरवक्त्रया, मुखनिवेशितशूरयोधया, यद्येकायनमार्गे पुरोभयमाशङ्केत ॥ ४८ ॥

पश्चाद्भये शकटं, तस्य पश्चाद्विस्तीर्णमुखत्वात्। पार्श्वयोरुभयोर्वज्रसंज्ञितं तदुभयतो विस्तीर्णमुखम्। सर्वतो भये सर्वतो भद्रं, तस्य सर्वतो मुखत्वात् ॥ ४९ ॥

व्यसनरक्षणमाधिकृत्याह—कन्दर इत्यादिष्ववतरणारोहणोत्तरणादि व्यासक्तम् ॥ ५० ॥

---

प्रयाणप्रयोगमभिधातुमाह—( यायादित्यादि ) महता मकरव्यूहेन वक्ष्यमाणलक्षणेन पुरो भये यायात्। श्येनेन व्यूहेनोद्धृतपक्षेण बलवत्पक्षेणानीकेन तथा सूच्या व्यूहेन वा धीरवक्त्रया धीरा वक्रे अग्रे यस्यास्तया वेति ॥ ४८ ॥

( पश्चाद्भये त्वित्यादि ) पश्चाद्भये तु शकटं व्यूहं प्रकल्पयेत्। पार्श्वयोर्भये वज्रसंज्ञकं व्यूहं, सर्वतो भये सर्वतोभद्रं व्यूहं प्रकल्पयेदिति सम्बन्धः ॥ ४९ ॥

( व्यसने रक्षण )मधिकृत्याभिधातुमाह—( कन्दरेत्यादि ) कन्दरः पर्वतदरी- ( तत्र )। शैलः पर्वतस्तैर्गहने प्रचुरे। निम्नगा नद्यः, वनानि वृक्षगुल्मादिभिर्दुर्गाणि, तैः सङ्कटे, सङ्कीर्णे प्रदेशेऽवस्थानं बलस्य व्यसनमुच्यते। तथा दीर्घाध्वनि परिश्रान्तं क्षुत्पिपासाहितक्लमम् ॥ ५० ॥

व्याधिदुर्भिक्षमरकैः पीडितं दस्युभिर्द्रुतम् ।
पङ्कपांसुजलच्छन्नं व्यस्तं पुञ्जीकृतं पथि ॥ ५१ ॥
प्रसुप्तं भोजनव्यग्रमभूमिष्ठमसंस्थितम् ।
चोराग्निभयवित्रस्तं वृष्टिवातसमाकुलम् ॥ ५२ ॥
एवमादिषु जातेषु व्यसनेष्वसमाकुलः ।
स्वसैन्यं साधु संरक्षेत् परसैन्यञ्च घातयेत् ॥ ५३ ॥

इति प्रयाणव्यसनरक्षणं नाम त्रिंशं प्रकरणम् ।

---

३१ अथ कूटयुद्धविकल्पप्रकरणम् ।

विशिष्टो देशकालाभ्यां भिन्नारिप्रकृतिर्बली ।

---

च्छन्नं पङ्कादिगतम् । व्यस्तं विक्षिप्तम् । पुञ्जीकृतं पथि एकत्र्यर्न ॥ ५१ ॥

अभूमिष्ठं स्वबलायोग्यायां भूमौ स्थितम् । असंस्थितमनिविष्टम् ॥ ५२ ॥

एवमादिष्विति । आदिशब्दादशेषबलव्यसनोपग्रहः । असमाकुलः सावधानः । स्वसैन्यं रक्षेत् परावस्कन्दात् ॥ ५३ ॥

इति प्रयाणव्यसनरक्षणं नाम त्रिंशं प्रकरणम् ।

---

३१ कूटयुद्धविकल्पप्रकरणम् ।

उक्तव्यसनानां हि कूटयुद्धहेतुत्वात्तदनन्तरं कूटयुद्धविकल्पा उच्यन्ते अष्टादशभिः श्लोकैः–विशिष्ट इत्यादि । चतुरङ्गेण हि बलेन व्यायामयुद्धं क्रियते ।

---

( व्याधीत्यादि ), ( प्रसुप्तमित्यादि ) ( एवमादिष्वित्यादि ) इति प्रतीतम् ॥ ५१ ॥ ५२ ॥ ५३ ॥

इति प्रयाणव्यसनरक्षणं नाम त्रिंशं प्रकरणम् ।

---

१ कूटयुद्धविकल्पप्रकरणम् ।

कूटयुद्धविकल्पमभिधातुमाह–( विशिष्ट इत्यादि ) देशकालबलाभ्यामेति द्रष्टव्यम् । देशबलेन कालबलेन च यातव्यबलापेक्षया विशिष्टोऽधिकः । भिन्नारिप्रकृतिरिति भिन्ना यातव्यस्य [illegible]त्वादिप्रकृतयो येन । बली [illegible]शक्तित्रयः ।

कुर्यात् प्रकाशयुद्धं हि कूटयुद्धं विपर्यये ॥ ५४ ॥
तेष्ववस्कन्दकालेषु परं हन्यात् समाकुलम् ।
अभूमिष्ठं हि, भूमिष्ठं तद्भूमौ चोपजापतः ॥ ५५ ॥
प्रकृति प्रग्रहाकृष्टं पाशैर्वनचरादिभिः ।
हन्यात् प्रवीरपुरुषैर्भङ्गदानापकर्षणैः ॥ ५६ ॥
पुरस्ताद् दर्शनं दत्त्वा तल्लक्षकृतनिश्चयः ।

---

तच्च द्विविधं, मुख्यं तावत्प्रकाशयुद्धं, अप्रकाशयुद्धं कूटमिति । तत्र यदा स्वबलानुकूलदेशकालः कृत पर प्रकृत्युपजापो बलेन चाधिकः शत्रोः, तदा प्रकाशयुद्धं आभाषितं सङ्ग्रामं कुर्यात् । विपर्ययः—विरुद्धदेशकालः अभिन्नारिर्बलहीनश्च कूटयुद्धं—प्रच्छन्नयुद्धं कुर्यात् ॥ ५४ ॥

कीदृशं तदित्याह—तेष्वित्यादि आवस्कन्दकालेषु कन्दरा शैलादिप्रयाणादिषु । अभूमिष्ठं,—स्वभूमिष्ठं परं हन्यादिति सम्बन्धः । स्वबलयोग्यायां वा भूमौ स्थितं परस्परप्रकृतिपूपजापाज्जातावकाशो हन्यादित्यर्थः ॥ ५५ ॥

आकृष्टं पाशैर्वनचरादिभिः भङ्गदानापकर्षणैरिति सम्बन्धः । आदिशब्दाद्दूष्यामित्रोपग्रहः । भङ्गदानेनापकर्षणं येषां तैर्दूष्या मित्राटविगबलैः पाशभूतैः स्वभूमितोऽपकृष्टं परं विभूमिप्राप्तं प्रवीरपुरुषैर्हन्यात् ॥ ५६ ॥

पुरस्ताद्दर्शनं दत्वा येन केनचिद्वलेन, तल्लक्षकृतनिश्चयः पौरस्त्यकृता-

---

एवम्भूतो विजिगीषुः प्रकाशयुद्धं कुर्यात्, विजयस्यासन्दिग्धत्वात् । कूटयुद्धं तु वक्ष्यमाणलक्षणं विपर्यये पूर्वोक्तस्यान्यथात्वे कुर्यादिति सम्बन्धः ॥ ५४ ॥

( तेष्वित्यादि ) तेष्ववस्कन्दकालेषु अनन्तरोक्तबलव्यसनकालेषु परं हन्यात्समाकुलमिति प्रतीतम् । अभूमिष्ठं युद्धव्यायामायोग्यभूमिष्ठम् । स्वभूमिष्ठः युद्धयोग्यभूमिस्थितः । तं तद्भूमौ यातव्यानुकूलभूमौ वा उपजापः प्रकृतिभेदस्तस्मात् ॥ ५५ ॥

( प्रकृतिप्रग्रहेत्यादि )......॥ ५६ ॥

( पुरस्ताद्दर्शनमित्यादि ) पुरस्तादग्रतो योद्धुमिति दर्शनं स्वल्पैर्दत्वा, तल्लक्षकृतनिश्चयमिति, येन विजिगीषुबलेन दर्शनं दत्तं तल्लक्षकृतो निश्चयो येन व्या-

हन्यात् पश्चात् प्रवीरेण बलेनोत्पीड्यवेगिने ॥ ५७ ॥
पश्चाद्वासङ्कुलीकृत्य हन्यात् सारेण पूर्वतः ।
आभ्यां पार्श्वाविघातौ तु व्याख्यातौ कूटयोधने ॥ ५८ ॥
पुरस्ताद्विषमे देशे पश्चाद्धन्यात्तु वेगवान् ।
पुरः पश्चाच्च विषम एवमेव तु पार्श्वयोः ॥ ५९ ॥
प्रथमं योधयित्वा वा दूष्यामित्राटवीबलैः ।

---

वधावान् परसैनिकान् हन्यात् । पश्चाददत्तपृष्ठावधानत्वात् । प्रवीरेण हस्त्यश्वबलेन वेगवता ॥ ५७ ॥

पश्चाद्वा सङ्कुलीकृत्य—पृष्ठतो व्याकुलीकृत्य येन केनाचिद्बलेन हन्यात्, पूर्वतः पुरस्तात्, दत्तपृष्ठावधानान् । आभ्यां पार्श्वाविघाताविति । वामतो दक्षिणतो वा पार्श्वतः सङ्कुलीकृत्य दक्षिणतो वामतो हन्यात् ॥ ५८ ॥

पुरस्ताद्विषमे देशे—परिवर्तनस्तम्भ विकाशाद्ययोग्ये । पश्चाच्चविषमे पुरो हन्यादिति सम्बन्धः । एवमेव तु पार्श्वयोरिति । वामदक्षिणयोरिति सम्बन्धः । देशे वामतो दक्षिणतो वा हन्यादित्यर्थः ॥ ५९ ॥

दूष्यामित्राटवीबलैः परकीयकल्पैः । बलं बलेन हन्यात् ( पूर्वत ? ) प्रथममिति । पूर्वं योधयित्वा पश्चाच्छ्रान्तं सन्नं, निराक्रन्दं निराशं, क्षीणबल-

---

तव्येन तम्, पश्चादिति गत्वा प्रवीरेण श्रेष्ठबलन वेगवता बलेन हन्यादिति सम्बन्धः ॥ ५७ ॥

( पश्चाद्वेति ) ( पश्चाद्वा सङ्कुलीकृत्य हन्यात्सारेण पूर्वतः । ) पश्चाद्वा सङ्कुलीकृत्य समाकुलं कृत्वा पूर्वतोऽग्रतः सारेण बलेन हन्यादिति । आभ्यां पश्चात्पूर्वाभिघाताभ्यां पार्श्वाभिघातौ व्याख्यातौ द्रष्टव्यौ तद्यथा—वामतो बलं प्रदर्श्य ( दक्षिणतः, दक्षिणतो बलं प्रदर्श्य ) वामतो हन्यादित्यर्थः । कूटयोधने कूटयुद्धे ॥ ५८ ॥

( पुरस्तादिति ) पुरस्तादग्रतो विषमे दुर्गमे देशे पश्चाद्धन्याद् वेगवान् विजिगीषुः । पश्चाच्च विषमे पुरोऽग्रतो हन्यात् । एवमेव तु पार्श्वयोरिति, वामतो विषमे दक्षिणतो हन्याद्दक्षिणतो विषमे वामतो हन्यादिति ॥ ५९ ॥

( प्रथममित्यादि ) प्रथमं पूर्वमेव दूष्यामित्राटवबिलैर्योधयित्वा युद्धं कार-

श्रान्तं सन्नं निराक्रन्दं हन्यादश्रान्तवाहनः ॥ ६० ॥
दूष्यामित्रबलैर्वाऽपि भङ्गं दत्त्वा प्रयत्नवान्।
जितामित्येव विश्वस्तं हन्यात् सैन्यव्यपाश्रयः ॥ ६१ ॥
स्कन्धावारपुरग्रामसस्यसार्थव्रजादिषु।
विलोप्यं च परानीकमप्रमत्तो विनाशयेत् ॥ ६२ ॥
फल्गुसैन्यंप्रातिच्छन्नं कृत्वा वा सारवद्दलम्।
मन्दयत्नं तद्विलोपे हन्यादुत्प्लुत्य सिंहवत् ॥ ६३ ॥

---

त्वात् ॥ ६० ॥

दूष्यामित्रबलैर्वा, भङ्गं दत्वा, पलायनेनानयोर्जितं मयेति विश्वस्तं परं भग्नानुसारिणम्। प्राक् सैन्यव्यपाश्रयः प्रयत्नवानप्रमत्तो हन्यात् ॥ ६१ ॥

स्कन्धावारादिषु प्रख्यापितरक्षाशैथिल्येषु विलोपयितुं विलोभ्योभयवेतनैः त-ो विलोपेऽप्रमत्तः परानीकं हन्यात् ॥ ६२ ॥

फल्गुसैन्यप्रतिच्छन्नमिति। असारबलेन सारबलमवच्छाद्य तद्विलोपे फल्गुबलाभिघातेऽवज्ञया शिथिलयत्नं (समीची-भूतं ? परं सारबलेन सिंहवदुत्प्लुत्य हन्यादिति ॥ ६३ ॥

---

यित्वा श्रान्तं जातश्रमं सन्नं विषण्णं निराक्रन्दं मित्रबलरहितं, आक्रन्दो मित्रविशेष एवोच्यते। हन्यादश्रान्तवाहन इति प्रतीतम् ॥ ६० ॥

(दूष्यामित्रबलैरिति) दूष्यामित्रबलैः करणभूतैर्भङ्गं दत्वा प्रयत्नवानिति आत्मनः प्रकृष्टो यत्नोऽस्यासौ, जितमेवेति विश्वस्तं परं हन्यात् छलव्यपाश्रयो वनादिच्छन्नः ॥ ६१ ॥

(स्कन्धावारेति) स्कन्धावारपुरग्रामसस्यसार्थ प्रं( व्र ? )जादयः प्रतीताः। तेषु विलोपनपरं लुण्ठनव्यापृतमनीकं परं स्वयमप्रमत्तो विनाशयेत् इति ॥६२॥

(फल्गुसैन्यप्रातिच्छन्नमिति) फल्गु असारं सैन्यं तेन प्रतिच्छन्नं सारवद्दलं कृत्वा तेन तद्विलोपे फल्गुबलविनाशे समासक्तमासक्ति गच्छन्तं हन्यादुत्प्लुत्य सिंहवदिति प्रतीतम् ॥ ६३ ॥

मृगयासंप्रसक्तं वा हन्याँच्छन्नुमपाश्रयम् ।
अथवा गोग्रहाकृष्ट्या तल्लक्ष्यं मार्गबन्धनात् । ६४ ॥
अवस्कन्दभयाद्रात्रौ प्रजागरकृतश्रमम् ।
दिवा प्रसुप्तं वा हन्यान्निद्राव्याकुलसैनिकम् ॥ ६५ ॥
पूर्वाह्ण आहतं श्रान्तमपराह्णे विनाशयेत् ।
निशि विस्रम्भसुप्तं वा तत् सौप्तिकविधानवित् ॥ ६६
सपादकोशावरणैर्नागैः कुर्यात् तु सौप्तिकम् ।
कुर्यादुग्रजवोपेतैर्नरैर्वा खड्गपाणिभिः ॥ ६७ ॥

---

मृगयासंप्रसक्तमाटविकप्रोत्साहितम् । गोग्रहाकृष्ट्या गोग्रहणेनान्यतः समाकृष्य गोग्रहणकृतलक्ष्यं परं मार्गेषूपरुध्य हन्यात् ॥ ६४ ॥

अवस्कन्दभयादिति । रात्रौ सा मेवावस्कन्दं दीस्यतीति भयात्प्रजागरकृतश्रमं ततो निद्राकुल सैनिकं दिवा सुप्तं हन्यात् ॥ ६५ ॥

अहसन्नाहत इति । अहनि व्याजकलहेन सन्नाहपरिश्रान्तमपराह्णे मुक्तसन्नाहं हन्यात् । सुप्तेभवं मर्दनं सौप्तिकं, तद्विधानवित् । विस्रम्भसुप्तं वा तत् परबलं विनाशयेदिति सम्बन्धः ॥ ६६ ॥

किं तत्सौप्तिकमित्याह—सपादकोशावरणैरिति । पादकोशश्चर्ममयः कण्टकाद्याबाधकपरिहारार्थं, आवरणं शस्त्रनिवारणार्थम् । नरैर्वा, यदि हस्तिनो न सन्ति ॥ ६७ ॥

---

( मृगयासम्प्रसक्तं वेत्यादि ) मृगयासम्प्रसक्तं पापर्ध्यां सक्तं वा हन्याच्छन्नव्यपाश्रयो वनादिसँलीनः । अथवा गोग्रहाकृष्ट्या गोग्रहं कारयित्वा या शत्रो राकृष्टिस्तया करणभूतया तल्लक्षं गोगणकृतदृष्टिं मार्गबन्धनाद् हन्यादिति प्रतीतम् ॥ ६४ ॥

( अवस्कन्दभयादित्यादि ) इति प्रतीतम् ॥ ६५ ॥

( अहःसन्नाहत इत्यादि ) ( [illegible]शीत्यादेः ) हन्यादिति सम्बन्धः । सौप्तिकलक्षणमनन्तरमेव वक्ष्यते ॥ ६६ ॥

( सपादेति ) पादानां चर्ममयाः कोशा आवरणास्तत्सन्नाहाः । तद्युक्तै र्नागैः सौप्तिकं सुप्तबलाविनाशं कुर्यात् । अश्वैवाग्रिजवोपेतैरार्तवोगीभिः । नरैर्वा खड्गपाणिभिः सौप्तिकं कुर्यादितिसम्बन्धः ॥ ६७ ॥

प्रतिसूर्यमहावातं हन्यात् सम्मीलितेक्षणम्।
इत्येवं कूटयुद्धेन हन्याच्छत्रून् लघूत्थितः॥ ६८॥

नीहारतिमिराङ्गारश्वभ्राम्रवननिम्नगाः।
वदन्ति सत्रमित्यादि सत्रं छद्म प्रकीर्तितम्॥ ६९॥

( पुनरावर्तमानस्य निराशस्य तु जीवने।
अनार्यो जायते वेग इति भग्नं न पीडयेत्॥ १॥
अल्पागमातिव्ययता क्षयो वृद्धिर्विपर्यये।
समायव्ययतास्थानं कर्मसु ज्ञेयमात्मनः॥ २॥
द्वावपि प्रस्तुतौ वध्यप्रमत्तौ व्यवसायवत्॥ ३॥ )
साध्वप्रमत्तो व्यवसायवर्ती येन प्रकारेण परं निहन्यात्।

---

प्रतिसूर्यमहावातं—प्रतिकूलौ सूर्यमहावातौ यस्य परबलस्य तत्प्रतिघातकृत-सम्मीलनत्वाद्धन्यात्। इत्येवमित्युपसंहरति। लघूत्थितो हन्यान्माभूत्कालातिपत्तिरिति॥ ६८॥

सत्रव्यपाश्रय इत्यादि सत्रमुक्तं तस्य स्वरूपमाह—नीहारेत्यादि। श्वभ्राणि कन्दराः। सत्रमित्यादीत्यादिशब्दाद्धान्वनशैलविषमादयो द्रष्टव्याः। सत्रं छद्म प्रकीर्तितमात्मच्छादनात्॥ ६९॥

( पुनरावर्तमानस्य निराशस्य तु जीविते॥ अनार्यो जायते वेग इति भग्नं न पीडयेत्॥ अल्पागमातिव्ययता क्षयो वृद्धिर्विपर्यये॥ समायव्ययतास्थानं कर्मसु ज्ञेयमात्मनः॥ द्वावपि प्रस्तुतौ वध्यप्रमत्तौ व्यवसायवत् ) यथ

---

( प्रतिसूर्यमहावातमित्यादि ) प्रतिसूर्यमहावातं प्रति सम्मीलितेक्षणं हन्यादिति। एवं कूटेन युद्धेनारिं लघ्वुत्थित इति प्रतीतम्॥ ६८॥

( नीहारेत्यादि ) सत् विद्यमानं त्रायति छादयति इति सत्रम्। नीहारो धूमिका। शेषं प्रतीतम्॥ ६९॥

उपसंहरन्नाह—( साध्वप्रमत्त इत्यादि ) साधु यथा भवति तथा अप्रमत्तः व्यवसायवर्ती व्यवसाये स्थितः येन प्रकारेण कूटयुद्धादिना परं निहन्या-द्विजिगीषुः। चरैः समावेदितः तत्प्रचारः शत्रुप्रचारः। शङ्केन शङ्कां कुर्वीत

चरैः समावेदिततत्प्रचारः शङ्केत तेनैव ततोऽप्रमत्तः ॥ ७० ॥

सुनियतमुपहन्यात् कूटयुद्धेन शत्रून्
न हि तिरयति धर्मं छद्मना शत्रुघातः ।
अचकितमवसुप्तं पाण्डवानामनीकं
निशि सुनिशितशस्त्रो द्रोणसूनुर्जघान ॥ ७१ ॥

---

विजिगीषुः कूटयुद्धप्रयोगान्, परत्र प्रयुङ्क्ते तथा परोऽप्यस्मिन्निति तत्प्रतिविधानार्थमाह––साध्वित्यादि शोभनमप्रमत्तः । व्यवसायवर्ती कृतोत्साहः । चरैः समावेदितः शत्रुप्रचारो यस्मै सः । तेनैव प्रकारेण । ततः परस्माच्छङ्केत ॥ ७० ॥

ननु निर्दिष्टदेशकालः सङ्ग्रामो धर्मिष्ठः । कूटयुद्धस्याधर्मिष्ठत्वात् । कथं शत्रुमनेन हन्यादित्याह–सूनियतमित्यादि । शत्रुरपकारी, तस्य कूटेन व्यापादनं नाधर्माय । तथा चागमः "विषेण वा माधव ? मायया वा शस्त्रेण गोविन्द ! तथाग्निना वा यैस्तैरुपायैररविन्दनाभ ! शत्रोर्वधं वेदविदो वदन्ति "। इति । पूर्वैराचतितश्चायं मार्ग इत्याह–अचकितमिति । विस्रब्धं सुप्तम् । द्रोणसूनुरश्वत्थामा । स हि पितृवधामार्षितो विस्रब्धसुप्ते पाण्डवानीके सौप्तिकमकरोदिति ॥ ७१ ॥

---

ततो यातव्यात् । तेनैव प्रकारेण प्रतीकारं कुर्वीताप्रमत्तः इति ॥ ७० ॥

कूटयुद्धैः शत्रुवधे पापं भवतीत्याशङ्क्याह–( नियतमिति ) नियतं निश्चयेनोपानिहन्यादुपेत्य विनाशयेत् शत्रून् कूटयुद्धादिभिः इति शेषः । हि यस्मान्न तिरयति नाच्छादयति धर्मं छद्मना शत्रुनाशः इति वेदार्थः । अत्र दृष्टान्तमपि दर्शयन्नाह–अचकितमिवसुप्तं पाण्डवानामनीकं निशि सुनिशितशस्त्रो द्रोणसूनुर्जघानेति ७१ ॥

इति कूटयुद्धविकल्पो नामैकत्रिंशं प्रकरणम् ।
इति श्रीकामन्दकीये नीतिसारे एकोनविंशः सर्गः ।

---

इति कूटयुद्धविकल्पो नामैकत्रिंशं प्रकरणम् ।
इति श्रीशङ्करार्यकृतायां कामन्दकीमनीतिसार पञ्चिकायां जय
मङ्गलायां सैन्यबलाबलं, सेनापतिप्रचारः प्रमा-
णव्यसनरक्षणं, कूटयुद्धविकल्पो नामै-
कोनविंशः सर्गः ॥

---

इति कूटयुद्धविकल्पो नामैकत्रिंश प्रकरणम् ।
इति श्रीकामन्दकीयनीतिसारटीकायामुपाध्यायनिरपेक्षायां सैन्य
बलाबल–सेनापतिप्रचार–प्रयाणव्यसनरक्षण–कूटयुद्ध-
विकल्पो नामैकोनविंशः सर्गः ।

## अथ विंशः सर्गः ।

### ३२ गजाश्वरथपत्तिकर्मप्रकरणम् ।

प्रयाणे पूर्वयायित्वं वनदुर्गप्रवेशनम् ।
अकृतानाञ्च मार्गाणां तीर्थानाञ्च प्रवर्तनम् ॥ १ ॥
तोयावतारसंतारावेकाङ्गविजयस्तथा ।
अभिन्नानामनीकानां भेदनं भिन्नसंग्रहः ॥ २ ॥

---

## अथ विंश सर्गः ॥

### ३२ गजाश्वरथपत्तिकर्मप्रकरणम् ।

अस्मिन् सर्गे पञ्च प्रकरणानि, गजाश्वरथपत्तिकर्माणि, पत्त्यश्वरथगजभूमयः दानकल्पना, व्यूहविकल्पाः, प्रकाशयुद्धश्चेति । तत्र चतरङ्गं स्वकर्मभि, कूटयुद्धादो व्याप्रियत इति तत्कर्माण्युच्यन्ते नवभिः श्लोकैः प्रयाण इत्यादि। प्रयाणकाले परैर्मार्गे संरुद्धे संरोधभङ्गार्थं हस्तिनां पुरो यानम् । वनदुर्गे अश्वाद्यगम्ये प्रवेशनं हस्तिभिः सैन्यस्य । तीर्थानां जलावतरणानां प्रवर्तनं संक्षोभ्यकरणम् ॥ १ ॥

तोयावतारसन्ताराविति । जलदुर्गविजयार्थं हस्तिभिस्तोयावतरणं, नाव्यतोयानाञ्च नदीनां सन्तरणम् । सकाङ्गविजयः सुकृतेन सुकल्पितेन केवलेन हस्तिना विजयः । अभिन्नानां परानीकानां पराक्रमातिशयात् । भिन्नसंग्रहः— भिन्नव्यूहानां छिद्रपूरणेन सन्धानम् ॥ २ ॥

---

## अथ विंशः सर्गः ।

### ३२ अथ गजाश्वरथपत्तिकर्मप्रकरणम् ।

कूटयुद्धविकल्पानभिधायात्रान्त्यसर्गेण प्रकाशयुद्धं प्रतिपादयितुं बलाङ्गानां कर्माणि युद्धादि च दर्शयिष्यन् तत्र हस्तिकर्मैव श्लोकत्रयेण दर्शयितुमाह— ( प्रयाण इति ) प्रयाणे पूर्वयायित्वं परेषां त्रासजननार्थम् । वनदुर्गप्रवेशनं हस्तिनां कर्म द्रुमभञ्जनसमर्थत्वात् । अकृतानां च मार्गाणां तीर्थानां च प्रवर्तनं महाकायत्वात् ॥ १ ॥

( तोयेति । ) तोयावतारसन्ताराविति—तोये दुरवतारेऽवतारं कुर्वन्ति, दुस्तरं सन्तारं कुर्वन्ति महाकायत्वादेव । एकाङ्गविजयस्तथा—एकेनैव हस्त्यङ्गेन परसैन्यं जीयत इति । अभिन्नानां परानीकानां भेधनं हस्तिघटाप्रेरणात् । भिन्नानां स्वसैन्यानां विक्षिप्तानां सङ्ग्रह एकीकरणं हस्तिघटाभिरेव ॥ २ ॥

विभीषिकाभिधातश्च प्राकारद्वारभञ्जनम् ।
कोशनीतिर्भयत्राणं हस्तिकर्म प्रचक्षते ॥ ३ ॥
चतुरङ्गस्य सैन्यस्य निषेधो बलरक्षणम् ।
अभिन्नभेदनं भिन्नसन्धानं रथकर्म तत् ॥ ४ ॥
वनदिङ्मार्गविचयो वीवधासाररक्षणम् ।
अनुयानापसरणे शीघ्रकार्योपपादनम् ॥ ५ ॥

---

विभीषिका—भीतिजननं सन्नाहसम्भ्रमेणैव । अभिघातः—परेषां व्यसने । कोशनीतिः प्रयाणकोशवहनम् । भयात्प्रत्युपस्थितात्त्राणम् ॥ ३ ॥

चतुरङ्गस्य बलस्य परकीयस्य निषेधो रथैः । बलस्यात्मीयस्य रक्षणम् ॥ ४ ॥

वनदिङ्मार्गविचयः—वनानां सोपद्रवाणां निरूपणमश्वैः । अनुयानं भग्नस्य परबलस्य पश्चात्सरणम् । अपसरणम्, पलायनम् । शीघ्रकार्योपपादनं—वार्ताज्ञानादि कार्यसम्पादनम् ॥ ५ ॥

---

( विभीषिकेति । ) विभीषिका हस्तिघटादर्शनेन शत्रूणां भयोत्पादनम् । अभिघातश्च परसैन्यस्य । प्राकारद्वारभञ्जनं परदुर्गस्य । कोशनीतिः कोशनयनम् । प्रयाणे भयत्राणं हस्तिबलेनैव भवति । हस्तिकर्म प्रचक्षते पूर्वाचार्या इति ॥ ३ ॥

रथकर्माभिधातुमाह—( चतुरङ्गस्येति । ) चतुरङ्गस्य सैन्यस्य परानीकस्य निषेधः प्रतिषेधः । बलरक्षणं स्वकीयबलरक्षणम् । अभिन्नभेदनं भिन्नसन्धानं हस्तिकर्मवद्द्रष्टव्यमिति रथकर्मैवतत् ॥ ४ ॥

( वनेति । ) वनानां दिशां मार्गाणां विचयो निरूपणमश्वकर्मेति सम्बन्धः । वीवधासाररक्षणमिति प्रतीतम् । अनुयानापसरणे इति—परसैन्यस्य त्रासोत्पादनार्थमनुपश्चाद्गमनमनुयानम्, भङ्गदर्शनेन परबलान्याकृष्याभिहन्तुमपसरणम् । शीघ्रकार्योपपादनमिति—शीघ्रं सम्पादनीयानां कार्याणामुपपादनं चाश्वकर्म ॥ ५ ॥

दीनानुसरणं घातः कोटीनां जघनस्य च ।
इत्यश्वकर्म पत्तेश्च सर्वदा शस्त्रधारणम् ॥ ६ ॥
शोधनं कूपतीर्थानां मार्गाणां शिबिरस्य च ।
यवसादि च यत्किञ्चिद् विज्ञेयं विष्टिकर्म तत् ॥ ७ ॥
जातिः सत्त्वं वयः स्थानं प्राणिता वर्ष्म वेगिता ।

---

दीनानुसरणं यतो यतः सैन्यं दैन्यमापद्यते, ततस्ततोऽनुसरणम् । घात, कोटीनां बलाग्रभागानाम् । जघनस्य पृष्ठभागस्याशु परिवृत्यघातः । पत्तेश्चेति च शब्दात् सर्वभेदेषु शस्त्रधारणं कर्म ॥ ६ ॥

द्विविधाः पत्तयः युद्धयोग्या इतरे च । तत्र पूर्वेषां कर्मोक्तम् । इतरेषामाह—शोधनमित्यादि । प्रयाणे कूपादीनां शिबिरस्य परिक्षेपस्य शोधनं कर्म, यवसादि च यत्किञ्चित्सम्पाद्यं, तद् विष्टिकर्म विज्ञेयम् । आदिशब्दाद्यन्त्रावरणोपकरणादिवहनं ज्ञेयम् ॥ ७ ॥

जात्यादियुक्ताश्च हस्त्यादयः स्वकर्मसु क्षमा भवन्तीत्याह—जातिरित्यादि । तत्र पदातीनां जातिर्ब्राह्मणादिः हस्तिनां भद्रमन्द्रादिः, अश्वानां बाह्लीक काम्बोजादिः । सत्त्वं तत्र पदातीनां व्यसने अभ्युदये च यदविकारकं,

---

( दीनेति । ) दीनानुसरणमिति—दीनमनुकम्पनीयं यत् ( स्व ) बलं ( तस्मात् परबलस्य ) तस्य दारासपर्पणार्थमनुपश्चाद् गमनमनुसरणम् । घातः कोटीनामिति उभयपक्षास्थितबलानाम् । जघनस्य चेति पृष्ठभागास्थितबलस्य, इत्यश्वकर्म । पत्तेश्च पदातिबलस्य सर्वदा शस्त्रधारणं कर्मेति ॥ ६ ॥

( शोधनमिति । ) कूपतीर्थानां शोधनं खननक्रिया । मार्गाणां शिबिरस्य चेति स्कन्धावारस्थानस्य । यवसादिषु पलालादिषु । आदिग्रहणात् काष्ठकण्टकशाखादिषु च यत्किञ्चित्कर्म विज्ञेयं विष्टिकर्म तत् । विष्टयः कर्मकरा उच्यन्ते ॥ ७ ॥

बललक्षणान्यभिधातुमाह—( जातिरिति । ) जातिरिति प्रत्यकं यथोचितं शुद्धता । तद्यथा—मनुष्याणां जातिरुभयकुलविशुद्धत्वम् । हस्तिनां भद्रादित्वम् अश्वानां सुभूमिजत्वम् । रथानां सारदार्वादिकारुघटितत्वं च । सत्वमुत्तमत्वम् वय इति पूर्वं नयस्तरुणत्वमित्यर्थः । स्थानमुत्पत्तिस्थानस्योत्तमत्वम् । प्राणिता

तेजः शिल्पमुदग्रत्वं स्थैर्यं साधु विधेयता ॥ ८ ॥
सुव्यञ्जनाचारतेति पत्तिकुञ्जरवाजिनाम्।
इति लक्षणमेतेन युक्तान् कर्मसु योजयेत् ॥ ९ ॥

इति गजाश्वरथपत्तिकर्माणिनाम द्वात्रिंशं प्रकरणम्।

---

हस्त्यादीनां च देवमानुषासुरगन्धर्वभावः। वयःस्थानं, वयःस्थता त्रयाणामिति तृतीया चतुर्थी पञ्चमी च दशा। प्राणिता प्राणवत्त्वं, प्राणस्त्रिविधः, उत्तमो मध्यमोऽधमश्चेति। वर्ष्म महाकायता। वेगिता जवः सोऽपि त्रिविधः पूर्ववत्। तेजः शौर्यम्। शिल्पं तत्र पदातीनां कृतास्त्रता, हस्त्यश्वानां त्वाहितविनयता। उदग्रत्वमुन्नतपूर्वकायता। स्थैर्य–दृढकायमनस्कता। विधेयता–तत्र पदातीनां स्वामिनः इतरयोर्यन्तुः ॥ ८ ॥

सुव्यञ्जनता–प्रशस्तलक्षणता। स्वाचारता, तत्र पदातीनां शिष्टाचरणं, हस्त्यश्वानां सेनान्याद्याचारणता। इति लक्षणमिति, पत्तिकुञ्जरवाजिनां स्वस्वकर्मनिष्पादयोग्यताया अनेन लक्ष्यमाणत्वात्। तस्मादनेन युक्तान् स्वकर्मसु योजयेत्। तत्र च हस्त्यश्व बललक्षणैः रथानामप्युक्तमेव तदधीनत्वाद्रथचर्यायाः। सन्निवेशसारदारुमयत्वादिकं प्रसिद्धमेवेति नोक्तम् ॥ ९ ॥

इति गजाश्वरथपत्तिकर्माणि नाम द्वात्रिंशं प्रकरणम्।

---

बलवत्वम्। वर्ष्म शरीरप्रांशुता। वेगिता वेगवत्वम्। तेजस्तैक्ष्ण्यम्। शिल्पमिति (स्वरथास्वरथे ?) स्वे विषये कृतविद्यता। उदग्रत्वमुन्नतत्वम्। स्थैर्यं स्थितेरविचलत्वम्। साधुविधेयता साधु यथा भवति तथोक्तकारिता ॥ ८ ॥

(श्विति।) सुव्यञ्जनाचारवत्तेति शोभनानि व्यञ्जनानि लक्षणानि आचारश्च येषां, तेषां भावस्तत्ता। पत्त्यश्वरथदन्तिनामितिलक्षणम्––एवम्प्रकारं लक्षणं भवति। एतेन लक्षणेन युक्तान् कर्मसु योजयेदिति प्रतीतम् ॥ ९ ॥

(इति गजाश्वरथपत्तिकर्मप्रकरणम्।)

३३ पत्त्यश्वरथगजभूमिप्रकरणम् ।

सस्थूलस्थाणुवल्मीकवृक्षगुल्मापकण्टका ।
सापसारा पदातीनां भूर्नातिविषमा मता ॥ १० ॥
स्वल्पवृक्षोपला क्षिप्रलङ्घनीयैर्दरा स्थिरा ।
निःशर्करा विपङ्का च सापसारा च वाजिभूः ॥ ११ ॥
निःस्थाणुसिकतापङ्का निर्वल्मीकोपला समा ।
केदारव्रततिश्वभ्रवृक्षगुल्मविवर्जिता ॥ १२ ॥

---

३३ पत्त्यश्वरथगजभूमिप्रकरणम् ।

यथा तत्कर्माणि युद्धार्थानि, तथा तद्भूमयोऽपीति पत्त्यश्वरथगजभूमय उच्यन्ते पञ्चभिः श्लोकैः–सस्थूलेत्यादि स्थूलस्थाणुभिर्वल्मीकवृक्षगुल्मैश्च योधाश्रयैः सह वर्तत युद्धभूमिः ।.अपकण्टका–कण्टकरहिता सञ्चरणयोग्या सापसारा । अपसरणमार्गोपेता । नातिविषमा–स्तोकनिम्नोन्नता ॥ १० ॥

स्वल्पवृक्षोपला वाजिनामसङ्गकारिणी भवति । क्षिप्रलङ्घनीयैप्रदरवर्ती बृहच्छ्वभ्राभावात् । स्थिरा यत्र यत्र खुरा न विशन्ति ॥ ११ ॥

निःस्थाणुसिकतापङ्का निर्वल्मीकोपला च भूः केदारं क्षेत्रं, व्रततिर्वल्ली ॥ १२ ॥

---

३३ अथ पत्त्यश्वरथगजभूमिप्रकरणम् ।

इदानीं तु बलानुगुणभूमीरभिधातुमाह ( सस्थूलेति । ) स्थूलाः स्थाणव स्कन्धाधारिच्छन्नवृक्षाः । वल्मीकवृक्षगुल्मादयः प्रतीतास्तैस्सह वर्तत इति । अप कण्टकाः ( कण्टकरहिताः ) । सापसारा सहापसारभूम्या वर्तत इति । भूर्भूमिर्नातिविषमा मता अभिमता पदातीनां युद्धायेत्यर्थः ॥ १ ॥

अश्वानुगुणां भूमिमाह–( अल्पेति । ) अल्पा वृक्षा उपलाश्च यस्यां सा । अच्छिद्रा, प्रघना । विदरा स्फोटनरहिता । स्थिरा अविशरणा । निःशर्करा सूक्ष्मपाषाणरहिता । निष्पङ्का कर्दमरहिता । सापसारा अपसरणप्रदेशयुक्ता । एवंभूता वाजिनां भूरनुकूलेति ॥ ११ ॥

रथानुकूलां भूमिमभिधातुमाह–( निरिति । ) इति प्रतीतम् ॥ १२ ॥

निरुत्खाता निर्दरणा खुरचङ्क्रमणक्षमा।
स्थिरा चक्रसहा चैव रथभूमिः प्रकीर्तिता ॥ १३ ॥

( रथानां शस्यते भूमिर्भुवः सर्वास्तु हस्तिनाम्।
नागम्या नाम भूरेषां तेन नागाः स्मृता बुधैः ॥ १ ॥

मर्दनीयतरुच्छेद्यव्रततिः पङ्कवर्जिता।
सुगम्यशैलविषमा हस्तिभूरिति कीर्तिता ॥ १४ ॥

( द्वे शते धनुषां गत्वा राजा तिष्ठेत् प्रतिग्रहे।
भिन्नसंधारणस्तस्मान्न युध्येताप्रतिग्रहः ॥ २ ॥

नागम्या नाम भूरेषां तेन नागाः स्मृता बुधैः।
तस्मादेता भुवोऽत्यर्थं नागानां सम्प्रकीर्तिताः ॥ ३ ॥

तुरगादीनि भिन्नानि प्रतिगृह्णाति यद्बलम्।
प्रतिग्रह इति ख्यातः स तु कार्यो भरक्षमः ॥ ४ ॥

---

निरुत्खाता चक्राप्रतिघातिनी। खुरचङ्क्रमणयोग्या स्थिरत्वात्। चक्रसहा तदारोहणचर्यानुकूला ॥ १३ ॥

गजभूमिमाह—मर्दनीयतरुच्छेद्यव्रतीरिति । शक्यमर्दनवृक्षा छेद्यव्रततिश्च हस्तिनां तदारोहिणां चाबाधिनी । सुगम्यशैलविषमेति—हस्तिनां गम्याः शैला विषमाश्च ॥ १४ ॥

बलान्तराणां त्वगम्यां भूमिं प्रसङ्गादाह—जयार्थीति । यत्र स्थितः

---

( निरुत्खातेति। ) उत्—उर्ध्वमागस्य निम्नत्वात् अधोगतं चक्रं यत्र खातं करोति स उत्खातस्तद्रहिता। निर्दरणा खुरचङ्क्रमणक्षमा, स्थिरा, चक्रसहा चैव रथभूः सम्प्रकीर्तितेति प्रतीतम् ॥ १३ ॥

गजानुरक्तां भूमिमभिधातुमाह ( मर्दनीयेति। ) मर्दनीयतरुश्छेद्यव्रततिः, पङ्कवर्जिता, निर्दरा, गम्यशैला च विषमा निम्नोन्नतत्वयुक्तापि गजमेदिनीति प्रतीतम् ॥ १४ ॥

( द्वे शते" इत्यादि ) व्यूहस्य पृष्ठतो द्वे शते धनुषां वक्ष्यमाणलक्षणानां गत्वा अलक्षितादेशे राजा विजिगीषुस्तिष्ठेत्। प्रतिग्रह इति परैरुपद्रुतं सैन्यं

तेन शून्यस्तु यो व्यूहः स भिन्न इव लक्ष्यते ।
तस्माद्विद्वान् जयाकाङ्क्षी न युध्येताप्रतिग्रहः ॥ ५ ॥)
जयार्थी नृपतिस्तिष्ठेद् दूरं गत्वा प्रतिग्रहः :
भिन्नञ्चप्रतिगृह्णीयान्नहि युध्येत तं विना ॥ १५ ॥
इति पत्यश्वरथगजभूमयो नाम त्रयस्त्रिंशं प्रकरणम् ।

---

## ३४ अथ दानकल्पनाप्रकरणम् ।

गजेष्वारोपितः साधुः शीघ्रपातैरधिष्ठितः ।

---

स्वबलं प्रतिगृह्णाति । स प्रतिग्रह उच्यते । तथा चोक्तम् ' द्वे शते धनुषां गत्वा राजा तिष्ठेत्प्रतिग्रहः । भिन्नसन्धारणं तस्मान्न युध्येताप्रतिग्रहः इति । ( कौ० अ० १०–५–१५७ ) ॥ १५ ॥

इति पत्यश्वरथगजभूमयो नाम त्रयस्त्रिंशं प्रकरणम् ।

---

## ३४ दानकल्पना प्रकरणम् ।

यथा युद्धभूमयो युद्धार्थास्तथा योधेभ्यो दानमपीति तत्कल्पनोच्यत षड्भिः श्लोकः–तत्र " पक्षादिदानेन गृहीतकोशः पक्षादिहीनं रिपुमभ्युपेया ', दित्युक्तम् ( १६ सर्ग ३५ ) स च कोशो युद्धकाले क्वतिष्ठेदित्याह–गजेष्वित्यादि । साधुः सारभूतः, देशकालानुरूपद्रव्ययुक्तो वा । शीघ्रपातैः प्रजविभिर्जनैराप्तैरधिष्ठितः । कोशाधीना हि राजतेति–राजसमूहो राजता । सा च अर्थतृष्णया युध्यमाना तदधीना भवति । तस्माद्राजसमीप एव कोशः

---

गृह्णातीति राजा प्रतिग्रहः । भिन्नं विह्वलं सधारयतीति भिन्नसन्धारणस्तस्माद प्रतिग्रहस्थानस्थितो राजा न युध्येत ॥ १५ ॥

---

## ३४ अथ दानकल्पनाप्रकरकणम् ।

युद्धे कोशस्यापि स्थानमभिधातुमाह ( गजेष्विति । ) युद्धे कोशः गजेवारोपितः कार्यः सुरक्षो भवतीति । शीघ्रयानं तुरगोष्ट्रादीनां तैरधिष्ठितः रक्षा

यत्र राजा तत्र कोशः कोशाधीना हि राजता ॥ १६ ॥
प्रत्यग्रे कर्मणि कृते श्लाघमानः कृतादरः।
योधेभ्यस्तु ततो दद्यात् को हि दातुर्न युध्यते ॥ १७ ॥
दद्यात् प्रहृष्टो नियुतं भटाणां राजघातने।
तदर्धं तत्सुतवधे सेनापतिवधे तथा ॥ १८ ॥
प्रवीराणान्तु मुख्यस्य शतं शतगुणं वधे।
तदर्धं कुञ्जरवधे प्रदेयं स्यन्दनस्य च ॥ १९ ॥

---

स्यादिति। अन्यस्त्वाह—रञ्जनाद्राजा। दूरस्थे हि कोशो कथं तदानीं योधान् रञ्जयेदिति ॥ १६ ॥

कर्मणि कृते वक्ष्यमाणे। श्लाघमानः बहुमन्यमानः। कृतादरः यथार्हकृतमानः ॥ १७ ॥

नियुतं भटाणां यथादेशप्रसिद्धानामाहतद्रव्याणां लक्षम्, तदर्धं पञ्चाशत्सहस्राणि ॥ १८ ॥

मुख्यस्य नायकस्य शतं—शतगुणं, दश सहस्राणीत्यर्थः। तदर्धं पञ्च सहस्राणि ॥ १९ ॥

---

सौकर्यार्थमेव। यत्र राजा तत्र कोशः। हि यस्मात् कोशाधीना राजता। यस्य कोशः स एव राजा भवतीत्यर्थः ॥ १६ ॥

युद्धे कोशविनियोगमभिधातुमाह—( प्रतीति। ) प्रत्यग्रे अभिनवे कर्मणि शत्रुवधादौ कृते निर्वर्तिते। स्वयोगादिभिः श्लाघमानो वर्णयन्। वधे कृतादरकृतसन्मानः। योधेभ्यः ततो दद्यात् स्वकोशं प्रयच्छेत्। हि यस्मात् को नाम पुरुषो दातुर्विजिगीषोर्न युध्येत, अपि तु सर्वोऽपि युध्यत एव। धनप्राप्तीच्छयेत्यर्थः ॥ १७ ॥

दानसङ्ख्यामभिधातुमाह—( दद्यादिति। शत्रुबले यो राजा तद्वर्तिने तद्विनाशकाय। तच्छिरसि समानीते भटाणां आहितद्रव्यविशेषाणां नियुतं लक्षं प्रहृष्टो दद्यात्। तदर्थं नि तार्धं पंचाशत्सहस्राणीत्यर्थः। तत्सुतवधे शाक्यपुत्रवधे। तथा सेनापतिवधे तदेव ॥ १८ ॥

( प्रवीराणामिति। ) प्रवीराणां तु प्रकृष्टवीराणां ये मुख्यास्तेषां वधे शतं शतगुणं दशसहस्राणि दद्यादिति सम्बन्धः। तथा तदर्थं कुञ्जरवधे पञ्च सहस्राणीत्यर्थः। स्यन्दनस्य वधे रथस्य वधे सार्धं सहस्रद्वयं दद्यात् ॥ १९ ॥

साहस्रोऽश्ववधः शत्यः पत्तिमुख्यवधः स्मृतः ।
शिरोविंशतिकं शेषं भोगद्वैगुण्यमेव च ॥ २० ॥
युग्यं हेम च कुप्यञ्च यो यज्जयति तस्य तत् ।
दद्याद् वस्त्वनुरूपं वा हृष्टो योधान् प्रहर्षयेत् ॥ २१ ॥
इति दानकल्पनानामचतुस्त्रिंशंप्रकरणम् ।

---

साहस्रोऽश्ववधः–सहस्रं दीयतेऽस्मिन्निति । शतं दीयतेऽस्मिन्निति शत्यः शिरो विंशतिकं शेषमिति- शेषाणां शिरः प्रमाणीकृत्य विंशतिर्देया । भोगद्वैगुण्यमेव चेति । यथोक्तानामनुक्तानाञ्च कृतकर्मणां पूर्वोचिता या यस्य यस्य वृत्तिस्तस्य तस्य तत्तद्भोग्यद्वैगुण्यं कल्पनीयम् ॥ २० ॥

स्वयं गृहीतानाञ्चे परबलद्रव्याणामनुज्ञानं, यदाह--युग्यमित्यादि । युग्यं–वाहनम् । कुप्यं -कम्बलास्तरणादि । दद्याद्वस्त्वनुरूपं वेति उक्ताद्विधानानन्तरं दर्शयति । योधान् प्रहर्षयेत् । तद्यथा--

यान् यज्ञसङ्घैस्तपसा च विप्राः स्वर्गैषिणः पात्रचयैश्च यान्ति ।
क्षणेन तानप्यतियान्ति शूराः प्राणान् सुयुद्धेषु परित्यजन्तः ॥
नवं शरावं सलिलस्य पूर्णं सुसंस्कृतं दर्भकृतोत्तरीयम् ।
तत्तस्य मा भून्नरकं च गच्छेद्योभर्तृपिण्डस्य कृते न युध्येत् ॥इति ॥२१॥
दानकल्पना नाम चतुस्त्रिंशं प्रकरणम् ।

---

तथा चोक्तम्–( साहस्र इति । ) सहस्रं चैवाश्ववध इत्यर्थः । शत्यः पत्तिमुख्यवध इति प्रतीतम् । शिरोविंशतिकं सर्वमनुष्यस्यापीति । भोगद्वैगुण्यमेव च । भोगो जीविका, स द्विगुणः कार्यः ॥ २० ॥

( युग्यमिति । ) स्वयोधानां कृतेयथोक्तकर्मणां–युग्यं वाहनं, हेम सुवर्णं, कुप्यं च सुवर्णभिन्नमायुधावरणादि योऽयं जयति तस्यैवतज्ज्ञेयमिति । दद्याद्वस्त्वनुरूपं वेति वस्तु ( द्रव्यं ) कार्यं (वा) तदनुरूपं द्रव्यानुरूपं कार्यानुरूपं वा दद्यात् हृष्टः । योधांश्च हर्षयेत् तानपि हर्षयुक्तान् कुर्यादिति सम्बन्धः ॥ २१॥
( इति दानकल्पना नाम चतुस्त्रिंशं प्रकरणम् ) ।

३५ व्यूहविकल्पप्रकरणम्।

पञ्चारत्नि धनुँस्तस्मिन् धन्विनं स्थापयेद्युधि।
त्रिगुणेऽश्वं गजरथौ योज्यौ पञ्चँसु पञ्चसु॥ २२॥
शमान्तरस्तु पुरुषस्तुरङ्गास्त्रिशमान्तरः।
कुञ्जरः स्यन्दनश्चैव स्मृतौ पञ्चशमान्तरौ॥ २३॥

---

३५ व्यूह विकल्प प्रकरणम्

यथा युद्धार्थं दानकल्पना, तथा व्यूहोऽपि युद्धनिमित्तमितितद्विकल्पा उच्यन्ते। तत्र व्यूहविधानं दशभिः श्लोकैराहपञ्चारत्नीत्यादि। पञ्चहस्तप्रमाणमिह धनुर्ग्राह्यं न चतुर्हस्तम्। तस्मिन् धन्विनं स्थापयेदिति, तावत्यधिष्ठाने पदातिरेको याद्धुं व्याप्रियेत। धन्विनमिति वचनादधन्विनां स्थानमनियतम्। तच्चानुक्तमपि यथासुखं कल्पनीयम्। त्रिगुणे त्रिधनुषि। अश्वं स्थापयेत्। पञ्चसु पञ्चसु धनुष्षु गजरथौ स्थाप्यौ, तावति तेषां यथासुखं व्याप्रियमाणत्वात्॥ २२॥

शमान्तरस्तु पुरुष इति। चतुर्दशाङ्गुलः शम इत्युच्यते। द्वयोः पदात्यधिष्ठानयोरन्तरं शमप्रमाणं स्थापयेत्। एवमश्वाधिष्ठानयोरन्तरं त्रिशमं, हस्त्यधिष्ठानस्यन्दनाधिष्ठानयोश्च पञ्चशममिति॥ २३॥

---

३५ व्यूहविकल्पप्रकरणम्।

बलाङ्गानाम्परस्परमसङ्कुलार्थं व्यूहरचनामभिधातुमाह—( पञ्चारत्नीति ) ( निष्कनिष्ठमुष्टिः ) चतुर्विंशत्यङ्गुलोऽरत्निर्हस्तस्तैः पञ्चभि कल्पितं धनुर्दशमानम्। तस्मिन् धनुषि पञ्चारत्निप्रमाणे भूभागे इत्यर्थः। धन्विनं धनुर्धरं स्थापयेन्नुपनयेद्युद्धार्थं युधि सङ्ग्रामे। त्रिगुणे धनुषि पञ्चदशारत्निप्रमाणे संस्थापयेदश्वम् गजरथौ तु योज्यौ पञ्चसु पञ्चसु धनुष्षु पञ्चविंशत्यरत्निप्रमाणे भूभाग इत्यर्थः॥ २२॥

( शमान्तरस्त्विति ) शमश्चतुर्दशाङ्गुलप्रमाणम्। तत्समानेऽपरस्मात्पुरुषादन्तराले पुरुषः कार्यः। तुरङ्गस्त्रिशमान्तरः कार्यः। कुञ्जरः स्यन्दनश्चैव स्मृतौ पञ्चशमान्तराविति। कुञ्जरात्कुञ्जरः सप्तत्यङ्गुलान्तरः कार्यः। तथा स्यन्दनात्स्यन्दनश्च॥ २३॥

तथा वा खलु युध्येरन् पत्त्यश्वरथदन्तिनः ।
यथा भवेन्न सम्बाधो व्यायामविनिवर्तने ॥ २४ ॥
असङ्करेण युध्येरन् सङ्करः सङ्कुलावहः ।
महासंकरयुद्धे च संश्रयेरन् महागजान् ॥ २५ ॥
अश्वस्य प्रतियोद्धारो भवेयुः पुरुषास्त्रयः ।
इति कल्प्यास्तु पश्चाश्वा विधेयाः कुञ्जरस्य च ॥ २६ ॥

---

तथा वा युध्येरन् पत्त्यादयो द्विगुणं त्रिगुणं वान्तरं परिकल्प्य, यथा व्यायामे विनिवर्तने च परस्परस्य सम्बाधो न भवेत् । सम्बाधश्चाङ्गविक्षेपविधुरत्वम् ॥ २४ ॥

तत्र सङ्गकारणं सम्भवतीत्याह–असङ्करेणेति । संश्रयेरन् महागजान्–न योधानिति शेषः । तदानीं पत्त्यश्वानामसञ्चारात् ॥ २५ ॥

अश्वस्य प्रतियोद्धार इति । अश्वस्य योद्धुः पुरस्तात्, त्रयः पुरुषाः प्रतियोद्धारोऽग्रयायिनः स्थापयितव्याः । इति कल्प्या इति–प्रतियोद्धृपुरुषत्रययोजनया कल्पनीयाः, पश्चाश्वाः ते च कुञ्जरस्य पुरस्तात् प्रतियोद्धारा विधेयाः ॥ २६ ॥

---

उक्तान्तरालापवादमाह ( तथा चेति ) विशिष्ट आयामो युद्धार्थं प्रसरणं व्यायामः । तथा च विश्रामार्थमपसरणं विनिवर्तनम । यथा सम्बाधः सङ्कीर्णता न भवति तथा युध्येरन् । विस्तीर्णायां रणभूमौ उक्तप्रमाणादधिकमपि अन्तरालं कार्यं । न सङ्कीर्णायामिति भावः ॥ २४ ॥

( असङ्करेणेति ) सङ्करणं सङ्करोऽन्यस्थानविक्षेपणमसौ सङ्करः सङ्कुलावहः । किमुक्तं भवति ? आकुलत्वान्मोहो भवति । अतोऽसङ्करेण युध्येरन् । महासङ्कुलयुद्धेतु संश्रयेरन्महागजानिति । आकुलत्वेनानाथाः पत्त्यश्वरथा महागजानाश्रयेरन् । आकुलत्वापनोदनार्थमिति भावः ॥ २५ ॥

बलानां प्रतियोधविधानमभिधातुमाह–( अश्वस्येति ) अश्वस्य प्रतिकक्षभूता योद्धारः पादचारा इत्यर्थः, पुरुषास्त्रयो भवन्ति । इत्यग्रतः एवम्भूताः पश्चाश्वा विधेयाः कुञ्जरस्य च ॥ २६ ॥

पादगोपांश्च तावन्तः पुरुषा दश पञ्च च।
विधानमिति नागस्य कथितं स्यन्दनस्य च ॥ २७ ॥
अनीकमिति विज्ञेयमिति कल्प्या नव द्विपाः।
अनीकस्य च रन्ध्रं तु पञ्चचापं प्रचक्षते ॥ २८ ॥
इत्यनीकविधानेन स्थापयेद् व्यूहसम्पदः।

---

पादगोपाश्च तावन्त इति । हस्तिनः पादरक्षकास्तावन्त एव पञ्चाश्वा पञ्चदशपुरुषान्विता विधेयाः । ते चरणमूलस्थाः, प्रतियोद्धारस्तु पुरस्सरा इति विशेषः। विधानमिति । एकस्य हस्तिनो व्यू विधानविधानमेतदुक्तम्। स्यन्दनस्य चेति। द्विविधो हि व्यूहः शुद्धो व्यामिश्रश्चेति । तत्र शुद्धो हस्तिव्यूहो रथव्यूहश्च। यथा हस्तिव्यूहस्येदं विधानं तथा रथव्यूहस्यापि द्रष्टव्यम्। व्यामिश्रस्य तु विधानं वक्ष्यति ॥ २७ ॥

इति कल्प्या नव द्विपा इति । एक हस्ति विधानेन प्रत्येकं नव द्विपाः कल्पनीयाः । तच्चानीकमिति विज्ञेयम् । तथा चोक्तम्—त्रीणि त्रिकाण्यनीकमिति । ( कौ० अ० १०–५–१५५ ) एवमनीके पञ्चचत्वारिंशद्रथाः, शते पञ्चत्रिंशच्च पुरुषाः प्रतियोद्धारो भवन्ति । तावन्तश्चाश्वपुरुषा पादगोपा इति । अनीकस्य रन्ध्रमिति, द्वयोरनीकयोरसम्बाधार्थमन्तरं पञ्चधनुःप्रमाणम् ॥ २८ ॥

व्यूहसम्पदः—व्यूहप्रकारान्, अनीकसमुदायत्वाद्व्यूहस्येति । अनीकभेदानाह—उरस्य कक्षपक्षांश्चेति। मध्ये त्रिकत्रय कल्पितमनीकमुरस्यम्। तस्य पार्श्वयोस्तत्प्रमाणौ कक्षस्थानीयौ कक्षौ । ततो बहिरुभयतः पक्षस्थानीयौ पक्षा

---

( पादगोपाश्चेत्यादि ) पादगोपांश्च तावन्तः पृथक् पुरुषाः पञ्चदश कार्याः। एवमेकस्य नागस्य पञ्चाश्वास्त्रिंशच्च पुरुषा भवन्तीति, एकनागपरिकल्पने इदं विधानमिति नागस्य कथितम् स्यन्दनस्य च पादगोपास्तावन्तः॥२७॥

( अनीकमितीति ) अनीकं व्यूहाङ्गमित्युक्तक्रमेणाश्वपदातियुक्ता नव द्विपा अनीकमिति प्रकल्प्य कल्पनीयाः। तथा चानीकस्य रन्ध्रं चानीकानामन्तरालानि च पञ्चचापानि पञ्चविंशत्यरत्निप्रमाणानि भवन्तीत्यर्थः ॥ २८ ॥

( इत्यनीकेत्यादि ) नवद्विपपरिकल्पितेन । स्थापयेदिति व्यूहसम्पदो

उरस्यकक्षपक्षांश्च तुल्यानेतान् प्रचक्षते ॥ २९ ॥
उरः कक्षौ च पक्षौ च मध्यः पृष्ठं प्रतिग्रहः ।
कोटी च व्यूहशास्त्रज्ञैः सप्ताङ्गो व्यूह इष्यते ॥ ३० ॥
उरस्यकक्षपक्षैस्तु व्यूहोऽयं सप्रतिग्रहः ।

---

।विति । तुल्यानेतान् प्रचक्षते । एवमस्मिन् पञ्चानीके व्यूहे पञ्चचत्वारिंशत् हस्तिनो भवन्ति । द्वे शते पञ्चविंशतिश्चाश्वाः । षट् शतानि पञ्चसप्ततिश्च पुरुषाः प्रतियोद्धारः तावन्तश्च पादगोपा इति ॥ २९ ॥

सप्ताङ्गो व्यूह इष्यते, पञ्चानीक एव । तद्यथा—उरस्यं कक्षौ पक्षौ च त्रीण्यङ्गानि स्थापयित्वा तेषामेवं उद्देशेन पृष्ठतः प्रोरस्यं प्रकक्षौ प्रपक्षौ च स्थापयेत् । तत्र प्रोरस्यो मध्य उच्यन्ते, प्रकक्षौ पृष्ठं, प्रपक्षौ कोटी इत्यपराणि त्रीण्यङ्गानि, प्रतिग्रहश्च सप्तममङ्गम् । सोऽपि विच्छिन्नसंन्धानहेतुत्वाद्व्यूहेऽन्तर्भवति ॥ ३० ॥

तत्र सप्ताङ्गे मतभेदं दर्शयितुमाह—उरस्यकक्षपक्षैस्त्विति । अयं षडनीको राजस्थानलक्षणेन प्रतिग्रहेण सह बृहस्पतेर्व्यूह विभागः । एष एव शुक्रस्य

---

बलर्द्धीः । उरस्यं व्यूहस्योरसि मध्ये रचितं भवति तदुरस्यमित्युच्यते । कक्षायां कक्ष्यम् । उरसः पार्श्वयोर्भवे कक्ष्ये अनीके, कक्षस्थानयोर्भवत्वात् । कक्ष्ययोरुतान्ते पक्षस्थानप्रभवत्वात् पक्ष्ये अनीके । एतान्युरस्यकक्ष्यपक्ष्याणि तुल्यानि समाद्विपसङ्ख्याकानि परिचक्षत इति ॥ २९ ॥

( उर इत्यादि ) उर इत्युरस्यम् । कक्ष्यमिति—उरस्यस्योभयपार्श्वस्थितं द्विविधमप्येकतयेष्यते । तथैव पक्ष्यम् । कोटिः पक्षयोर्बहिस्थितमनीकं कोटिसंज्ञितम् । तद द्विविधमप्येकतयेष्टम् । मध्यमिति । उरसः पृष्ठतोऽवस्थितमनीकं मध्यम् । मध्यस्यापि पृष्ठतोऽवस्थितं पृष्ठमुच्यते । प्रतिग्रह इति । पृष्ठाख्यानीकात् द्विशतधनुर्व्यवहितं पृष्ठतोऽवस्थितं राजावस्थानं प्रतिग्रह उच्यते । इत्येवं व्यूह शास्त्रज्ञैः सप्ताङ्गो व्यूह इष्यते । तद्यथा—उरस्य—कक्ष्य पक्ष्य -कोटि--मध्य--पृष्ठ--प्रतिग्रहाङ्गैरिति ॥ ३० ॥

आचार्यमतान्यभिधातुमाह—( उरस्येत्यादि ) उरस्यं कक्ष्यं पक्ष्यं प्रतिग्रहश्चेत्येवंविधो व्यूहो विज्ञातो गुरोर्बृहस्पतेः । ( अत्र प्रोरस्यप्रकक्ष्यप्रपक्ष्यापरप

गुरोरेषं च शुक्रस्य कक्षाभ्यां परिवर्जितः ॥ ३१ ॥
अभेद्याः कुलजा मौला लब्धलक्षाः प्रहारिणः ।
सेनाङ्गपतयः कार्या युद्धदृष्टप्रतिक्रियाः ॥ ३२ ॥
प्रवीरपुरुषैरेते तिष्ठेयुः परिवारिताः ।
अभेदेनैव युध्येरन् रक्षेयुश्च परस्परम् ॥ ३३ ॥
फल्गु सैन्यस्य यत्किञ्चिन्मध्ये व्यूहस्य तद्भवेत् ।

---

कक्षाभ्यां परिवर्जितश्चतुरनीक इत्यर्थः । प्रपक्ष पक्षोरस्य प्रोरस्यास्तूभयोरपि यथासम्भवं द्रष्टव्याः तत्र शुक्रस्य पञ्चाङ्गो व्यूहः, कक्षप्रकक्षाभावात् । बृहस्पतेस्तु—सप्ताङ्गः ॥ ३१ ॥

एवं व्यूहविधानमुक्त्वा सारफल्गुबलविनियोगं चतुर्भिः श्लोकैर्दर्शयति अभेद्या इत्यादि । अभेद्याः परबलस्य । लब्धलक्षाः प्रतापवन्तः । प्रहारिणः शूराः । ते व्यवस्थाकरणाय सेनाङ्गस्य पतयः कार्याः । तथा चोक्तम्—"अङ्गदशकस्यैकः पतिः, पतिदशकस्यैकः सेनापतिः, तद्दशकस्यैको नायक" इति । युद्धदृष्टप्रतिक्रियाः, युध्ये दृष्टा प्रतिक्रिया प्रतिविधानं यैरिति ॥ ३२ ॥

एते—सेनाङ्गपतयः । तिष्ठेयुः परिवारिताः, तद्वशे प्रवीरपुरुषैः स्थातव्यमित्यर्थात् कथयति । अभेदेन सम्भूय ॥ ३३ ॥

सैन्यस्य—चतुरङ्गस्य । यत्किञ्चिदसारं सैन्यं, तद्व्यूहस्य मध्ये प्रोरस्ये

---

यायाः मध्यपृष्ठकोटयः उरस्यकक्ष्यपक्ष्यपदैः सङ्गृहीताः इति सप्ताङ्गः )। शुक्रस्य मतेनायमेव व्यूहः पक्षाभ्यां ( कक्षाभ्यां ? ) परिवर्जितो भवति । ( तथा च कक्षप्रकक्षाभ्यां विना पञ्चाङ्ग इत्यर्थः ) ॥ ३१ ॥

( अभेद्या कुलजा मौला इत्यादि ) लब्धलक्ष्या इति प्रहर्तुं कल्पिता लक्ष्या लब्धा यैः । तमभिहर्तुं प्रारब्धा इत्यर्थः । सेनाङ्गपतय इति हस्त्यश्वादि सेनाङ्गानां चतुर्णां पतयोऽधिष्ठातारः कार्याः । शेषं प्रतीतम् ॥ ३२ ॥

सेनाङ्गप्रतिविधेयमाह—( प्रवीरैरित्यादि )...मिति शेषं प्रतीतम् ॥३३॥

( फल्गु सैन्यामीति ) फल्ग्वसारं सैन्यं च यत् पत्त्यश्वरथद्विपादिकं मध्ये व्यूहस्य सप्ताङ्गस्य तद्भवेत् । युद्ध ( व्यूहे ? ) मध्याङ्गपरिकल्पना तत्रैवेति

युद्धवस्तु च यत्किञ्चित् प्रायस्तज्जघने भवेत् ॥ ३४ ॥
युद्धार्थं युद्धकुशलं मुण्डानीकं प्रयोजयेत् ।
युद्धं हि नायकप्राणं हन्येत तदनायकम् ॥ ३५ ॥
( श्येनः सूची च वज्रश्च शकटं मकरध्वजः ।
इत्येवमादयो व्यूहाः शास्त्रज्ञैः समुदाहृताः ॥ )
व्यूहोऽनुपृष्ठमचलः पत्त्यश्वरथदन्तिभिः ।

---

भवेत् । एवं तत्सहिष्णु भवति । युद्धवस्तु—यन्त्रायुधाद्युपकरणम् । जघने—पृष्ठे ॥ ३४ ॥

मुण्डानीकमिति । यद्राजस्थानमध्वजत्वादनभिलक्ष्यभूतं तन्मुण्डानीकम् । युद्धकुशलं सैन्यं युद्धार्थं बलमध्ये नियोजयेत् । अन्यथा तत्सैन्यमनायकं हन्येत । उक्तञ्च—पितृपुत्रभ्रातृकाणामायुधीयानामध्वजं मुण्डानकिं राजस्थानं कुर्वीते" ति । ( कौ० १०—३—१५० ) ॥ ३५ ॥

व्यामिश्रं व्यूहविधानं पञ्चभिः श्लोकैर्दर्शयति—व्यूह इत्यादि । अनुपृष्ठमिति । पुरस्तात्पत्तयः, तत्पृष्ठेऽश्वाः । तत्पृष्ठे रथाः । तत्पृष्ठे हस्तिन इत्यचलो

---

तत एवेति ? ) भावः । युद्धवस्तु यत्किञ्चिच्छस्त्रावरणौषधजलाहारादि प्रायस्तज्जघने पृष्ठानीके भवेत् । जप्पनपरिकल्पनादिप्रसङ्गो व्यूह ( हेऽतः ? ) एवेति ॥ ३४ ॥

प्रतिग्रहानीकस्यैव विशेषमाह—( युद्धार्थमित्यादि ) युद्धं सङ्ग्रामस्तदर्थं युद्धकुशलो विजिगीषुः, वीरपुरुषकल्पितं छत्रचामरादिरहितं सुसन्नद्धं मुण्डानीकमित्युच्यते, ( तत्प्रयोजयेत् ) । तत्रस्थो राजा नरैर्न विभाव्यते । ततश्च रक्षितो भवति । हि यस्मात् युद्धं नायकप्राणं, विजिगीषुरेव ( नायकः ) स्वप्राणभूतः । हन्येत तदनायकं—तत्रैव प्रतिग्रहस्थान एव ( अनायकं सैन्यं हन्येत ) । तद्भयात् ( सर्वे ) युध्यन्त इति भाव ॥ ३५ ॥

दण्डाकाररहितान् व्यूहानभिधातुमाह—( व्यूहोऽनुपृष्ठमचल इति ) अनुपृष्ठमिति वीप्साद्रष्टव्या । अनुपृष्ठमनुपृष्ठं पत्त्यश्वरथदन्तिभिर्विन्यस्तैरयं व्यूहोऽचलनामको भवति । तद्यथा—पत्तीनां पृष्ठतोऽश्वाः । अश्वानां पृष्ठतो रथाः । रथानां पृष्ठतो दन्तिनः । अचलत्वं च सर्वेषां पृष्ठतः स्थितैः दन्तिभिरिति भवति ।

तथा प्रतिहतो ज्ञेयो हस्त्यश्वरथपत्तिभिः ॥ ३६ ॥
उरसि स्थापयेन्नागान् प्रचण्डान् कक्षयो रथान्।
हयांश्च पक्षयोर्व्यूहो मध्यभेदी प्रकीर्तितः ॥ ३७ ॥
मध्यदेशे हयानीकं रथानीकं तु कक्षयोः।
पक्षयोश्च गजानीकं व्यूहोऽन्तभिदयं स्मृतः ॥ ३८ ॥
रथस्थाने हयान् दद्यात् पदातींश्च हयाश्रये।
रथाभावे तु सर्वत्र नागानेव प्रकल्पयेत् ॥ ९ ॥
विभज्य प्रक्षिपेद् व्यूहे रथांश्वरथकुञ्जरान्।

---

नाम। तथा हस्तिनोऽश्वा रथाः पत्तयश्चानुपृष्ठमित्यप्रतिहतसंज्ञः। तदुभयं चतुरनीकम् ॥ ३६ ॥

उरसि—उरस्ये। मध्यभेदी हस्तिभिर्दृढीकृतमध्यत्वान्मन्येन परबलस्य भेदनशीलः ॥ ३७ ॥

मध्यदेशे ·उरस्ये। व्यूहोऽन्तयोर्दृढोऽन्तभेदी। अन्तयोर्हस्तिभिर्दृढीकृतत्वात् ॥ ३८ ॥

रथस्थाने—कक्षयोरित्यर्थः। हयाश्रये मध्यदेशे। पक्षयोस्तु गजानीकं स्यादेवेत्येवमपरोऽन्तभेदी। रथाभावेत्विति। सर्वत्र व्यामिश्रे व्यूहे रथाभावे तत्स्थाने नागानेव प्रकल्पयेदश्वपदातीनामस्थिरत्वात् ॥ ३९ ॥

विभज्य प्रक्षिपेदिति शुद्धं व्यामिश्रं वा व्यूहं कल्पयित्वा यदि दण्डबाहुल्यं

---

( तथा हस्त्यश्वरथपत्तिभिः अप्रतिहतो ज्ञेयः। ) ॥ ३६ ॥

( उरसीत्यादि ) उरसि स्थापयेन्नागान् प्रचण्डान् कक्षयो रथान् हयांश्च पक्षयोर्व्यूहो मध्यभेदी प्रकीर्तितः, मध्यं शत्रुबलस्य भिनत्तीति ॥ ३७ ॥

( मध्यदेश इत्यादि )...परानीकमन्तस्थितैर्हस्तिभिरन्ते भिनत्तीति व्यूहोऽयमन्ताभिदिति ॥ ३८ ॥

बलाङ्गानां कस्यचिदभावे व्यूहविधौ विधेयमाह—( रथस्थान इति ) रथस्थाने हयान् रथाभावे सति, हयाभावे हयाश्रये हस्थाने पदातीन्, रथाभावे नागानेव दद्यात्सर्वत्रेति प्रतीतम् ॥ ३९ ॥

बलानां बाहुल्ये विधेयमाह—( विभज्येति ) अनीके पत्त्यश्वरथकुञ्जरान्

यदि स्याद् दण्डबाहुल्यं स चावापः प्रकीर्तितः ॥ ४० ॥
मण्डलोऽसंहतो भोगो दण्डश्चेति मनीषिभिः ।
चत्वारः प्रकृतिव्यूहा भेदास्त्वेषां प्रकीर्तिताः ॥ ४१ ॥
तिर्यग्वृत्तिस्तुदण्डः स्याद् भोगोऽन्वावृत्तिरेव च ।

---

स्यात्तद्दाढर्यार्थं पुनस्तस्मिन् रथादीन् विभज्य प्रक्षिपेत् । तत्र रथादींस्त्रीन् भागान् कृत्वा भागमेकं कक्षयोर्द्वितीयं पक्षयोस्तृतीयमुरस्ये प्रक्षिपेत् । तथा हस्तिनामश्वानां चायमेव विभागः । तथा चोक्तं—"रथानां द्वौ त्रिभागावङ्गेष्वावप्रच्छेषनुरस्यवस्थापयेत् । तेन हस्तिनामश्वानां चावापा व्याख्याताः" इति । ( कौ० अ० १०—५—१५५ ) स चावापः प्रकीर्तितः समन्तादुप्यते प्रक्षिप्यते इति कृत्वा ॥ ४० ॥

इदानीं संस्थानतो व्यूहभेदांश्चतुर्दशभिः श्लोकैर्दर्शयति मण्डल इत्यादि । एते च मण्डलादयश्चत्वारः स्वस्वभेदापेक्षया प्रकृतिव्यूहाः ॥ ४१ ॥

एषां स्वरूपभेदमाह—तिर्यग्वृत्तिरित्यादि । पक्षादीनां तिर्यग्वृत्तिर्दण्डः ।

---

विभज्य साकारे वा व्यूहे प्रक्षिपेत, यदि स्याद्दण्डबाहुल्यं बलप्राचुर्यं स व्यूह आवापः प्रकीर्तितः, अधिकबलानामावपनात् प्रक्षेपणात् ॥ ४० ॥

साकारव्यूहानां तद्भेदानां चोद्देशमभिधातुमाह—( मण्डल इत्यादि ) मण्डलश्चासंहतश्च मण्डलासंहतौ वक्ष्यमाणलक्षणौ । भोगो दण्डश्चैतावपि वक्ष्यमाणलक्षणावेवेति चत्वार एव मनीषिभिः प्रकृतिव्यूहाः प्रकीर्तिताः ॥ ४१ ॥

दण्डादिव्यूहानां स्वरूपमभिधातुमाह-( तिर्यग्वृत्तिरित्यादि ) तिर्यग्वृत्तिर्वर्तनमवस्थितिर्यस्यासौ दण्डः । दण्डस्य वंशादिकस्य वामदक्षिणभागावस्थितप्रान्तस्य तिर्यग्वृत्तिर्भवति । तादृशस्येव दण्डस्य व्यूहस्य भवतीत्यर्थः । यथा—

| पक्षः कक्षः उरस्य कक्षः पक्षः |
|---|
| प्रतिग्रहः |

भोगोऽन्वावृत्तिरेवचेति । भोग इति सर्पभोगाकारत्वात् । अन्वावृत्तिस्तावद्यस्य

